प्रकाशक—
श्रेष्ठी सुरेन्द्रभाई भायाभाई
अहमदाबाद

पुस्तकप्राप्तिस्थानम्

श्रीमोहनलालजी जैन ज्ञानभण्डार

ठि. गोपीपुरा, सुरत

मूल्यम्

अष्टौ रौप्यमुद्राः।

मुद्रक—
शाह गुलाबचन्द्र लल्लुभाई
श्री महोदय प्रिन्टिंग प्रेस
दाणापीठ-भावनगर.

## ॥ प्रकाशकीयम् ॥

दर्शनरत्नरत्नाकरस्यायं द्वितीयो विभागः प्रकटीक्रियते । ग्रन्थेऽस्मिन् आगमविषयप्राचुर्यं जिज्ञासूनां मनः प्रीणयिष्यतीति ग्रन्थदर्शनत एव ज्ञास्यन्ति तज्ज्ञाः ।

विषयकाठिन्यं ग्रन्थकर्त्रा यथाऽपाकृतं तदपि न तिरोहितं ग्रन्थे। एतादृशग्रन्थरत्नस्य प्रकाशनमस्माभिर्निहितं तदेवास्माकमहोवादस्य निमित्तं तथा तत्पठनकर्तॄणामपि स्यादित्याशास्यते ॥

—इति निवेदकः–प्रकाशकः ।

नकल

२ शा. वोरीदासजी सेसमलजी, कोलाबा
२ शा. भीखमचद पुनमचंद, पारसीगली
२ शा प्रेमचद मीश्रीमलजी, गुलालवाडी ३ जो भोइवाडो
२ शा. मानमल चेनमलजी, गुलालवाडी
२ शा. उमेदमल मेघाजी, ठाकोरद्वार
२ शा. हरीदास शोभागमल, ७६ जुनी हनुमानगली
२ जे. के. एन्ड सन्स, हनुमानगली
२ शा वालाजी मोतीजी, वादनवाडी
२ भंडारी देवीचंद मीश्रीमल लेटावाला, बेंगलोर
२ शा माणेकचद झवेरचंद, कायथमहोला, सुरत
२ शा. अंबालाल हेमचद खंभातवाला, लुहारचाल
२ शा. चीमनलाल उमाजी, गणेशवाडी
१ शा. पनाजी देवीजी, वादनवाडी, मोर

नकल

१ शा. खगारमल कपूरचंद, वादनवाडी, रत्नागिरी
१ शा. मनुतमल आइदानमल, फादावाडी
१ शा. मघनलाल उमाजी, मालवाडा
१ शा. कातिलाल वरघीलाल राघनपुरवाला गुलालवाडी
१ शा. कपूरचद तेजमालजी, गुलालवाडी
१ शा. उमेदलाल सागरमल, ,,
१ शा. हीराचंद सरदारमलजी, ,,
१ शा. माणेकचद घुलाजी, ,,
१ शा. माणेकलाल हरखचंद, ,,
१ शा. फुटरमल मुलचंद ,,
१ शा. जुगराज पारसमल ,,
१ शा. जुहारमल पारसमल ,,
१ शा. चुनिलाल मोहनलाल ,,

नकल

१ शा. वस्तिमल उमेदमल वगडीवाला, जामली महोला
१ शा सुखराज ओटरमल, जामली महोला
१ शा धनरुपजी देवाजी, दागीना बजार
१ श्री पार्श्वनाथ जैन लायब्रेरी, चाघोरी
१ शा वनाजी धुलाजी, नवी हनुमानगली
१ शा मनसुखलाल ओघडदास, मोतीशाहनी चाल
१ शा माधाजी मेघाजी जे जे. होस्पीताल
१ व्हेन पारवती मुलचद मालाना धर्मपत्नी
हृ. नानचद मूलचद, मलाड गोतमनिवास
१ शा. देवचद जेठालाल मलाड देवचदचाल
१ शा. वाडीलाल जेठालाल, पाजरापोल सर्वोदयनगर
१ शा मुलचद भांणाजी साचोरवाला, कामाठीपुरा
१ शा उकाजी चेनाजी, कामाठीपुरा

नकल

१ शा. केशरीमल शोभाजी, कामाठीपुरा
१ शा मंछालाल अमरचंद घानेरावाला, सी. पी. टेन्क
१ शा. भीमराज वेचरदास घानेरावाला,
गोलवाड ओसवाल भुवन
१ उमेदमल राजाजी, मोरारजी गोकलदास मारकेट
१ शा. छगनलाल छोगमल, गुलालवाडी ३जा भोइवाडा
१ शा मंगनीमल दलीचदजी, चीरा बजार
१ शा. वसनजीभाइ लधा, भात बजार
१ शा. कल्याणजी पासु वारदानवाला, भात बजार
१ शा. हसराज लालजी, भातबजार
१ शा. वेरसी लधाभाइ नलीयावाला, भात बजार
१ शा. शीवजी मावजी गजीवाला ,,
१ शा. वेलजी उमरशी सुथरीवाला ,,

नकल

१ श्री हुकममुनिजी जैन ज्ञानमदिर, सुरत

१ श्री प्रीतिसूरिजी ज्ञानशाला, रादेर

१ शा. गभीरदास ओघडदास, ताबाकाटा सुवर बजार

१ शा. बालचद घनराज, अघेरी

नकल

१ शेठ मोहनलाल हेमचद, वीलापारला

१ शेठ भोगीलाल चुनिलाल, वीलापारला

१ शा. छगनलाल घनजी, सगरामपरा, सुरत

ॐ ह्रीँ श्रीँ अर्हं नमः ॥

सकललब्धिनिधानाय श्रीगौतमस्वामिने नमः ॥

श्रीमदर्हत्प्रवचनं विजयतेतराम् ॥

आचार्यप्रवर–श्रीइन्द्रनन्दिसूरिवर्यविनेयाणु–सिद्धान्तसारसङ्कलितः

# दर्शनरत्नरत्नाकरः ॥ ( द्वितीयो विभागः )



## अथ तृतीया लहरी–प्रथमस्तरङ्गः ॥

वित्तेष्टप्रथनमरुन्महीरुहाभान्, पंचेषुप्रदरनिवारणप्रवीणान् ।
मुक्तिश्रीवरपरमेष्ठिनः प्रमोदात्, पंचांगप्रणिपुरस्सरं प्रणौमि ॥ १ ॥

अथ श्रीमारुदेवस्य देवस्यदेवस्य पूर्वस्यां लहर्यां कुलकरकुलोत्पत्तिप्रभृतिपञ्चमावबोधप्राप्तिपर्यवस्तुतिनिर्मितांतस्य वर्णनस्य विहितत्वादेतस्यां तृतीयलहर्यां तस्यैव निखिलजनप्रशस्यनिरपदेशसुकृतोपदेशस्वरूपं प्ररूप्यते दिग्मात्रतस्तथाहि । एवं यथास्थानस्थितासु सुरासुरनृसंसत्सु भगवान् श्रीमान् मारुदेवः सर्वजगज्जन्तुजातहितैकतानमतिस्त्रैलोक्यपतिः सजल-

सकलपरमाभिवाञ्छितपरिपूरणसुरतरोरुपमये समाचष्टामपवर्गमार्गम्। तथाहि—

"भो भव्याः! सनातनसुखसंप्राप्तये पथ्यं सम्यग्ज्ञानदर्शनचारित्रतपःस्वरूपापुनर्भवपुरायन। तत्र ज्ञानं पञ्चविधमाभिनिबोधिकं श्रुतमवधिर्मनःपर्यवः केवलं च। तत्रार्थाभिमुखो नियतो बोधोऽभिनिबोधः स एवाभिनिबोधिकं, यथा विनय एव वैनयिकं, तच्च तज्ज्ञानं चाभिनिबोधिकज्ञानम्। श्रूयत इति श्रुतं, शब्द एव भावश्रुतहेतुत्वादिति भावः। अनयोश्च स्वाम्यादिभिः साम्यं, तथाहि—य एव मतेः स्वामी स एव श्रुतस्य, यथा स्थितिरपि तुल्यैवानयोः, प्रवाहतोऽतीतादिः सर्व एव समयोऽप्रतिपतितैकजीवापेक्षया च साधिकषट्षष्टिसागरोपमाणि, तथा उभे अपि क्षायोपशमिके, आदेशतः सर्वद्रव्यादिविषये, अस्ववरोधे च। तथा अवधीयते एतद्रूपवदेवास्मिन्नित्यवधिरेतप्रवृत्ता, रूपिद्रव्यमर्यादा वा तस्या ज्ञानमवधिज्ञानम्। अस्यापि मतिश्रुतसंवेदनेन छद्मस्थस्वामित्व-तुल्यस्थितित्व-विपर्ययभवनादिभिः समानत्वमवसेयम्। तथा अयनमयः परिः सर्वतोऽयः पर्ययः मनसि मनसो वा पर्ययो मनःपर्ययः सर्वतस्तत्परिच्छेदः स एव ज्ञानमेतच्च मनुष्यक्षेत्रवर्तिसंज्ञिपञ्चेन्द्रियमनोद्रव्यालम्बनेन चाऽवसेयम्। अस्याप्यवधिसंवेदनेन समं समत्वं छद्मस्थस्वामित्व-पुद्गलमात्रक्षायोपशमिकप्रत्यक्षत्वैः। केवलमसहायम्। एतेषां पञ्चसंवेदनानां मध्ये प्रथमं मतिज्ञानस्य भेदाः प्रादुर्मा भेदा विभाव्यन्ते। तथाहि—मतिज्ञानमष्टाविंशतिभेदं समासतो व्यासतस्तु त्रिशतीसमधिकषट्त्रिंशद्भेदम्। तत्र प्रथममष्टाविंशति प्रथमं दर्शनं न ज्ञानमिति? उच्यते ज्ञानस्य प्रथमाऽऽवरणत्वाद्दर्शनस्य चाद्याऽऽवरणत्वात्। न पुनरेषा व्यञ्जनावग्रहोऽन्यथा

ग्रहश्च । तत्र व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेंद्रियस्य शब्दादिपरिणतद्रव्याणां च यः परस्परं सम्बन्धः । सम्बन्धे हि सति सोऽर्थः श्रोत्रादींद्रियेण ग्रहीतुं शक्यते नान्यथा, ततो व्यजनेन संबंधेनावग्रहणं संबध्यमानस्यार्थस्य शब्दादिरूपस्याऽव्यक्तरूपः परिच्छेदो व्यंजनावग्रहः; स चातर्मुहूर्त्तमानः । ननु व्यजनावग्रहवेलायां न किमपि संवेदयामहे तत्कथमसौ ज्ञानरूपः ? उच्यतेऽव्यक्तत्वान्न संवेद्यते । तदस्तित्वे च मानमनुमानम् । तथाहि–प्रथमसमयेऽपि शब्दादिपरिणतवद्द्रव्याणामुपकरणेन्द्रियस्य चान्योन्यसंपृक्तता काचिदपि चेद् ज्ञानमात्रा न भवेत्तवो द्वितीयेऽपि समये न स्याद्विशेषाभावात्, एवं यावच्चरमसमयेऽपि । अथ च चरमसमयेऽसंख्यतमेऽर्थावग्रहरूपं ज्ञानं जायमानमुपलभ्यते ततः प्रागरे काऽपि कियती ज्ञानमात्रा प्रतिपत्तव्या ततः स्थितमेतत् व्यंजनावग्रहो ज्ञानरूपः । परं तज्ज्ञानमव्यक्तं विज्ञेयं यत्तु नंदिसूत्रे 'नेगसमयपविट्ठा पुग्गला गहणमागच्छंति, जाव नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छति, किंतु असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति' इत्यादि प्रतिपादित तदव्यक्तमर्थावग्रहरूपं विज्ञानमपेक्ष्य प्रतिपादितं संभाव्यते । अय भावः असंख्यातसमयप्रविष्टा एव पुद्गला अर्थावग्रहरूपं विज्ञानं जनयंतीति । केचित्त्वेवमाचक्षते–अर्थावबोधात्मा द्रव्यप्रवेशादिरूप एव व्यंजनावग्रहोऽंतर्मुहूर्त्तं स्यान्मनसोऽव्यापारात् । इह च चरमसमयप्रविष्टा एव पुद्गलाः साक्षादर्थावग्रहरूपविज्ञानजनकाः । अन्येस्त्विंद्रियक्षयोपशमहेतवः ज्ञानं त्वर्थस्यावबोधकारणमात्रत्वेन कारणे कार्योपचारात् । अयं च व्यंजनावग्रहो मनोनयनवर्जेंद्रियचतुष्केण चतूरूपो विज्ञेयः ।

अथाऽर्थावग्रहस्वरूपं प्ररूपं प्ररूप्यते । अर्थावग्रहो द्वेधा । नैश्चयिको व्यावहारिकश्च । तत्र नामस्वरूपजातिगुणक्रियाद्रव्यादि-

यथेन्द्रियप्रत्यक्षस्याव्यक्तस्य सामान्यमात्ररूपस्य वस्तुनो ग्राहक एकसमयमात्रमानो निरुपचरितः प्रथमो नैगमविशेषोऽर्थावग्रहः । मामयिदं ज्ञानं निश्चयतो योगिन एव जानातीति नैगमविशेषोऽभ्युपगम्यते । अनेन च रूपादिभ्यो व्यावृत्तमव्यक्तं यत्किंचिद् वस्तु मात्रान्यं गृह्यते । ततः किमिदं वस्तु मया गृहीतं शब्दोऽशब्दो वेति संशयोत्तरकालमन्वयव्यतिरेकधर्म प्रत्ययनिरासद्वारेण ततः सद्भूतार्थविशेषोपादानाभिमुखासद्भूतार्थपरित्यागाभिमुखा प्रायः माधुर्यत्वादयः शब्दधर्मा अत्र दृश्यंते न तु रूपादिधर्मा इत्येवंरूपा नैगमविशेषो ईहा जायते । ततः शब्द एवायमित्यादिनैगमविशेषोऽवायः । अस्तु शब्दोऽयं शांखः शार्ङ्गो वेति संशयानंतरं प्रायोऽत्र माधुर्यादयः शंखधर्मा दृश्यंते न निष्ठुरत्वादयः शार्ङ्गधर्मा इत्यावायरूपा सद्भूतार्थाभिमुखा व्यावहारिकी ईहा । ततः शांख एवायं न तु शार्ङ्ग इति व्यावहारिकोऽवायः । नैगमविषयावायो व्यावहारिकावायापेक्षयोपचारेण व्यावहारिकोऽर्थावग्रहोऽपि भण्यते । यथाहि—यस्मादनु ईहावायौ स्यातां तत्र सामान्यं गृह्णाति सोऽर्थावग्रहो यथाद्यो नैगमिकः । स्यातां च शब्द एवायमिति नैगमिकावायानंतरमीहावायौ । गृह्णाति चार्थं सामान्यं शंखोऽयमिति भाविविशेषापेक्षया तस्मादर्थावग्रहोऽयं व्यावहारिकः । एवं च तत्त्वतो नैगमिकार्थावग्रहादनु अंत्यं विशेषं यावत् पुनरीहा पुनरवाय इत्येवं भवति । एवं सर्वत्र योऽपायोऽवायोऽपि भाविविशेषापेक्षया सामान्यावलंबनत्वेन भावीहावायापेक्षया चार्थावग्रह इत्युपचर्यते । उपचारनिमित्तं च सामान्यग्रहणभावीहावायौ च । एवं च तावद् ज्ञेयं यावद् वस्तुनोऽन्त्यो विशेषः । यत्र च समारूढजिज्ञासा निवर्तेत स अन्त्यो विशेषः । ते चायं सामान्यविशेषापेक्षयाऽर्थावग्रहेहावायाः स्युः । तथा च एवं 'सामग्रमिवमात्मं' इत्यादि उक्त्वा धारणा प्रादुर्भवतीति सा च त्रिधा—अविच्युति-वासना

स्मृतिभेदात्तत्रावायेन निश्चितेऽर्थे तत्समयादूर्ध्वमपि शब्द एवायं शब्द एवायमित्यविच्युत्यांतर्मुहूर्त्तं यावद् काप्यऽवाय-
प्रवृत्तिः सा प्रथमप्रवृत्तावायाधिकत्वेनाविच्युतिर्धारणा १, ततस्तयाऽऽहितो यः संस्कारस्तद्रूपा क्षयोपशमापरपर्याया
वासना नाम द्वितीया धारणा या स्मृतेर्बीजभूता २, ततः कालांतरे वासनावशात्तदर्थस्येंद्रियैरुपलब्धस्यानुपलब्धस्य
वा या मनसि स्मृतिः सा तृतीया ३। एताश्च त्रिस्रोऽप्यवायनिश्चितस्यार्थस्य धरणलक्षणसामान्यान्वर्थयोराश्रयणा-
द्धारणा शब्दवाच्याः। ननु नैश्चयिकोऽर्थावग्रहोऽनध्यवसाय एव इति कथं तस्य ज्ञानता ? उच्यते योग्यतया तद्भावा-
दन्यथा तत्कार्येऽपायेऽपि न स्यात्। सुप्तमूर्च्छितादीनामेव हि ज्ञानमनध्यवसायः। यद्वाऽनध्यवसायादयो ज्ञानमेव
सम्यग्दृष्टिसंशयादीनां ज्ञानत्वात्। ननु यदि संशयादयोऽपि मतिज्ञानं तर्हि मतेः सप्तविधत्वप्रसंगः ? न, यतोऽनध्यव-
सायस्तावत्सामान्यग्राहित्वेनाऽवग्रहेऽतर्भवति संशयोऽपीहाप्रकारत्वात्तत्कारणत्वाच्च तस्यामेव। यत्तु तस्येहात्व निराक्रियते
तदपि व्यवहारिजनानुवृत्त्या, न तु सर्वथा। विपर्ययस्तु साक्षादवाय एव निश्चयरूपत्वादिति कुतो मतेः श्रुति( ४ )मित-
भेदातिक्रमः संभवेत् तदेव पंचस्विंद्रियेषु षष्ठे च मनसि प्रत्येकमऽर्थावग्रहादिचतुष्टयभावात् षट् चतुर्गुणिता भवंति चतु-
र्विंशतिमिता मतिज्ञानस्य मेदास्ते च व्यंजनावग्रहचतुष्कसमन्विता वसुविंशति( २८ )मिताः समासतो भवंति मतिसंवे-
दनस्य मेदाः। व्यासतस्तु ऋतुसमयसमधिका भवति त्रिशती ( ३३६ ) मेदानां मतिज्ञानस्य; तथाहि–यथा श्रवणयोग्य
देशस्थे तूर्यभरे युगपद् वाद्यमाने कोऽपि श्रोता क्षयोपशम–विशेषादियंतोऽत्र भेरीभांकारा इयंतश्च पणवपाञ्चजन्यादिनिनदा
इति पृथक् पृथक् शब्दसमूहावबोधेन तद्ध्वनिनिवहं बहुमवगृह्णाति १। कश्चन पुनर्नानातूर्यनिनदोऽयमित्यबहुं २।

तथा यदैकमपि शङ्खजन्यादिनिनादं स्निग्धतामाधुर्यत्वमध्यमत्वमन्दत्वादिनानाधर्मोपेतमवैतीति बहुविधं ३। क्वचित् पुनः स्वल्पधर्मान्वितमवैतीत्यबहुविधं ४। क्षिप्रविमृश्यैवावैतीति क्षिप्रं ५। क्वचन पुनश्चिरं विमृश्यैवेत्यक्षिप्रं ६। तथा पताकयाप्तोऽप्यदेवकुलमेतदिति लिङ्गनिश्रां कस्य प्रजायते तन्निश्रितं ७। तद्विपरीतं पुनरनिश्रितं ८। यन्निःसंशयमवैति तन्निश्चितं ९। संदेहयुक्तं पुनरनिश्चितं १०। यदेकदाऽवगतं तदेव सर्वदा यदवगच्छति तद् ध्रुवं ११। यत् पुनः कदाचित् बहुवेत्ति कदाचिदल्पं तदध्रुवम् १२। एवमवग्रहस्य द्वादशभेदा, एवमीहावायधारणानामपि द्वादशभेदानाम्। तत्राष्टाविंशतिस्त्वन(१२)गुणिता भवति षिंशती षट्त्रिंशदधिका मतिसंवेदनभेदानां व्यासतः, किञ्चिन्मात्रं भेदानां व्यासतः किंचि मात्रमेदान् पुनर्भियमानमनन्तभेदमपि स्याम्मतिज्ञानं प्रीतानामानन्त्यात्तत्त्वपोपपद्यमानां च वैचित्र्यादिति। तत्राऽव-ग्रहादीनां कालमानमुच्यते नैश्चयिकोऽर्थावग्रह एकं समयं, व्यंजनावग्रहस्तु जघन्यतः आवलिकाया असंख्येयभागः, उत्कर्षतस्तु संख्येया आवलिकाः, ताश्च प्राणापानपृथक्त्वसमपमाना विज्ञेयाः। व्यावहारिकार्थावग्रहस्य नैश्चयिकव्यावहा-रिकयोरीहापायौ जघन्येनोत्कर्षेण चान्तर्मुहूर्तम्। अविच्युतिस्मृती तु प्रत्येकमन्तर्मुहूर्तमाने स्मृतिरूपाया वासनायास्तु संख्येय समयं संख्येयवर्षवत्सरायुषाम्; असंख्येयवर्षायुषां पुनरसंख्येयकालम् इति भावितं श्रीमद्यवश्यकवृहद्वृत्त्यनुसारेण सविस्तरं मतिज्ञानम्।

अथ श्रुतज्ञानस्वरूपं प्ररूप्यते। तत्र श्रुतज्ञानं विस्तरतोऽनन्तभेदं प्रज्ञापना चेय दिग्मात्रतस्त्वादि-प्रत्येकमक्षरा दीन्यक्षराणि नैकप्रकाराणि, तद् यथा-अत्र अकारः सानुनासिको निरनुनासिकश्च पुनरेकैकस्त्रिधा ह्रस्वो दीर्घः प्लुतश्च,

पुनरेकैकस्त्रिप्रकारः उदात्तोऽनुदात्तः स्वरितश्चेत्येवमवर्णोऽष्टादशभेदः । एवमन्येपीकारप्रभृतयः । तथाऽक्षराणां संयोगा घट पट इति तुरंगः सिंधुर इत्येवमादयोऽनंताः । ननु संख्येयानामकारादीनां कथमनंताः संयोगाः ? उच्यतेऽभिधेयस्य पुद्गलास्तिकायप्रभृतेरनंतत्वाद् भिन्नत्वाच्च, अभिधेयभेदे चाभिधानभेदसिद्ध्याऽनंतसंयोगसिद्धिरभिधेयभेदानंत्यं च यथा परमाणुर्द्विप्रदेशिकस्त्रिप्रदेशिको यावदनंतप्रदेशिक इत्यादि । तथैकस्यापि चानेकाभिधानप्रवृत्तेरभिधेयधर्मभेदो यथा परमाणुर्निरंश इत्यादि, न चैते सर्वथैकाभिधेयवाचका ध्वनयः सर्वशब्दानां भिन्नप्रवृत्तिनिमित्तत्वादित्येवं सर्वद्रव्यपर्यायेष्वायोजनीयम् एवं भिन्नाभिन्नाभिधानसमुद्भूता अनंताः श्रुतज्ञानभेदाः विशेषास्ताश्च सामस्त्येन कथं न वक्तुं पार्यंते समासतस्तु श्रुतज्ञानं चतुर्दशभेदं, तथाहि–अक्षरश्रुतम् १ । अनक्षरश्रुतं २ । संज्ञिश्रुतम् ३ । असंज्ञिश्रुतं ४ । सम्यक्श्रुतं ५ । मिथ्याश्रुतं ६ । सादिश्रुतम् ७ । अनादिश्रुतं ८ । सपर्यवसितम् ९ । अपर्यवसितं १० । गमिकम् ११ । अगमिकम् १२ । अंगप्रविष्टम् १३ । अनंगप्रविष्टं च १४ । तत्राक्षरं त्रिधा संज्ञाक्षरं १ व्यंजनाक्षरं २ लब्ध्यक्षरं ३ च । तत्र संज्ञाक्षरम् अक्षराकारविशेषो यथा घटिकाकारो धकार इत्यादि । तथा व्यंजनाक्षरं सर्वेषां भाष्यमाणमकारप्रभृतिवर्णजातमिति, पर्याभिव्यंजकत्वाच्छब्दस्य । तथा घटः पट इति यदक्षरलाभस्तल्लब्ध्यक्षरम्, एतच्चेंद्रियनोइंद्रियनिमित्तं विज्ञानं श्रुतग्रंथानुसारि विज्ञेयम् । अत्र संज्ञाक्षरं व्यंजनाक्षरं च द्रव्याक्षरमुक्तं श्रुतज्ञानस्य भावाक्षरस्य कारणत्वात् । लब्ध्यक्षरं तु भावाक्षरं विज्ञानात्मकत्वात् १ । अनक्षरश्रुतं तूच्छ्वसनं निश्वसनं निष्ठीवनं काशनं क्षुतं निःसिंघनमनुस्वारवदनुस्वारम् अक्षरमपि यदनुस्वारवदुच्चार्यते हुंकारकरणादिवत् सेंटन चौरमिलनभयादि इत्यादि विज्ञेयं यदुक्तं श्रीमदावश्यकनिर्युक्तौ ' ऊससिअं नीससिअं

सामायिकादि ५ । मिथ्याश्रुतं तु पुराणादि ६ । अथवा सर्वमेव संदर्शिनिभिः परिगृहीतं हेयादेयविभागेन सम्यग्बुद्ध्या विभाव्यमानं सम्यक्श्रुतं, मिथ्यादर्शिनिभिः परिगृहीतं तु हेयादेयविभागविकलतया मिथ्याश्रुतं विज्ञेयं ६ । सादि ७ अनादि ८ सपर्यवसितम् ९ अपर्यवसितं १० । च नयानुसारतो द्रव्यादिचतुष्टयापेक्षयाऽवसेयम् । गमिकं पुनः प्रायोवृत्त्या दृष्टिवादे ११ । अगमिकं पुनः प्रायः कालिकम् १२ । अंगप्रविष्टं तु गणभृद्विरचितम् १३ । अनंगप्रविष्टं पुनः स्थविरविरचितम् १४ । इति प्रपंचितं चतुर्दशधा श्रुतम् । अथवा पर्याय १ पर्यायसमासा–२ ऽक्षरा ३ ऽक्षरसमास ४ पद ५ पदसमास ६ संघात ७ संघातसमास ८ प्रतिपत्ति ९ प्रतिपत्तिसमासा १० ऽनुयोगाऽ ११ ऽनुयोगसमास १२ प्राभृत १३ प्राभृतसमास १४ प्राभृतप्राभृत १५ प्राभृतप्राभृतसमास १६ वस्तु १७ वस्तुसमास १८ पूर्व १९ पूर्वसमास २० भेदेन विंशतिविधं विज्ञेयं श्रुतज्ञानम् । चतुर्दशविधविंशतिविधश्रुतसंवादविधायिनी च द्वे इमे कर्मविपाकगाथे तथाहि–' अक्खर १ सन्नी २ सम्मं, ३ साइअं ४ खलु सपज्जवसिअं च ५ । गमिअं ६ अंगपविट्ठं, ७ सत्त वि एए सपडिवक्खा १४ ॥ १ ॥ पज्जवअक्खर २ पय ३ सं–घाया ४ पडिवत्ति ५ तह य अणुओगो ६ । पाहुड ७ पाहुडपाहुड ८–वत्थु ९ पुव्वा १० य ससमासा ॥ २ ॥' इति व्याख्यातं श्रुतज्ञानम् ।

अथावधिज्ञानप्ररूपणा विधीयते । अवधिज्ञानस्य व्यासतः क्षेत्रसमयस्वरूपप्रमेयपरिच्छेदापेक्षया असंख्येयाः प्रकृतयः; द्रव्यभावस्वरूपज्ञेयापेक्षया पुनरनंताः । एतासां काश्चन भवप्रत्ययाः शकुनानां वियद्गमनवत्, एताश्च सुरनैरयिकाणां विज्ञेयाः । काश्चन पुनः क्षायोपशमिक्यस्ताश्च तिर्यङ्नराणाम् । अत्राह परः क्षायोपशमिके भावेऽवधिज्ञानमुत्पद्यते, समये भव-

योऽवधिः स सर्वं तासां प्रत्ययः ? उच्यते ता अपि क्षायोपशमिक्य एव किन्त्वसावेवावधिज्ञानावरणक्षयोपशमस्तयोर्नारकामर-भवयोरवश्यं स्यादिति कृत्वा भवप्रत्ययास्ताः । समासतस्तु षड्(६)भेदमवधिर्विवरणम् । अनुगामि १ अननुगामि २ वर्धमान ३ हीयमानं ४ प्रतिपाति ५ अप्रतिपाति ६ । तेषु सुरनैरयिकाणामवधिज्ञानमनुगामि नयनवदनुयायि १ । अननुगामि पुनः स्थितप्रदीपवदननुयायि यथा तु मतस्थानमेव एतेषामनुगाम्यपि २ । वर्धमानं क्रमेण वृद्धिमधिगच्छत् हीयमानं पुनः क्रमेण क्षीयमाणं; तत्र वृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरेवं चतुर्विधा भवति क्षेत्रसमयविषयिका, न पुनरनन्तभागवृद्धिरनन्तगुणवृद्धिर्वा क्षेत्रकालयोरनन्तयोरनधिगमादवधिविषयत्वेन, एवं हानिरपि चतुर्विधैव । द्रव्येषु पुनरनन्तभागवृद्धिरनन्तगुणवृद्धिरेवं द्विधा भवति वृद्धिः, एवं हानिरपि द्रव्याणामनन्तत्वात् । पर्यवेषु पुनरनन्तभागवृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनन्तगुणवृद्धिरेवं षोढा स्याद् वृद्धिः, एवं हानिरपि पर्यवाणामानन्त्यात् ३ । ४ । सकललोकालोकव्यापकमुत्कर्षतः प्रतिपात्यवधिज्ञाने ५ । ततः परमप्रतिपाति ६ । एतच्चाऽवधिज्ञानं जघन्यतस्त्रिसमयाहारकसूक्ष्मनामकर्मोदयपनकजीवदेहावगाहमात्रक्षेत्रगतास्थितमूर्तद्रव्यवत्पर्यायपरिमित विषयम् । अत्र चायं संप्रदायः 'योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः । उत्पद्यते हि सूक्ष्म-पनकत्वेनेह स ग्राह्यः ॥१॥

संहृत्य चाद्यसमये, स ह्यायामं करोति च प्रतरम् । संख्यातीताख्यांगुल-विभागबाहल्यमानं तु ॥ २ ॥

स्वकतनुपृथुत्वमात्रं, दीर्घत्वेनापि जीवसामर्थ्यात् । तमपि द्वितीयसमये, संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥

संख्यातीताख्यांगुल-विभागविष्कम्भमानमिर्दिष्टाम् । निजतनुपृथुत्वदैर्घ्यां, तृतीयसमये तु संहृत्य ॥ ४ ॥

उत्पद्यते च पनकः, स्वदेहदेशे स सूक्ष्मपरिमाणः । समयत्रयेण तस्या-वगाहना यावती भवति ॥ ५ ॥
तावज्जघन्यमवधे-रालंबनवस्तुभाजनं क्षेत्रम् । इदमित्थमेव मुनिगण-सुसंप्रदायात् समवसेयम् ॥ ६ ॥'

इति नन्वेन कल्पना किं निदाना यद् योजनसहस्रमानो मीनस्त्रिभिः समयैः स्वप्रदेशान् संक्षिप्य यः समुत्पद्यते स्वदेहदेश एव सूक्ष्मपनकतया तस्यैव त्रिसमयाहारकस्य यावदवगाहनाक्षेत्रं तावदेव जघन्यमवधिचिदालंबनवस्तुक्षेत्रं नान्यस्य सूक्ष्मपनकस्येति ? अत्रोच्यते-स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनः स्यान्नान्यः, स पुनः प्रथमद्वितीयसमययोरतिसूक्ष्मश्चतुर्थादिसमयेषु चाऽतिस्थूलस्त्रिसमयाहारक एव च स तद्योग्य इत्यतस्तद्ग्रहणम् । अथोत्कृष्टावधिज्ञेयवस्त्वाधारक्षेत्रमुच्यते तथाहि-सर्वबहवस्तेजस्कायिकजीवा बादराः प्रायोऽजितजिनवारके स्युस्तदारंभकपुरुषबाहुल्यात्, सूक्ष्मा अप्युत्कृष्टपदवर्तिनस्तदा न विरुध्यंते । एवं सर्वोत्कृष्टपदवर्तिनस्तेजस्कायिकजीवा नैरन्तर्येण श्रेण्या व्यवस्थाप्यते सा च श्रेणी अवधिज्ञानिनः सर्वासु काष्ठासु शरीरपरितो भ्राम्यते सा चासंख्येयानलोके लोकमात्रान् क्षेत्रविभागान् व्याप्नोति तया पुनरवधिज्ञानितनुपरितो भ्रामितया सूक्ष्मबादरतेजस्कायिकजीवश्रेण्या यावत् क्षेत्रं व्याप्यते सर्वदिक्कं तावत् परमावधेः क्षेत्रम् । एतावति क्षेत्रे चेद् द्रव्यं स्यात्तदा पश्यति न पुनरलोके विलोकनीयमस्तीति । अथ मध्यमावधिः क्षेत्रसमयाभ्यां विभाव्यते किंचिदपि । तथाहि क्षेत्रमंगुलासंख्येयभागमात्रं पश्यन् समयमावलिकासंख्येयभागमितमध्यपश्यत्यतीतमनागतं च । अत्र च क्षेत्रसमयावलोकनमौपचारिकं, किंतु यथोक्तक्षेत्रव्यवस्थितानि दर्शनयोग्यानि मूर्तद्रव्याणि तत्पर्यायांश्च विनिश्चितसमयांतर्गतानध्यवस्यत्यवधिज्ञानी न पुनः क्षेत्रानेहसौ तयोरमूर्तत्वात् । एवमग्रतोऽपि विधेया भावना ।

अत्र चाङ्गुलं क्षेत्राधिकारात् प्रमाणाङ्गुलं शाश्वतोत्सेधाङ्गुलमित्यन्ये । तथाङ्गुलासंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकायाः संख्येयमेव भागं पश्यति । तथाङ्गुलमात्रं क्षेत्रमभ्यन्तरम् भिन्नामावलिकामवलोकयति । तथाङ्गुलपृथक्त्वमितं क्षेत्रं पश्यन्नावलिकां पश्यति । पृथक्त्वं द्विप्रभृत्यानवभ्यः । तथा हस्तमितं क्षेत्रं पश्यन्नन्तर्मुहूर्तं पश्यति । एवं गव्यूतमितं क्षेत्रं पश्यन् दिवसान्तः पश्यति । योजनमात्रं तु क्षेत्रमवलोकयन् दिवसपृथक्त्वमवलोकयति । पञ्चविंशतिं योजनानि तु पश्यन् पक्षान्तः पश्यति । भरतं तु पश्यन्नर्धमासं, जम्बूद्वीपं पुनः पश्यन् साधिकं मासं, समयक्षेत्रं तु पश्यन् संवत्सरं पश्यति, रुचकद्वीपं यावत्तु पश्यन् वर्षपृथक्त्वं पश्यति । अतः परं संख्यातकालात् परतः संख्येयं समयं पश्यन् द्वीपसमुद्रानपि संख्येयान् पश्यन् महति तु द्वीपसमुद्रे वा पश्यन्नेकं द्वीपं वा असंख्येयं तु पल्योपमादिकालं पश्यन् द्वीपसमुद्रानसंख्येयान् पश्यति महतस्तु तान् संख्येयानसंख्येयान् वा पश्यति योजनापेक्षया स्वसंख्येयमेव क्षेत्रं सर्वत्राप्यसंख्येये समये । एवं समयवृद्धौ क्षेत्रस्य वृद्धिः स्यात्, द्रव्यपर्याययोरपि । क्षेत्रवृद्धौ तु समयः स्यादपि वर्धेत स्यादपि न, क्षेत्रस्य सूक्ष्मत्वात् कालस्य तु स्थूलत्वात् । क्षेत्रवृद्धौ द्रव्यपर्यायौ तु वर्धेते, द्रव्यपर्याययोर्वृद्धौ तु क्षेत्रानेहसौ भक्तव्यौ द्रव्यपर्याययोः सूक्ष्मतया तयोः स्थूलत्वात् । द्रव्यवृद्धौ तु पर्याया वर्धन्त एव, पर्यायवृद्धौ तु द्रव्यं भजनीयं, द्रव्यात् पर्यायाणां सूक्ष्मतरत्वात् । एवं क्षेत्रसमयरूपपरिच्छेद्यापेक्षया असंख्येयाः स्युर्मध्यमावधेर्भेदाः, द्रव्यपर्यायस्वरूपज्ञेयापेक्षया पुनरनन्ताः । परमावधिस्तु क्षेत्रतः प्राग्भाषितः, कालतस्तु संख्यातीतोत्सर्पिण्यवसर्पिणीविषयः, द्रव्यतस्तु निखिलमूर्तद्रव्यपरिच्छेदकारी, भावतस्त्वनन्ततत्पर्यायगोचरः । अयं च परमावधिर्मनुष्येष्वेव । मनुजतिर्यक्ष्वेव च जघन्यः । अथ त्रिविधावधेः संस्थानमुच्यते स्तिबुक-

स्तोयबिंदुस्तदाकारो वृत्तो जघन्यः पनकावगाहनाक्षेत्रस्य वर्त्तुलत्वात् । उत्कृष्टः पुनरायतः किंचिद् वह्निजीवश्रेणीपरिक्षेपस्य स्वदेहानुवृत्तित्वात् । मध्यमावधिस्तु नैकसंस्थानस्तथाहि तत्र उडुपस्तदाकारोऽवधिर्नैरयिकाणां, पल्लको लाटदेशे धान्यालयस्तदाकारोऽवधिर्भवनवासिना, पटहाकारो व्यंतरसुराणां, तथा चर्मावनद्धा विस्तीर्णवलयाकारा झल्लरी तदाकारोऽवधिर्ज्योतिष्काणां, तथा ऊर्ध्वायतोऽधो विस्तीर्ण उपरि च तनुर्मृदंगस्तदाकारः कल्पोपपन्नसुमनसां, तथा पुष्पशिखावलिरचिता चंगेरी पुष्पचंगेरी तदाकारोऽवधिर्ग्रैवेयकनाकिनां, तथा कन्याचोलकापरपर्यायथवनालकाकारोऽवधिरनुत्तरसुराणाम् । अयं पुनरवधेराकारः सर्वसमयं नियतोऽवसेयः । एतेषां मध्ये भवनपतिव्यंतराणामुपरि वहुः स्यादवधिर्वैमानिकानां पुनरधोभागे ज्योतिष्कनैरयिकाणां तु तिर्यग् नरतिरश्चां तु नैकसंस्थानो मध्यमावधिर्बहुविधश्च । अथ नरतिरश्चामवधिक्षेत्रस्यानियतत्वात् सुरनैरयिकाणामवधिपरिच्छेद्यद्रव्याधारक्षेत्रप्रमाणमुच्यते । तत्र देवानां जघन्यावधिक्षेत्रं पंचविंशतियोजनानि, एतत् पुनर्जघन्यावधिक्षेत्रं दशसंवत्सरसहस्रायुषां भवनपतिव्यंतराणामेवावसेय, ज्योतिष्काणां पुनरसंख्येयस्थितित्वाज्जघन्येतरभेदमप्यवधिक्षेत्रमसंख्येयान्येव योजनानि । वैमानिकानां पुनरंगुलासंख्येयभागमात्रं जघन्यमवधिक्षेत्रम्, एतच्चोपपातसमये परभवसंबंधिनमवधिकृत्य विज्ञेयम् । उत्कृष्टं तु प्रथमकल्पद्वैतदेवतानां रत्नप्रभापृथिव्याः सर्वाधस्तनं भागं यावद् विज्ञेयं, तृतीयतुरीय-कल्पोत्पन्नसुराणां तु शर्कराप्रभाधस्तनदेशं यावत्, ब्रह्मलांतकस्वर्लोकोद्भवदेवानां तु वालुकाप्रभां यावत्, शुक्रसहस्रारसुराणां तु पंकप्रभां यावत्, उपरितनस्वर्लोकचतुष्कनाकिनां तु धूमप्रभां यावत्, ऋतु( ६ )मित ग्रैवेयकवृंदारकाणां तु तमःप्रभां यावत्, उपरितनग्रैवेयकत्रयस्सुमनसां तु सप्तमीं तमस्तमःप्रभापृथिवीं यावदुत्कृष्टमवधिविज्ञेयद्रव्याधारक्षेत्रमवसेयम् ।

ऋजुमतेस्तु स्तिमितसमुद्रपरिधिगतसरोजवृक्षमवलोकनात्। किंचिन्न्यूनां लोकनालिं पश्यत्यवधिना। उक्तं देवानां जघन्येतर भेदमवधिक्षेत्रम्। अथ नैरयिकाणां वक्ष्यते। रत्नप्रभापृथिव्यां जघन्यमवधिक्षेत्रं सार्द्धगव्यूतत्रयम्, उत्कृष्टं तु योजनमात्रं, द्वितीयपृथिव्यां तु जघन्यं गव्यूतत्रयम्, उत्कृष्टं तु सार्द्धगव्यूतत्रयं, तृतीयपृथिव्यां तु जघन्यं सार्द्धगव्यूतद्वयम्, उत्कृष्टं तु गव्यूतत्रयं, चतुर्थपृथिव्यां तु जघन्यं गव्यूतद्वयम्, उत्कृष्टं तु तदेव सार्द्धं, पंचमपृथिव्यां जघन्यं सार्द्धं गव्यूतम्, उत्कृष्टं तु गव्यूतद्वयं, षष्ठपृथिव्यां जघन्यं गव्यूतम्, उत्कृष्टं तदेव सार्द्धं, सप्तमपृथिव्यां तु जघन्यमर्द्धं गव्यूतम्, उत्कृष्टं तु गव्यूतमवधिक्षेत्रं विज्ञेयम्। इति कथितं समासतः किंचित् क्षेत्रसंस्थानभेदादिभिरवधिविवरणम्। विस्तरस्तु श्रीमदावश्यकनिर्युक्तिपीठिकागाथाः 'संखाईआओ खलु, ओहीनाणस्स सव्वपयडीओ। काओ भवपच्चइआ, खओवसमिआ य काओ वि ॥ १ ॥' इत्यादिकाभिर्गाथाभिरा आ हिअ सद पभिआ वहेर दद। इति मया संक्षेपतोऽवधिज्ञानस्वरूपं निरूपितम्।

अथ मनःपर्यवज्ञानं विभाव्यते, तदपि-मनःपर्यायसंवेदनं द्विप्रभेदम्, ऋजुमतिर्विपुलमतिश्च। तत्र घटः घटो वाऽनेन चिन्तित इत्यादिविशेषविमुखतया प्रायोऽल्पा ऋजु सामान्यं तन्मात्रग्राहिणी मतिः ऋजुमतिः, तथा घटोऽनेन चिन्तितः स च सौवर्णो रक्तः, प्रमाणतो द्रोणादिमानः, द्रव्यतः पाटलिपुत्रनिष्पन्नः, क्षेत्रतोऽमुकग्रामनिष्पन्नः, कालतः शीतर्तुघटितो निदाघ घटितो वेत्यादिविशेषप्रतिरूपा विपुला सर्वमतः पर्यायशतोपेतं वस्तु यया ज्ञायते सा विपुलमतिः। उक्तं च प्रवचनसारोद्धारे 'रिउ सामन्नं तम्मत्त-गाहिणी रिउमई मणोनाणं। पायं विसेसविमुहं, घडमित्तं चिंतियं मुणइ ॥ १ ॥

विउलं वत्थु विसेसेण, नाणं तग्गाहिणी मई विउला। चिंतिअमणुसरइ घडं, पसंगओ पज्जवसएहिं ॥ २ ॥'
एतच्च मनःपर्यवज्ञानं संयमविशुद्धिनिबंधनत्वाद् गुणप्रत्यय मनुष्यक्षेत्रांतर्वर्त्तिनिखिलसंज्ञिमनोद्रव्यपर्यायालंबनं च विज्ञेयम्।
यदुक्तं श्रीमदावश्यकनिर्युक्तिपीठिकायां 'मणपज्जवनाणं पुण, जणमणपरिचिंतिअत्थपागडणं। माणुसखित्त-
निबद्धं, गुणपच्चइअं चरित्तवओ ॥ १ ॥'

पंचमं तु केवलज्ञानं–तच्च घनघातिकर्मचतुष्कनिश्शेषप्रक्षीणताप्रभवं निखिलद्रव्यपर्यायस्वरूपसाक्षात्कारकं च विज्ञेय-
मनंतमप्रतिपाति शाश्वतं च। यदुक्तं तत्रैव 'अह सव्वदव्वपरिणाम–भावविन्नत्तिकारणमणंतं सासयमप्पडिवाई,
एगविहं केवलन्नाणं ॥ १ ॥' इति व्याख्यातं पंचधा ज्ञानं।

अथ दर्शनस्वरूपं प्ररूप्यते, तच्च समासतः प्रथमलहर्यां द्वितीयतरंगे प्ररूपितम्। अत्र च किंचिचदेव विस्तार्यते तथाहि-
जिनोक्ततत्त्वेषु श्रद्धानरूपं सम्यक्त्वमेकविधं द्विविधं त्रिविधं चतुर्विधं पंचविधं दशविधं वा। तत्रैकविधं जिनोक्तमेव तत्त्वं
नान्यदिति सम्यक्श्रद्धानरूपं। १। द्विविधत्वं तु तस्य निसर्गाधिगमाभ्यां भवति। तत्र यद् गुरूपदेशं विना जायते सम्यक्-
श्रद्धानं तन्नैसर्गिकमिति कीर्त्यते। यत्र गुरूपदेशात्तदधिगमोद्भवमिति। २। त्रिविधं तु क्षायिकं। १। क्षायोपशमिकम्
। २। औपशमिकमिति। ३। कारकं १ रोचकं २ दीपकमिति वा ३। एषां स्वरूपं तु प्राग् व्याख्यातम्। तदेव क्षायिकादि
सास्वादनसहितं चतुर्विधं। ४। वेदकसंयुक्तं तु पंचविधं। ५। एतदेव पंचविधं निसर्गाधिगमाभ्यां दशविधं। १० भवति।

अत्र च गाथाः श्रीप्रवचनसारोद्धारगताः 'एगविह दुविह तिविहं, चउहा पंचविह दसविहं सम्मं। दव्वाइ-

कारगाईउवसममेएहिँ वा सम्मं ॥ १ ॥ एगविहं सम्मरुई १ निसग्गाहिगमेहिँ २ तं भवे दुविहं । तिविहं
तं खइयाई ३ अहवा वि हु कारगाईअं ३ ॥ २ ॥ सम्मत्तमीसमिच्छत्तं, कम्मखयओ भणंति तं खइअं ।
मिच्छत्तखओवसमा, खाओवसमं ववइसंति ॥ ३ ॥ मिच्छत्तस्स उवसमा, उवसमं तं भणंति समयन्नू ।
तं उवसमसेढीए, आइमसम्मत्तलाभे वा ॥ ४ ॥ विहिआणुट्ठाणं पुण, कारग १ मिह रोअगं तु सद्दहणं २ ।
मिच्छद्दिट्ठी दीवइ जं तत्ते दीवगं ३ तं तु ॥ ५ ॥ खइआई सासायण-सहिअं तं चउव्विहं तु विन्नेअं ।
तं सम्मत्तब्भंसे, मिच्छत्तापत्तिरूवं तु ॥ ६ ॥ वेअगसंजुत्तं पुण, एअं चिअ पंचहा विणिद्दिट्ठं । सम्मत्त
चरमपुग्गल-वेअणकाले तयं होई ॥ ७ ॥ एवं चिअ पंचविहं निसग्गाहिगमभेयओ दसहा ॥' इति

अथवा निसर्गरुचि १ उपदेशरुचि २ आज्ञारुचिः ३ सूत्ररुचि ४ बीजरुचि ५ रभिगमरुचि ६ विस्ताररुचिः ७ क्रियारुचिः ८ संक्षेपरुचि ९ धर्मरुचि १० रेवमा दशविधं दर्शनं समयानुसारेण विज्ञेयं, तत्र यो निसर्गेण स्वभावेन श्रीजिनोक्तान् द्रव्यक्षेत्रकालभावभेदतो नामस्थापनाद्रव्यभावभेदतो वा चतुर्विधान् भावान् भवेत् स्वयमेव यथास्थितान्, स निसर्गरुचिर्विज्ञेयः ॥ १ ॥ एतानेव दुःखमोक्षाय जिनेन छद्मस्थेन वा गुरुणोपदिष्टान् यः श्रद्धत्ते, स उपदेशरुचिः सम्यग्दर्शनी समवसेयः ॥ २ ॥ यथा रागद्वेषौ येषां मोहनीयमज्ञानं च यस्य देशतोऽपगता स्युः स आचार्यपादपार्श्वादिसंबन्धिन्या रोचमानः कुग्रहाभावादेवाज्ञयैवादि तथेति प्रतिपद्यमानो माषतुषादिवदाज्ञारुचिर्निगद्यते ॥ ३ ॥ यदा यः सूत्रमधीयानः श्रुतेनाङ्गप्रविष्टेनाचाराङ्गादिनाऽङ्गबाह्येनोत्तराध्ययनादिना वा दर्शनमवाप्नोति स गोविन्दवाचकवदिव सूत्ररुचिर्विज्ञेयः ॥ ४ ॥

तथा यथोदकदेशस्थोऽपि तैलबिंदुः समस्तमुदकमाक्रामति तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मीयक्षयोपशमवशादशेषतत्त्वेषु रुचिमान् स्यात् स बीजरुचिरित्युच्यते यथा बीजमेकमपि क्रमेणानेकबीजानां जनकं स्यादेव तत्त्वैकदेशोत्पन्नरुचिरपि निश्शेष-तत्त्वविषयशेषरुच्यंतराणां जनयित्री यस्य स्यात् स बीजरुचिरित्यर्थः ॥ ५ ॥ तथा येनैकादशांगानि प्रकीर्णकानि चोत्तरा-ध्ययनादीनि परिकर्मसूत्रादिभेदेन पंचधा दृष्टिवादश्चैवं समग्रमपि श्रुतमर्थतः सम्मुपलब्धं स्यात् स अभिगमरुचिः परि-कीर्त्यते ॥ ६ ॥ तथा धर्मास्तिकायाऽधर्मास्तिकायादीनां द्रव्याणामेकत्वपृथक्त्वादयोऽशेषपर्यायाः प्रत्यक्षाद्यशेषप्रमाणैर्येन सम्मुपलब्धाः, अयं भावो येषु येषु द्रव्यपर्यायेषु यत्र यत्र प्रत्यक्षादेः प्रमाणस्य व्यापारस्ते तेन तेनैव प्रमाणेन प्रतीता इति तथा सर्वद्रव्याणां सर्वेऽपि पर्याया नैगमसंग्रहादिभिः समग्रैरपि नयैर्येन सम्मुपलब्धाः स विस्ताररुचिर्विज्ञेयः ॥ ७ ॥ तथा दर्शनाचारज्ञानाचारचारित्राचारतपआचारविनयसत्यसमितिगुप्तिप्रभृतिक्रियाद्यनुष्ठाने यस्य भावतो रुचिरस्ति स क्रियारुचि-रिति निगद्यते ॥ ८ ॥ तथा योऽनंगीकृतसौगतादिमतः श्रीजिनप्रवचनरहस्येषु चानिपुणः शेषेषु च सांख्यसौगतादिमतेषु चानभिज्ञः स्यात् स चिलातीसुतादिवत् संक्षेपेणैव तत्त्वश्रद्धानमवाप्नोतीति संक्षेपरुचिः परिकीर्त्यते ॥ ९ ॥ तथा धर्मास्ति-कायादिनां पञ्चास्तिकायादीनां गत्युपष्टम्भप्रभृतिकं धर्मं तथांगप्रविष्टाद्यागमरूपं श्रुतधर्मं चरित्रधर्मं च जिनोदितं यः श्रद्धत्ते स धर्मरुचिर्विज्ञेयो धर्मेषु पर्यायेषु धर्मे वा श्रुतधर्मप्रभृतिके रुचिरस्येति कृत्वा ॥ १० ॥ एतेषां मध्ये निसर्गोपदेशयोरभि-गमादौ वा कचित् केषांचिदन्तर्भावेऽपि मुग्धमतिविनेयजनव्युत्पादनार्थमित्थमुपाधिभेदेन दर्शनभेदाभिधानम् ।

एतदर्थसंवादकश्च श्रीमदागमः तथाहि " निसग्गु १ वएसरुई, २ आणरुई ३ सुत्त ४ बीअरुइ ५ चेव । अभि-

गम ६ वित्थाररुई, ७ किरिआ ८ संखेव ९ धम्मरुई १ ॥ १ ॥ भूअत्थेणाहिगया, जीवाजीवा य पुण्णपावं च । सहसंमुइआसव-संवरो अ रोएइ उ निसग्गो ॥ २ ॥ जो जिणदिट्ठे भावे, चउव्विहे सद्दहाइ सयमेव । एमेव नन्नहत्ति य-स निसग्गरुइत्ति नायव्वो ॥ ३ ॥ एए चेव उ भावे, उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व, उवएसरुइत्ति नायव्वो ॥ ४ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोअंतो, सो खलु आणारुईनाम ॥ ५ ॥ जो सुत्तमहिज्जंतो, सुएण ओगाहई उ सम्मत्तं । अंगेण बाहिरेण व, सो सुत्तरुइत्ति नायव्वो ॥ ६ ॥ एगेण अणेगाइं, पयाइं जो पसरई उ सम्मत्तं । उदएव्व तिल्लबिंदू, सो बीयरुइत्ति नायव्वो ॥ ७ ॥ सो होइ अभिगमरुई, सुअनाणं जेण अत्थओ दिट्ठं । इक्कारसअंगाइं, पइण्णगं दिट्ठिवाओ य ॥ ८ ॥ दव्वाण सव्वभावा, सव्वपमाणेहिं जस्स उवलद्धा । सव्वाहिं नयविहीहिं य, वित्थाररुइत्ति नायव्वो ॥ ९ ॥ दंसणनाणचरित्ते, तवविणए सव्वसमिइगुत्तीसु । जो किरिआभावरुई, सो खलु किरिआरुईनाम ॥ १० ॥ अणभिग्गहिअ कुदिट्ठी, संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे, अणभिग्गहिओ य सेसेसु ॥ ११ ॥ जो अत्थिकायधम्मं, सुअधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहिअं, सो धम्मरुइत्ति नायव्वो ॥ १२ ॥ ”

इदं च सम्यग्दर्शनं सम्यगनुष्ठानवद्भिरिमानि सप्तषष्टिस्थानानि यथायोग्यं पालनीयपरिहरणीयतया विज्ञेयानि । तथाहि श्रद्धानचतुष्कं ४ लिङ्गत्रिकं ३ विनयदशकं १० शुद्धित्रयं ३ दोषपञ्चकं ५ प्रभावनाष्टकं ८ भूषणपञ्चकं ५ लक्षणपञ्चकं ५

इति सप्तषष्टिस्थानानि ज्ञेयानि।

पतनाषट्कम् ६ आकारषट्कं ६ भावनाषट्कं ६ स्थानषट्कम् ६ इति सप्तषष्टिस्थानानि ज्ञेयानि । रूपं श्रद्धानं चतु-

एतेषां मध्ये परमार्थसंस्तव १ सुदृष्टपरमार्थयतिजननिषेवन २ व्यापन्नदर्शनवर्जन ३ कुदृष्टिपरिहार ४ रूपं श्रद्धानं चतु-

एतेषां मध्ये परमार्थसंस्तव १ सुदृष्टपरमार्थयतिजननिषेवन २ व्यापन्नदर्शनवर्जन ३ कुदृष्टिपरिहार ४ रूपाणां नवानामपि पदार्थानां

र्भेदम् । तेषु जीवा १ ऽजीव २ पुण्य ३ पापा ४ श्रव ५ संवर ६ निर्जरा ७ बंध ८ मोक्ष ९ रूपाणां नवानामपि पदार्थानां

यथायोगं सत्पदप्ररूपणा १ संख्या २ क्षेत्र ३ स्पर्शन ४ कालां ५ ऽतर ६ भावा ७ ल्पबहुत्व ८ रूपैरष्टभिः पदैर्ज्ञाता-

नामपि पुनः पुनराकर्णनं चिंतन च परमार्थसंस्तवो भवति ।

तत्र सत्पदप्ररूपणायामस्ति जीवः स च गुणस्थानेषु श्रुतिसमधिकदिग्(१४)मितेषु ' गइ १ इंदिए अ २ काए, ३

जोए ४ वेए ५ कसाय ६ नाणेसु ७। संयम ८ दंसण ९ लेसा, १० भव ११ सम्मे १२ सन्नि १३ आहारे ४

॥ १ ॥ ' इति गाथोक्तैश्चतुर्दशभिर्मार्गणास्थानैर्विचारणीयः । सा च विचारणा बहुविस्तरत्वान्न प्रतन्यते, तेन कर्मग्रंथादि-

ग्रथांतरेभ्यः साऽवसेया । एवमस्त्यजीवः, अस्ति पुण्यमित्यादिशेषाष्टपदार्थानामपि यथायोगं सत्पदप्ररूपणा विधेया १ ।

अथ जीवाजीवादीनां भेदगणनरूपा संख्या व्याख्यायते तत्र जीवाजीवादीनां क्रमेण चतुर्दश १ चतुर्दश २ द्विचत्वारिंशत्

३ द्व्यशीति ४ द्विचत्वारिंशत् ५ सप्तपंचाशत् ६ द्वादश ७ चतु ८ र्मिता भेदा भवंति । मोक्षे तु नवद्वाराणि व्याख्यास्यंते ।

तेषु जीवस्य चतुर्दशभेदा विभाव्यंते । तथाहि–जीवास्तावच्चैतन्यलक्षणा इति लक्षणानतिक्रमादेकविधा अपि ते उच्यंते ।

द्विविधा वा संसारिणो मुक्ताश्चेति । त्रिविधा वा पुंस्त्रीनपुंसकभेदात् । चतुर्विधा वा जीवाः सुरनरतिर्यग्नैरयिकभेदात् ।

पंचविधा वा जीवा एक–द्वि–त्रि–चतुः–पंचाक्षभेदतः । षड्विधा वा जीवाः पृथिव्यप्तेजोवायुवनस्पतित्रसभेदात् । सप्तविधा

षट्त्रिंशत्तमश्रीमदुत्तराध्ययनगाथाभिर्विज्ञेयास्तथाहि 'पुढवी अ सक्करा वालुआ य, उवले सिला य लोणुसे ॥ अय-
तउअ तंबसीसग-रुप्प सुवन्ने अ वइरे अ ॥ १ ॥ हरिआले हिंगुलए मणोसिला सासगंजणपवाले ॥ अब्भ-
पडलब्भवालुअबायरकायमणिविहाणा ॥ २ ॥ गोमिज्जए अ रुअगे, अंके फलिहे अ लोहिअक्खे अ । मरगय-
मसारगल्ले, सुअमोअग इंदनीले अ ॥ ३ ॥ चंदणगेरुअहंसगब्भपुलए सोगंधिए अ बोधव्वे ॥ चंदप्पभाव-
सलिणजलकंते सूरकंते अ ॥ ४ ॥' इति ।

आसां च विषमपदव्याख्या पृथिवी शुद्धपृथ्वी, शर्करा लघुशकलरूपा, उपलो गंडशैलादिः, शिला च पाषाणरूपा, लवणं–समुद्रलवणादि, ऊषः–क्षारमृत्तिका, अयस्ताम्रादयस्तु तत्तत्खानिसंभवा धातुविशेषाः, वज्रश्च हीरकः, सासको धातुविशेषः, अंजनं समीरकम्, प्रवालं विद्रुमः, अभ्रपटलं प्रसिद्धम्, अभ्रवालुका तु अभ्रपटलमिश्रा वालुका । इह पृथिव्यादयश्चतुर्दशहरितालादयोऽष्टौ गोमेदकादयश्चतुर्दश । एषां च क्वचित् कस्यचित्कथंचिदंतर्भावात् मीलिताः षट्त्रिंशद्भवति भेदाः खरपृथिव्याः ।

अप्कायस्य तु बादरस्य इमे पंच भेदा भवंति शुद्धोदकादयः । तेषु शुद्धोदकं पयोधिपाथोदादिसंबंधि । अवश्यायस्तु शरदादिषु प्राभातिकसूक्ष्मवर्षरूपः । हरितनुश्च प्रातः स्निग्धपृथ्वीभवस्तृणाग्रतोयबिंदुः । महिका तु गर्भमासेषु सूक्ष्मवर्षरूपा । हिमं च प्रसिद्धं । पंचत्वं चैषामुपलक्षणं; तेन स्त्यानीभूताप्कायरूपघनोदधिप्रभृतयोप्यऽस्य भेदा विज्ञेयाः ।

बादरतेजस्कायस्य पुनरंगारमुर्मुराविज्वालोल्काविद्युदग्निरूपा भवंति नैके भेदास्तत्रांगारो विगतधूमज्वालदह्यमानेंधनादि-

सरलो नालिकेरीताड् । एतेषां प्रत्यग्रसत्त्वम तेनाऽन्येषामपि केषांचित् स्कन्धानामेकजीवाधिष्ठितत्वं यथायुक्तं विज्ञेयं, शाखा तु प्रायोऽन्या एवान्यं स्कंधा सर्वसंश्लेषप्रत्येकजुजीवात्मक इत्यवसेयम् । ननु यदि वृक्षाणां मूलकंदस्कंधादयः प्रत्येकमनेकप्रत्येकजीवाधिष्ठितास्तर्हि कथमेकशरीराकारतया समुपलभ्यंते ? उच्यते यथा सकलसर्षपाणां श्लेषद्रव्यमिश्रिता वर्त्तिः एकरूपा स्यात्, अथ च ते सकलसर्षपाः परिपूर्णशरीराः संतः पृथक्पृथक् स्वस्वावगाहनयाऽवतिष्ठंते, तथा प्रत्येकशरीराणि जीवानां भवंति संघाताः । इह श्लेषद्रव्यस्थानीयं तथाविधं कर्म सकलसर्षपस्थानीयाः पुनः प्रत्येकजीवाः । सकलसर्षपवर्त्तिवेष्टितप्रतिपत्त्या पृथक् पृथक् स्वस्वावगाहप्रत्येकजीवैकत्वप्रतिपत्त्यर्थम् । अत्रैवार्थे दृष्टांतांतरमुच्यते, यथा वा तिलपर्पटिका तिलप्रधानपिष्टमया एकरूपा बहुभिस्तिलैर्मिश्रिता सती पृथक् पृथक् स्वस्वावगाहावतिकारिमका स्यात्, एकरूपा च । तथा प्रत्येकजीवानां शरीरसंघाता एकरूपाः पृथक् पृथक् स्वस्वावगाहनाम भवंतीति । अतो वृक्षाणामेव मूलकंदादिष्वसंख्येयजीवता प्रज्ञापनायामेव निरूपिता । ततो गुच्छादीनां मूलकंदादिषु प्रायः संख्येयजीवता विज्ञायते । यदुक्तं वनस्पतिसप्ततौ ' गुच्छाईण पुण सव्व-जीवया नज्जए इमं वायं । रुक्खाण वि य असंखजीवभावो इय भणिओ ॥ १ ॥' इति यानि कानिचित् पुनः सूक्ष्माणि मातुलिंगफलानि आम्रादिमहानि यानि तान्यपि संख्येयजीवानि । कुष्मांडादीनां पुनरनंतजीवानि । केषांचि बहुलानि तरकारादीनि स्थूलानि तु केषांचि मध्यानि यानि कानिचित्संख्येयबहुलानि एतेषां मध्ये कानिचित् पर्याप्तिगतजीवापेक्षया संख्येयजीवानि कानिचिदसंख्येयजीवानि यथायोग्यं विज्ञेयानि । लोमशिप्रमुखमनन्तकायकोत्कटादिवल्लीफलानि यद्यप्यनन्तानि तु जीवापत्राणि च प्रायो

हरितरूपाणि यावत्कार्णिका पत्राधारभूता एतानि त्रीण्यप्येकजीवात्मकानि यानि पुनरभ्यंतराणि दलानि च केसराणि याश्च-
मिंजाः फलरूपाः एतानि प्रत्येकमेकैकजीवाधिष्ठितानि पद्मनाले त्वेक एव जीवः। तथा इक्कडिनलेक्षुप्रमुखाणां सर्वेषामपि
च वशभेदानां यदक्षि यच्च पर्व्व यच्च पर्वपरिवेष्टनं चक्राकार एतानि त्रीण्यप्येकजीवात्मकानि दलानि पुनरेषां प्रत्येकमेक-
जीवाधिष्ठितानि पुष्पाणि त्वनेकजीवात्मकानि विज्ञेयानि। अथ फलेषु कश्चिद् विशेषो निगद्यते–शृङ्गाटकस्य फलेषु प्रत्येक द्वौ
द्वौ जीवौ तथा पुष्पफलकालिंगतुबत्रपुषैलवालुवालुंकघोपातकपटोलतिंदूमकादीनां वृतगिरकटाहरूपं त्रिकमप्येकजीवात्मकम्,
एतेषामेव च बीजानि सकेसराण्यकेसराणि वा प्रत्येकमेकैकजीवाधिष्ठितानि बोद्धव्यानि।

अथानतकायिकस्वरूप किंचित् प्रपच्यते तथाहि–युगपदुत्पन्नानामनतानामपि तेषां समसमयमेव वपुर्निर्वृत्तिस्तथा सम-
समयमेव प्राणापानयोग्यपुद्गलोपादान ततः समकालमेव तदुत्तरकालभाविनावानापानौ तथा यदाहारादिकमेको गृह्णाति
शेषा अनता अपि तच्छरीराश्रितास्तदैव गृह्णंति। तथा यद् बहूनां ग्रहणं तदेकस्या तनौ समावेशादेकस्यापि समासतो ग्रहण-
मुच्यते। ततः सूक्ष्मबादरभेदभिन्नानामुभयेषामपि निगोदजीवानामेतल्लक्षणं विज्ञेयम्। यत्साधारणशरीरनिर्वृत्तिः साधारणं
चाहारग्रहणं साधारण चानापानोचितपुद्गलोपादानौ साधारणैवोच्छ्वासनिश्वासाविति। यथा लोहगोलो ध्मातस्तप्ततपनीय-
संकाशः सजातः सन् सर्वोऽपि वह्निपरिणतो भवति तथा निगोदरूपे एकस्मिन्नपि वपुषि तच्छरीरात्मकं तथाऽनतानामपि
जीवाना परिणामो विज्ञेयः। अथ बादरसाधारणतनुज्ञानाय तल्लक्षण निगद्यते तथाहि–यानि मूलकंदस्कंधत्वक्शाखाप्रवाल-
पुष्पफलबीजानि भंगे समानि भवंति तान्यनंतजीवानि विज्ञेयानि। अत्र पुनरयं विशेषः ये सर्वकालं समभंगा भवंति त एव

मानायाः समो मेदो भवति, एवं सममेदो न भिद्यमानं मूलादिकमनंतजीवं विज्ञेयम् । वादरानंतकायिका मेदाः पुनर्जलसेवाल-
शतावरी-कुमारी-गिरिकर्णिका-स्नुहीप्रभृतय इमाभिर्वनस्पतिसप्ततिगाथाभिर्विज्ञेयास्तथाहि 'ते हुंति बायरा तदि-तरा य
जे बायरा इमे ते उ । अजलो जो सेवालो, कुमारिथोहरिहलिद्दा य ॥ १॥ सूरणकंदो अ तहा, नेआ लिल्लु-
हडअद्दमुत्थाय । सत्तावरी गलोई, लूणी तह सिंगवेरे अ ॥ २ ॥ आलूअ कक्षकलया, महुपोयल्लई तहेय
महुसिंगी । विरुहा सप्पसुअंधा, छिन्नरुहा चेव बीअरुहा ॥ ३ ॥ पाढा मिअवालुंकी, महुरसा चेव राय-
वल्ली य । दंती चंडी किट्टी, मसिवन्नी मुग्गपत्ती अ ॥४॥ लहसणपलंडू तह, वुन्नवज्जा कंदा य हुंति बत्तीसं ।
एए अणंतकाया, अन्ने वि तहा णेगेणं ॥ ५ ॥' इति भाविताः प्रत्येकानंतमेदेन द्विविधा वनस्पतिजीवाः श्रीप्रज्ञापनाख्य-
पदानुसारेण । इति भावितौ सूक्ष्मवादराख्यौ द्वौ मेदौ स्पर्शनरूपैकाक्षधारिणामेकेंद्रियाणां ॥ २ ॥
तथा स्पर्शनरसनारूपेंद्रियद्वयधारिणो द्वींद्रियास्ते च कृमिशंखशुक्तिजलूकेलिकालसपूतराटकप्रभृतयो ज्ञेयाः ॥ ३ ॥
तथा स्पर्शनरसनाघ्राणरूपकरणत्रितयधारिणस्त्रींद्रियास्ते च कुंथुपिपिलिकामत्कोटिकायूकामत्कुणशतपदीप्रभृतयो विज्ञेयाः
॥ ४ ॥ तथा स्पर्शनरसनाघ्राणनयनरूपेंद्रियचतुष्टयधारिणश्चतुरिंद्रियास्ते च वृश्चिकचिंचरीकाकीटपतंगमशककोलिकमक्षिका-
खद्योतप्रभृतयोऽवसेयाः ॥ ५ ॥
तथासंज्ञाऽसंज्ञिभेदेन स्पर्शनरसनाघ्राणचक्षुःश्रवणरूपकरणपञ्चकधारिणः पञ्चेंद्रिया द्विभेदाः । तेषु मनोज्ञानरूपसंज्ञा-
धारिणः संज्ञिनस्ते च नैरयिकतिर्यग्मनुजदिविजमेदाच्चतुर्विधाः । तेषु सप्तपृथ्वीसंबन्धेन नैरयिकाः सप्तविधाः पृथिव्यः

पुनरिमाः सप्त यथाक्रि—रत्नप्रभा १ शर्कराप्रभा २ वालुकाप्रभा ३ पङ्कप्रभा ४ धूमप्रभा ५ तमःप्रभा ६ तमस्तमःप्रभेति ७। एतानि पुनरासां गोत्राणि नामानि पुनरासां यथाक्रमं घर्मा १ वंशा २ शैलाऽ ३ घना ४ रिष्टा ५ मघा ६ माघवत्य ७ इति ज्ञेयानि। एताश्च छत्रातिछत्रसंस्थिता भवंति। आसां च यथाक्रममशीति १ द्वात्रिंशद् २ अष्टाविंशति ३ विंशत्य ४ ष्टादश ५ षोडश ६ अष्टसहस्राधिकयोजनलक्षमितः पिण्डोऽवसेयः। आसां च घनोदधिघनवाततनुवाताकाशरूपमाधारचतुष्टय मस्ति० भीमद्वेतसमये। एषां मध्ये घनोदधिर्विंशतियोजनसहस्राणि पिंडः घनवाततनुवातयमनानि तु पिंडेऽसंख्येययोजनानि मन्तव्यानि भीमज्जिनागमेऽनंतरमंसमये। एततु पिंडपरिमाणं पृथिवीनामधो मध्यभाग एव विज्ञेयं, हीयमान पुनः प्रांते घनोदधिघनवाततनुवातरूपवलयत्रिकस्य प्रमाणं प्रथमपृथिव्यां यथाक्रमं षड्भागचतुर्भागैकयोजनमितमपरिक्षंपि पञ्चम दर्शितः। द्वितीयायां पुनरस्मिन्नेव वलयमाने यथाक्रमं सत्रिभागमध्यूत १ सध्यूत २ सध्यूतत्रिभागरूपः क्षेपो विधेयः। तृतीयादिषु तु पृथिवीषु यथापर्याममनेन प्रक्षेपो द्विभिन्नतःप्रमाणवृद्धिवः कर्तव्या। एवं चतुर्दशरज्जुपरीताः सप्तापि प्रमिता निरयावासा भवंति। सर्वेषां च मीलने चतुरशीतिलक्षाणि नरकपृथिवीनिरयावासाः। उपर्युपरि प्रस्तरमिलनपराः प्रतरास्तु प्रथमपृथिव्यां त्रयोदश द्वितीयपृथिव्यामेकादश तृतीयपृथिव्यां नव चतुर्थपृथिव्यां सप्त पञ्चमपृथिव्यां पञ्च षष्ठपृथिव्यां त्रयः सप्तमपृथिव्यां पुनरेक एव प्रतरो विधेयः। सर्वेषां पुनर्मीलने एकोनपञ्चाशत् प्रतरा भवंति। एतेषु पुनः प्रतरेषु सीमंतादयो- ऽप्रतिष्ठानांताः एकोनपञ्चाशन्निरयावासेन्द्रका भवंति। तेभ्यः श्रुति(४)मितासु दिक्षु विदिक्षु च विनिर्गता प्रत्येकमेकैक-

वलिकाश्रेणिरूपा निरयावासकाणाम् । तासां मध्ये प्रथमप्रतरे दिगावावलिकास्ते एकोनपंचाशन्निरयावासका भवंति । विदिक्षु वाष्टचत्वारिंशद्भवेयुः । द्वितीयादिषु पुनः प्रतरेष्वेकैकहीनाः पङ्क्तयो भवंति यावत् सप्तममहीप्रतरे दिक्ष्वेकैको निरयावासको विदिक्षु तु नास्ति सर्वेषामप्यावलिकागतानां नरकावासकाना मीलने षड्नवतिशतानि त्रिपंचाशदधिकानि भवेयुः । शेषास्तु समयाशीतमितलक्षाणि नवतिसहस्राणि त्रीणि च शतानि सप्तचत्वारिंशदधिकानि स्युः । एते सर्वेऽपि च योजनसहस्रत्रितय-मुच्चाः । केचित् संख्येययोजनानि विस्तृता आयताश्च । केचित् पुनरसंख्येययोजनानि सीमंतकस्तु पंचचत्वारिंशल्लक्षयोजना-न्यायतो विस्तृतश्च । अप्रतिष्ठानस्तु सप्तमपृथिव्यां योजनलक्षमानस्तत् परितश्चतुर्दिग्व्यवस्थिताश्चत्वारः कालादयस्तु विस्तारायामपरिधिभिरसंख्येययोजनकोटीकोटीप्रमाणा अवसातव्याः । इन्द्रकास्तु सर्वेऽपि वृत्तास्तदनंतरिता आवलीकागताः सर्वेऽपि त्र्यस्रास्ततश्चतुरस्रास्ततोऽपि च वृत्ता एव तावद् वाच्य यावदालिकाप्रांताः पुष्पावकीर्णास्तु नैकसंस्थानाः । एते च निरयावासाः सहस्रं योजनानि पीठे सहस्र च शुषिरे सहस्र च स्तूपिकायाम् । एते च ऋतु(६)मितासु पृथ्वीष्वध ऊर्ध्वं च योजनसहस्रं विहाय शेषे क्षेत्रविभागे यथासंभव सर्वत्र संति सप्तम्यां पुनरध ऊर्ध्वं च सार्द्धानि द्विपंचाशद्योजनसहस्राणि विमुच्य । अथ प्रतरांतर निगद्यते । अध उपरि च योजनसहस्रस्य नरकावासकहीनत्वाद् योजनसहस्रद्वयहीना क्रियते बाहल्य-माश्रित्य पृथ्वी, ततो यस्यां पृथिव्यां यावतः प्रतरास्तावत् प्रतरैर्निरयावासकाना योजनसहस्रत्रयोच्चत्वात्त्रिसहस्रगुणितैरूना कर्त्तव्याः, ततः प्रतरापेक्षयांतराणामेकोनत्वाद्रूपोनैः स्वस्वप्रतरैर्भागे हृते यदाऽऽयाति तत् प्रतरस्य प्रतरस्यांतरं भवति । तथाहि-रत्नप्रभाया बाहल्यमशीतिसहस्राधिक योजनलक्ष तच्चोपरितनेनाऽधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातमष्टसप्तति-

सहस्राधिकं लक्षम्। एतस्माच्च प्रथमप्रस्तटावगाहक्षेत्रलक्षणं पञ्चचत्वारिंशत् सहस्ररूपं अपनीयते स्थितमेकोनचत्वारिंशत् सहस्राधिकं लक्षम्। तस्य त्रयोदशभिर्भागे हृते लभ्यंते एकादशयोजनसहस्राणि पंचशतानि अशीत्यपि यानि चत्वारि त्रयोदशभागाः एकैकप्रस्तटस्योपर्यधस्तनयोजनसहस्रवर्जनेनान्तरं योजनस्य त्रिभागः एतावत्प्रमितं रत्नप्रभायां प्रस्तटानां मिथः अंतरं परस्परम्। एवं शेषास्वपि प्रत्येकं भावनीयं केवलमासूपरस्परान्तरं द्वितीयायां ९७०० तृतीयां १२३७५ चतुर्थ्यां १६१६६[2] पंचम्यां २५२५० षष्ठ्यां ५२५०० सप्तम्यां पुनरेक एव प्रस्तटस्तस्या न संभवत्यंतरमिति। एतेषु पुनः समुत्पन्नानां विपाकप्रस्तारव्युत्क्रमवेदनानुभवानां दुःखाकुलानां नारकाणां न निमेषमात्रमपि सुखमस्ति। यदुक्तं श्रीजीवाभिगमे
'अच्छिनिमीलणमित्तं, नत्थि सुहं दुक्खमेव अणुबद्धं ॥ नरए नेरइयाणं, अहोनिसं पच्चमाणाणं ॥ १ ॥'
विशेषावेन 'उववायएण सायं, नेरइओ देवकम्मुणा वावि ॥ अज्झवसाणनिमित्तं, अहवा कम्माणुभावेणं ॥ १ ॥' व्याख्या—यः प्राग्भवे दारुणक्रियादिविना मृतोऽनन्तरितस्थितो नेरयिकेषु जायते न तस्य पूर्वभवानुप्रक्रमसातं नापि क्षेत्रजं नापि परमाधार्मिकनिर्मितं नापि परस्परकृतमित्युपपातसमये सातं वेदयति। देवकर्मणा वा यथा स्कन्दक देवस्तत्पूर्वीयस्य वेदनोपशमः सोऽपि किंयत्समयं तत् कर्मभवस्य क्षेत्रजा वेदना भवत्येव। अध्यवसानात् वा यथा सम्यक्त्वलाभे प्रमुदितेन वा तीर्थंकरस्य तत्कर्म कल्याणिकस्य तीर्थंकरादिगुणानुमोदनादेर्वा क्षेत्रवेदनाद्यभावेऽपि जिनजन्मनायपेक्ष्य सति कर्मणो विपाकविपाके वा सातमनुभवति इतरथा तु सर्वदैवासातवेदनामेव वेदयंति नैरयिकाः। १। सा पुनर्वेदना त्रिविधा क्षेत्रजा १ परस्परजा २ परमाधार्मिककृता च ३। तत्र क्षेत्रजा रत्नप्रभादिषु प्रथमासु तमःप्रभापर्यन्तासु प्रभासु तिसृषु पृथ्व्यामेकस्यां शीतयोन

सर्वस्यापि भूम्यादेः खादिरागारेभ्योऽप्यत्यंततप्तादुष्णवेदनां
कत्वेन केवलहिमप्रख्यशिशिरप्रवेशात्मकयोनिस्थानादन्यत्र सर्वस्यापि भूम्यादेः खादिरागारेभ्योऽप्यत्यंततप्तादुष्णवेदनां
वेदयंतीति प्राहुः प्रवचनविशारदाः । एवमन्यास्वपि भावना कार्या । पङ्कप्रभायां पुनर्बहुषूपरितनेषु नरकावासकेषूष्णा; अध-
स्तनेषु च शीता, धूमप्रभायां बहुषु शीता स्तोकेषूष्णा षष्ठ्यां सप्तम्यां च शीतैव । इयं च वेदना सर्वाप्यधोऽधोऽनंतगुणतया तीव्रा
तीव्रतरा तीव्रतमा च । तत्रोष्णवेदना स्वरूपमेवमागमज्ञाः प्रज्ञापयति, यन्मध्यारूढे वासराधीश्वरेऽनभ्रच्छाये विहायसि कस्यापि
पुरुषस्य तीव्रतरपित्तप्रकोपपराभूतस्य परितः प्रकामज्वलितहुतवहज्वालामालाव्याकुलितस्य निरातपवारणस्य यादृग्विधोष्ण-
वेदना जायते ततोऽप्युष्णवेदनेषु निरयेषु नारकाणामनंतगुणा । अपि च यदि ते नैरयिकास्तेभ्य उत्पाट्य प्रज्वलत्खादिरांगार-
निकरे प्रक्षिप्यते तदा चंदनलिप्ता इवाननुभूतपूर्वपरमसुखास्वादान्निद्रामपि प्राप्नुवंति । शीतवेदनास्वरूपपुनरिति प्ररूपितं
श्रीमदार्हतागमे तथाहि-पौषे माघे वा मासे निरभ्रच्छायायां त्रियामायां वपुःकंपविधायिनि वाति मारुते हिमगिरिशिखर-
स्थितस्य प्रावरणविरहितस्य निराश्रयस्य तुषारप्राग्भारपरिषिक्तवपुषः स्थविरतरनरस्य यादृशी शीतवेदना प्रादुर्भवतीति ततोऽपि
नारकाणामनंतगुणिता । किंच ते चेद् यथोक्ते नरस्थाने स्थाप्यंते तदा तेऽतीवनिर्वातस्थापिता इव निःशेषशीतार्तिनिर्गमतः
सुखनिद्रामुद्रितनेत्रा भवेयुरिति । तथा योऽपि बंधन १ गति २ संस्थान ३ भेद ४ वर्ण ५ गंध ६ रस ७ स्पर्श ८ गुरुलघु ९
शब्द १० रूपो दशविधः पुद्गलानां परिणामः सोऽपि तथाविधक्षेत्रस्वाभाव्याद्विदुःखदस्तथाहि-प्रतिक्षणमाहार्यैस्तैस्तैः
पुद्गलैः सार्द्धं सर्वबलक्षणो बंधनपरिणामो नारकाणां ज्वलज्ज्वलनयोगादप्यतिदारुणः १ । गतिरपि करभादितुल्या सापि तप्ताय:-
पुंजोपरिचरणचंक्रमणादपि दारुणतरा २ । संस्थानमतीव हुंडं छिन्नपक्षपक्षिसदृक्षं दृग्गोचरीभूतमात्रमप्यात्मनो मनोमहोद्वेग-

मिथ्यादर्शनिनैरयिका अपि विभंगज्ञानतो दूरात् परस्परं निरीक्ष्य क्रुत्कृशानुना प्रज्वलतो निर्मायातिघोरं रूप वैक्रिय तेष्वेव स्वस्वनरकावासकेषु क्षेत्रानुभावसंभवैः पृथिवीपरिणतिरूपैर्विकुर्वितैर्वा शक्तिकुंतकृपाणादिभिः प्रहरणैः करचरणरदनादिभिश्च परस्पराभिघातजननाद् विकृततनवो निर्झर निस्वनंतः शूनांतर्गतमहिपादय इव रुधिरकर्दमे वेल्लंते । सम्यग्दर्शनिनैरयिकास्तु जन्मांतरे नूनमस्माभिः कृतं किमपि दुष्कृतं येन वयमीदृग्विधे दुःखांभोनिधौ निमग्ना इति भावयंतः सम्यक् सहंते परोदीरितान्यसुखानि; न पुनः परेषामुत्पादयंति दृष्टकटुविपाकत्वादत एवैतेषां सम्यग्दर्शनिमिथ्यादर्शनिनां श्रीपचमांगे १८ शते ५ उद्देशे वेदनाविहितो विशेषो निगदितः । मानसिकासातप्रभूततया तु मिथ्यादृष्टिभ्यः सम्यग्दृष्टयो भूयिष्ठ दुःखाः प्रतिभाविता इत्यन्योन्यविहिता वेदना। परमाधार्मिक निर्मिता तु तप्तायस्त्रपुसीसकपान–प्रतप्तकालायसमयमहिलासमालिंगन–कूटशाल्मल्यग्रसमारोपण–वास्यादितक्षण–लोहघनघात –क्षतक्षारोष्णतैलनिक्षेप–कुंतादिप्रोतन–भ्राष्ट्रभर्जन–क्रकचपाटन–यंत्र-परिपीडन–वैक्रियानेककंकोलूककेसर्यादिकदर्थना–ऽसिपत्रवनप्रवेशन–वैतरणीसरित्प्लावन––तप्तवालुकानिकरावतारण–परस्पर-योधन–प्रभृतिका नैकविधाभिधीयते श्रीमदार्हतसमये । किंच कुंभीषु पच्यमाना नैरयिकास्तीव्रतरप्रादुत्कर्षतः पंचयोजन-शतान्यूर्ध्वमुच्छलंते श्रीजीवाभिगमेऽप्युक्त 'नेरइआणुप्पाऊ–क्कोसो पंचजोअणसयाइं । दुक्खेणभिदुआणं, वेअणसयसंपगाढाण ॥ १ ॥' ऊर्ध्वमुत्पत्य निपतंत पुनर्विकुर्वितैर्वज्रवदनैः शकुनैस्त्रोट्यंते, अवनिनिपतिताश्च विकुर्वित-करालशार्दूलादिभिर्विलुप्यंते, यतस्ते हि परमाधार्मिकाः पापकर्मकर्मठाः क्रूरक्रियाः क्रूरतरपंचाग्निसाधनप्रमृतिक्रियासमा-सादिततत्तादृग्विधक्रूरासुरत्वात् स्वयमन्यैरन्याश्च विडंब्यमानान् विलोक्य नारकान् केलीकिलतयेहत्य महिपमेपकुर्कुटादिक-

क्षितिलोकदुःखा इव दृश्यन्ते । इत्यल्पेभ्योऽल्पेतरसुखाप्रियपाशसम्नादि विवर्धिताः ते । किंबहुना ! यदेषामेवं वेदयितव्यं निरीक्षते मनस्योऽपि न तथा सुखशरीरिणिरपि तथाप्येवमप्येषेऽपि । इति भाविता त्रिविधाऽपि वेदना ।

एतासु च सप्तसु पृथिवीषु यथासम्भवं संख्यातायुषः पञ्चेन्द्रियाः पर्याप्तास्तिर्यञ्चो मनुष्याश्च । तेष्वसंज्ञिनः प्रथमां यावद् यान्ति, सरीसृपास्तु द्वितीयां यावत्, पक्षिणस्तु तृतीयां यावत्, चतुष्पदास्तु चतुर्थीं यावत्, उरगास्तु पञ्चमीं यावत्, नार्यस्तु षष्ठीं यावत्, सप्तमपृथिव्यां तु मनुजा मत्स्याश्च यथासम्भवं नान्ये पञ्चेन्द्रियाः । अत्र पुनरसंज्ञिनस्तिर्यञ्च एव ग्राह्या न पुनर्मनुष्यास्तेषामपर्याप्तत्वेन निरयगमनाभावात्, तथा संज्ञिनो ये निरये यथासम्भवं तेषामायुःकृतो विशेषस्तथा च श्रीमदर्हदागमः 'असण्णिणं णेरइयाउं पकरेमाणे जहन्नेणं दसवाससहस्साइं उक्कोसेणं पलिओवमस्स असंखिज्जइभागं पकरेंति ।' तथा तेषां ज्ञानकृतोऽपि विशेषो यद् इमाः असंज्ञिनः स्वयमानास्तथाविधमव्यक्ता पर्याप्तापत्राणां नात्यन्त मध्यमविधवेदनामाश्रयन्ति । सरीसृपास्तु हयपरिसर्पा गोधानकुलादयोऽभसेयाः । तथा चतुर्थ्यां सिंहो यातीति यदुक्तं चतुष्पदाः तेन सिंहोपलक्षिता अन्येऽपि चतुष्पदा ग्राह्याः । उरगास्तु सर्पादयो विज्ञेयाः, सरीसृपादयः सर्वेऽपि सम्मूर्छिमा एव ग्राह्याः । तथा सर्वेषाः पक्षिणश्च प्रमाणतो मत्स्यास्तथैव प्रायोऽमुष्या निरयगामिनीति पुनर्विहितपर्यवसितप्रतिमाराधादिपातकाः प्रयान्ति नरकेषु प्रायोऽमुष्याः न पुनरयं नियमः यतो निरयागताऽप्यमना अपि केचनैते संप्राप्य सम्यग्दर्शनादिकं प्राप्नुवन्त्येव गतिं प्रयतमाः । सेवार्तसंहननिनां पृथिवीद्वयं यावदेव गमनम् । कीलिकासंहननेन तु तृतीयां यावत् । अर्धनाराचेन तु चतुर्थीं यावत् । नाराचेन तु पञ्चमीं यावत् । ऋषभनाराचेन तु षष्ठीं यावत् । वज्रऋषभनाराचसंहननेन तु सप्तमीं यावत् भवति गमनं

जंतूनां महारंभमहापरिग्रहमांसास्वादनपंचाक्षप्रतियातनप्रभृतिमहादुष्कृतनिर्मितिस्वरूपविहितमहामंतूनाम् ।
अथैतासु सप्तसु लेश्या विभागेन विभाव्यंते, तथाहि—प्रथमद्वितीयपृथिव्योः कापोतलेश्या नवरं द्वितीयस्यां क्लिष्टतरा
ज्ञेया । एवमन्यास्वपि सजातीयलेश्याऽघोघः क्लिष्टतरा क्लिष्टतमा च वाच्या तृतीयस्यां केषांचित् प्रथमप्रतरगतानां कापोता
उत्कर्षतोऽप्येतस्याः पल्योपमासंख्येयभागसमधिकसागरसमानत्रिकस्थितिकत्वात् शेषप्रतरगतानां तु नीला । पंकप्रभायां तु
नीललेश्यैव । पंचम्यां पुनः केषांचित् प्रथमप्रतरसंस्थितानां नीला उत्कर्षतोप्यस्याः पल्योपमासंख्येयभागाभ्यधिकदशो-
दधिसमसंख्येयसमयं यावदवस्थानात् । शेषप्रतरसंस्थितानां तु कृष्णा । षष्ठसप्तमपृथिव्योस्तु कृष्णैव एता अनंतरोक्ता
नैरयिकाणां द्रव्यलेश्या अवस्थिता विज्ञेयाः भावपरावृत्त्या पुनरेतेषां भवंति षडपि लेश्याः । एवमग्रे सुराधिकारेऽपि भाव-
नीयम् इति भाविताः सप्तविधाः किंचिन्नारकाः ।
अथ किंचित्तिर्यक्स्वरूपं प्ररूप्यते श्रीमदार्हतश्रुतानुसारेण तथाहि—तिर्यंचः समय(३)संख्येया भवेयुर्वारिचर—स्थलचर—
खेचरभेदात् । तेषु वारिचरा मत्स्यकच्छपग्राहमकरशिशुमारप्रभृतयो विज्ञेयाः । स्थलचारिणस्तु चतुष्पदपरिसर्पभेदाद्
द्विविधा । तत्र चतुष्पदाश्चतुर्विधाः प्रोक्ता एकखुरद्विखुरगंडीपदसनखपदभेदात् तेष्वेकः खुरश्चरणाधोवर्त्यस्थिविशेषो येषां ते
एकखुरास्तुरगादयः । एवं द्विखुरा गोप्रभृतयः । गंडी कमलकर्णिका तद्वद् वृत्ततया पदानि येषा ते गंडीपदा दंतिप्रभृतयः ।
सनखपदाः पुनः पंचाननादयो ज्ञेयाः । परिसर्पास्तु नयन( २ )मेयप्रकारा भुजोरपरिसर्पभेदात् । तेषु भुजपरिसर्पा गोधान-
कुलादयः समवसेयाः । उरःपरिसर्पास्तु सर्पगोणसप्रभृतयो विज्ञेयाः । खचरास्तु चर्मपक्षिलोमपक्षिसमुद्गपक्षिविततपक्षि-

एतेभ्योऽपि परतः
वगाह्य चतुर्योजनविस्तारा भवेयुश्चत्वारोऽतरद्वीपा हयकर्ण १ गजकर्ण २ गोकर्ण ३ शकुलीकर्ण ४ नामानः। एतेभ्योऽपि परतः पंचयोजनशतान्यवगाह्य पचयोजनशतव्यासा आदर्शमुख १ मेढकमुखा २ ऽजामुख ३ गोमुख ४ नामानश्चत्वारो द्वीपा भवंति। तेभ्योऽपि परतः षड्योजनशतान्यवगाह्य षड्योजनशतविस्तारा अश्वमुख १ हस्तिमुख २ सिंहमुख ३ व्याघ्रमुख ४ नामानः श्रुति(४)मिता द्वीपा भवेयुः। तेभ्योऽपि परतः सप्तयोजनशतान्यवगाह्य सप्तयोजनशतविस्तारा अश्वकर्ण १ हरिकर्णा २ कर्ण ३–कर्णप्रावरणाभिधानाश्चत्वारो भवति द्वीपाः। तेभ्योऽपि परतो वसु(८)मितयोजनशतान्यवगाह्य वसु(८)मितयोजनशतव्यासा उल्कामुख १ मेघमुख २ विद्युन्मुख ३ मेघविद्युद्दता ४ ह्वयाश्चत्वारो भवेयुर्द्वीपाः। तेभ्योऽपि परतो नवयोजनशतविस्तारा भवेयुर्वेद(४)माना द्वीपा घनदंत १ लष्टदत २ गूढदंत ३ शुद्धदंत४ नामानः। एवं सप्त वेद(४)गुणिता भवेयुरष्टाविंशतिः अंतरद्वीपाः हिमवति महीभृति। एवमैरवतवर्षसीमाकारिणि शिखरिण्यपि धरिणीधरे भवंति वसुविंशति(२८)सम्मिता अतरद्वीपाः। एवं षट्पंचाशद् भवंति, एतेषु षट्पचाशदतरद्वीपेषु जाता अंतरद्वीपजाः प्रोच्यंते। एतेषु युगलधर्माणो मनुजास्तत्तद् द्वीपनाम्ना परिवसंति। ते च वज्रऋषभनाराचसंहनिनः समचतुरस्रसंस्थाना इत्यादितत्तनुसुषमावर्णनं प्रथमलहर्यां प्रथमतरगे कृत तेन तत एव विलोकनीयम्। एतेषां च पृष्ठिकरंडकाश्चतुष्षष्टिसंख्याः। तनुमानं पुनरेतेषां वसु(८)संख्यानि धनुषां शतानि। आयुः पुनरेषां पल्योपमस्यासंख्येयभागः। आहारश्चैतेषां चतुर्थभक्तेन। अपत्यपालनं पुनरेषां स्मरशरसमधिकाशीति(८५)दिनानि। उक्तं च 'अंतरदीवेसु नरा, धणुसयअट्ठुस्सया सया मुइआ। पालंति मिहुणभावं, पल्लस्स असंखभागाऊ॥ १॥ चउसट्ठीपिट्ठकरंडयाण, मणुआण तेसिमाहारो॥ भत्तस्स

चउरष्टम उ पणमीइ विम्बाशुपासणया ॥ २ ॥' इति एतेऽपि षट्पंचाशदन्तरद्वीपेषु मनुष्याः कल्पसाल
पादपफलोपभोगिनः। एतेषु द्वीपेषु एतेषु च युगलिकक्षेत्रेषु त्रिदशस्मितेषु न दिनपतिशशिग्रहर्क्षविग्रहस्य, न च
पृथग्ग्रहनक्षत्र[illegible]धीरकणोत्सवः। मरणेन तेषु देवगमनात्। इति भाविताः त्रिविधविधाः संज्ञिनो मनुष्याः ॥

अथ चतुर्विधसुरस्वरूपं प्ररूप्यते। त्रिविधमपि—भवनपतिव्यंतरज्योतिर्वैमानिकभेदाच्चतुर्विधाः। तेषु भवन-
वासिनो दशविधाः स्वस्वनिकायभेदेन। तद्यथा—असुरकुमारा १ नागकुमाराः २ सुवर्णकुमारा ३ विद्युत्कुमारा ४ अग्नि
कुमारा ५ द्वीपकुमारा ६ उदधिकुमारा ७ दिक्कुमाराः ८ पवनकुमाराः ९ स्तनितकुमाराः १०। एते च मंदरस्याधस्ताद्दक्षि-
णोत्तरयोश्च सर्वे भवंतीति दाक्षिणात्योदीच्यभेदेन ते प्रत्येकं द्विविधाः। एवं विंशतिभेदा भवंति भवनवासि
नाम्। एषु दाक्षिणात्यानामसुरादीनामेते अधीपतयो यथापर्यायं, तद्यथा—चमर १ धरण २ वेणुदेव ३ हरिकांत ४
अग्निशिख ५ पूर्ण ६ जलकांत ७ अमितगति ८ वेलंब ९ घोष १० अभिधानाः। उदीच्यानां पुनरसुरादीनामेते पुरुहूताः
क्रमश उत्तराशाभाजामने। तद्यथा—बलि १ भूतानंद २ वेणुदाली ३ हरिसह ४ अग्निमाणव ५ वशिष्ठ ६
जलप्रभ ७ अमितवाहन ८ प्रभंजन ९ महाघोष १० नामानः। एषामन्यतरोऽपि सुरपतिर्जंबूद्वीपमातपत्रं, मंदरं च दंड
निर्मातुमनल्पशक्तिः निभाय च यष्टुं चामरस्येनाऽपि येन सर्वतस्तस्य देवतेः समर्थः चतुर्णामपि ।

अथैषां प्रत्येकं चिन्हविशेषो निगद्यते। तद्यथा—दाक्षिणात्यासुरकुमारेश्वरश्चमरः सुरपतिप्रमुख सकल भूमंडले
ग्रैवेयकाश्म चमरचंचा पादरसुरमदहरणेशामिः ॥ १ ॥ धरणः पन्नगाधिपतिस्तु जंबूद्वीपं फणमंडपेनाऽऽच्छादयितु

मलम् ॥ २ ॥ एव जंबूद्वीपाभिधान सर्वत्र ग्राह्यं वेणुदेवः पक्षेणाऽऽच्छादयितुम् ॥ ३ ॥ हरिकांतो विद्युता प्रकाशयितुम् ॥ ४ ॥
अग्निशिखोऽग्निज्वालयैकयाऽपि ज्वालयितुम् ॥ ५ ॥ पूर्णपाणिस्तलेनैकेनाप्याऽऽच्छादयितुम् ॥ ६ ॥ जलकांतस्त्वेकेनाऽपि
जलकल्लोलेन पुरयितुम् ॥ ७ ॥ अमितगतिस्तु पादपाष्ण्या कंपयितुम् ॥ ८ ॥ वेलंबस्त्वेकया वातलहर्याऽभिव्याप्तुम् ॥ ९ ॥
घोषस्त्वेकेनाऽपि स्तनितध्वनिना पूरयितुमलं जंबूद्वीपम् ॥ १० ॥ उदीच्येषु तु शचीपतिषु पूर्वोक्ता शक्तिरधिकतरा विज्ञेया ।
तिर्यक् तु स्वकीयरूपैरेषां विंशतिमध्यादेकोऽप्यसंख्येयान् द्वीपोदधीन् पूरयितुं समर्थः । एते पुनरसुरप्रभृतयः कुमाराऽऽकार-
त्वात् कुमारवत् क्रीडाप्रियत्वाच्च कुमारा इति कीर्त्यंते ॥

अथैषां चिह्नानि निगद्यंते । असुरकुमाराः शिरःशेखरेषु चूडामणिचिह्नाः । नागकुमारा अलंकारेषु फणचिह्नाः । एवं
सर्वत्रभूषणेष्विति वक्तव्यं । सुपर्णकुमारादीनां क्रमेण सौपर्णेय ३ कुलिश ४ पूर्णकलश ५ केसरि ६ तुरंग ७ सिंधुर ८ मकर
९ शरावसंपुटानि १० चिह्नतया ज्ञेयानि ।

अथैषां वर्णविभागो निगद्यते । असुरकुमाराः श्यामाः । नागोदधिकुमाराः पांडुराः । सुपर्णकुमारदिक्कुमारस्तनितकुमाराः
कनकवर्णाः । विद्युत्कुमाराऽग्निकुमारद्वीपकुमाराः पुनररुणा उत्तप्तस्वर्णवत् किंचिद्रक्ताः । पवनकुमाराश्च प्रियंगुवर्णागरुचयः ।

अथैतेषां वसनवर्णविभागः कीर्त्यते । असुराणां वस्त्राणि शोणवर्णानि, नागोदधिसौदामिनी, द्वीपवह्निकुमाराणां पुनर्नी-
लानि । दिक्स्तनितवैनतेयकुमाराणां तु श्वेतानि । समीरकुमाराणां पुनः संध्यारागमहद्युतीनि ।

अथैतेषां सामानिकात्मरक्षकसुरसंख्या निगद्यते—चमरपुरुहूतस्य चतुष्षष्टिः सहस्राणि सामानिकासुराणां बलेस्तु षष्टिसह-

भवनानि भवनवासिनां देवानाम् ।

अथैषां संख्या निगद्यते। असुरादीनां त्रयाणां निकायानां दाक्षिणात्यानां क्रमेण चतुस्त्रिंशच्चतुश्चत्वारिंशदष्टत्रिंशल्लक्ष-संख्यानि भवनानि भवेयुः। विद्युत्कुमारप्रभृतीनां तु पंचनिकायानां चत्वारिंशल्लक्षाणि। वायुकुमाराणां तु पंचाशल्लक्ष-संख्यानि। स्तनितकुमाराणां तु चत्वारिंशल्लक्षाणि भवति भवनानाम्, उदीच्यानां पुनरसुरादिनिकायानामेतान्येव चतुश्चतुर्लक्ष-हीनानि विज्ञेयानि। उभयनिकायभवनसंख्यामीलने तु द्विसप्ततिलक्षसमधिकाः सप्तकोट्यो भवेयुस्तावतानाम्। उक्तं किंचिद् भवनपतिदैवतस्वरूपम्।

अथ व्यंतर-सुरस्वरूपं लिख्यते लेशतस्तथाहि-रत्नप्रभायाः प्रथमयोजनसहस्रेऽध उपरि च योजनशतन्यूने व्यंतरसुराणां मनोहरतराणि पूर्वोक्तमानप्रकाराणि नगराणि मांत्यसंख्येयानि रत्नमयानि तानि पुनर्महांति जंबूद्वीपसमानानि, मध्यमानि महाविदेहमानानि, लघूनि पुनर्भरतवर्षप्रमाणानि। तेषु पुनर्नगरेषु व्यंतरसुराणां भाति वसु(८)मिता निकायाः पिशाच १ भूत २ यक्ष ३ रक्षः ४ किंनर ५ किंपुरुष ६ महोरग ७ गंधर्व ८ नामानः। एतेऽपि दाक्षिणा उदीच्या इति भवं-त्येतेषां षोडशभेदाः। एतेषां च मध्ये दाक्षिणात्यानां पिशाचादीनामेते वसु(८)मिताः सुरपतयस्तथाहि-काल १ सुरूप २ पूर्णभद्र ३ भीम ४ किंनर ५ सत्पुरुषा ६ ऽतिकाय ७ गीतरति ८ नामानः। उदीच्यानां पुनः पिशाचादीनां महाकाल १ प्रतिरूप २ माणिभद्र ३ महाभाग ४ किंपुरुष ५ महापुरुष ६ महाकाय ७ गीतयशो ८ ऽभिधाना भवेयुर्नाकिनायकाः। अथैषां चिह्नानि निगद्यंते तथाहि-पिशाचादीनामानुपुर्व्या कदंब १ सुलस २ वट ३ खट्वांगा ४ ऽशोक ५ चंपक ६ नाग ७

हिमरश्मेर्विमानसमक्ष्मातलात्तु वसु(८)मितैर्योजनानां शतैरशीतिसमधिकैः । नक्षत्राणां तु मध्ये सर्वेषामधोभागे भरणीनक्षत्रं
चारं चरति, उपरि पुनः सर्वेषां स्वातिधिषण्यं सर्वेषां बहिस्तु मूलम्, अभ्यंतरे पुनरभिजित्। केचित् पुनरेवमाहुः समभूतलान्न-
वतिसमधिकानि सप्तयोजनशतानि गत्वा भवति विमानानि, तारनिकरस्य तारकनिकरस्य चोपरि योजन दशशतकव्यतिक्रमे
भवेयुर्वासरपतीना विमानानि, तेषामुपरि चाशीतियोजनातिक्रमे भवंति विमानानि कुमुदिनीनायकानां, तेषां चोपरि योजन-
चतुष्कव्यतिक्रमे भवति धिषण्यानां विमानानि, तेषां चोपरिष्टात् श्रुति( ४ )मितयोजनातिक्रमे बुधग्रहस्य विमानम्, तदुपरि
च योजनत्रिकातिक्रमे शुक्रस्य विमानम्। एवमुपर्युपरि योजनत्रयगमने क्रमेण सुरगुरुधरिणीसुतरविसुतानां विमानानि
भवंति। एवं सर्वेषां मीलने दशोत्तर योजनशतं भवति ज्योतिश्चक्रस्य चारक्षेत्रं। एतज्ज्योतिश्चक्रं मनुष्यक्षेत्रांतश्चरं तद्बहि-
स्तु स्थिर चरन्तु मंदरस्य परितो योजनानामेकविंशतिसमधिकान्येकादशशतान्यतरं निर्माय चरति स्थिर पुनस्तेषामेकादशो-
त्तराण्येकादशशतान्यंतर कृत्वाऽलोकस्य तिष्ठति। तत्सन्निधानवर्ति इमानि पुनश्चंद्रादीनां विमानान्यर्धीकृतकपित्थसंस्थानानि।
एतत् सस्थानसस्थितानि पीठानि विमानानां ज्ञेयानि। तदुपरि च चंद्रादीनां प्रासादास्ते च तथा कथंचिद् व्यवस्थिता यथा
पीठैः सह तेषा प्रायो वृत्तसंस्थान स्यात्तच्च दूरतया समवर्तुलसंस्थितं प्रतिभाति। तथैतानि स्फटिकमणिमयानि लवणाऽर्णवे
तु तथा जगत्स्वाभाव्यादम्भःस्फटिकमयानि। अत एव तेषां लवणशिखांतश्चरतां न जलनिर्मितो व्याघातः। तथै-
तान्यऽसख्येयेभ्योऽपि व्यतरनगरेभ्यः सकाशात् संख्येयगुणानि।

अथैषां प्रपंचादिप्रमाणं प्ररूप्यते। तथाहि–प्रमाणांगुलेन निष्पन्नं योजनं बुद्ध्यैकषष्टिभागी क्रियते। तादृशाः षट्-

पंचाशदेकषष्टिभागीकृतयोजनमाना प्रमाणं हिमकरविमानस्य, अष्टचत्वारिंशत् सहस्रांशोः। ग्रहाणां तु विमानानि योजनार्धं, नक्षत्राणां तु गव्यूतमेकं, ताराणां पुनर्गव्यूतार्धमेतत् प्रमाणमायामविस्ताराभ्यां ज्ञेयं ज्योतिष्कविमानानाम्। एतदर्धं पुनरेषामुत्सेधः मनुष्यक्षेत्राद्बहिःस्थितस्य ज्योतिष्कस्य विमानानामुक्तप्रमाणस्यार्धं विज्ञेयमायामादिषु। एते पुनर्ज्योतिष्काः पंचविधाः चन्द्राः सूर्या ग्रहा नक्षत्राणि ताराश्च। एते च यथोत्तरं शीघ्रगतयो महर्द्धिकास्तु वैपरीत्येन। एतेषां मध्ये तारा पंचवर्णा ज्ञेयाः पुनरुत्तप्ततपनीयवद्दीपिताः। सर्वेऽपि चैते विशिष्टनेपथ्यधारिणः मौक्तिकसमलङ्कृतमौलयः। ककुदं चंद्रमसां मुकुटाग्रभागे प्रभामण्डलस्थानीयं चंद्रमण्डलाकारं चिह्नं, एवं भास्करेश्वरादीनामपि मुकुटाग्रभागे स्वस्वमण्डलाकारं चिह्नं ज्ञातव्यम्। एतानि ज्योतिष्कविमानानि यद्यपि जगत्स्वाभाव्यान्निरालंबनान्यपि चरंति, तथाप्याभियोगिका देवाः स्वाधिपाभियोगिकनामकर्मोदयात् समानजातीयानां हीनजातीयानां च तेषामितरेषां पुरतो निजस्वामिकर्मकर्मठतया वयमे तस्य माननीया इति स्वस्वामिसामर्थ्यं प्रादुष्करणेनात्यन्तप्रमुदितचित्ताः सततं वहनशीलान्यपि विमानान्यधः स्थित्वा सिंहादिरूपधारिणो वहंति, यथा कश्चिदसमञ्जसमपि महतस्य सम्मत इति नियमबुद्धिरूपमाये स्वोचितस्वस्वामिकर्म कुर्वंते, एवं तेऽपि देवाश्चंद्रादीनां विमानानि वहंति। तत्र चंद्रविमानं षोडशसुरसहस्राणि वहंति ते चैवं चत्वारि सहस्राणि केसरिरूपधारिणां सुराणां प्राक्तनपार्श्वे एवं चत्वारि सहस्राणि करिरूपधारिणां दक्षिणपार्श्वे, चत्वारि च वृषभरूपधारिणां पश्चिमतश्चत्वारि च तुरंगरूपधारिणामुत्तरतः, एवं भवंति चंद्रविमानवाहकदेवानां षोडशसहस्राणि। एवं रविविमानवाहकानामपि षोडशसहस्राणि ज्ञातव्यानि। ग्रहविमानवाहकानामप्येवं अष्ट( ८ )संख्यानि सहस्राणि ज्ञेयानि। नक्षत्राणां तु

चतुःसहस्राणि । तारकाणां पुनर्द्वे सहस्रे । एतेषां पचविधज्योतिष्काणां मध्ये चंद्रसूर्याख्यौ द्वौ इद्रौ तत्रैकस्य कुमुदबंधो- मंगलप्रभृतयोऽष्टाशीतिर्ग्रहा अभिजित्प्रभृतीनि च नक्षत्राणि वसुविंशति( २८ )मितानि तारककोटीकोटीनां च षट्षष्टि सहस्राणि नवशतानि पंचसप्ततिश्च भवति परिवारः । ननु मनुष्यक्षेत्रातः सर्वसंख्यया चंद्रमसां द्वात्रिंशदधिकं शतं स्यात् एकै- कस्य च चद्रस्य चेदेतावत् सैन्य भवेत्तर्हि कथं पचचत्वारिंशद् योजनलक्षमाने मनुष्यक्षेत्रे तत् माति ? उच्यते इह द्वे मते तत्रैके सूरयः कोटीनामेव कोटीकोटीति संज्ञान्तरं मन्यते । तेनैतास्ताराणां कोटय एव ग्राह्या न तु कोटीकोटयस्तथा पूर्वाचार्य- प्रसिद्धेः । अन्ये पुनरेवमाहुः । ' नगपुढविविमाणाई मिणसु पमाणंगुलेणं तु ' इति वचनात् प्रमाणांगुलनिष्पन्नानां ताराविमानानां स्वरूपेण यथोक्तसंख्याः कोट्य एव संति परं यदा उत्सेधांगुलेन सर्वतो मीयंते तदा यथोक्तमानाः कोटीकोटीया जायते इति । तत्त्व तु पंचमाववोधिनो विदंति ।

एषा पुनरष्टाशीतिग्रहाणां मध्ये राहुर्द्विप्रकारः पर्वराहुर्नित्यराहुश्च, तेन तयोः स्वरूपमुच्यते । तथाहि-पर्वराहुः कदा- चिदागत्य निजविमानेन शशिविमानं सूर्यविमानं वा तिरोधत्ते । तिरोहिते पुनरस्मिन् जनानां ग्रहणमिति प्रतीतिः । स च जघन्येन षट्सु मासेष्वतिक्रातेषु शशिनः सूर्यस्य च करोत्युपरागम् । उत्कर्षतस्तु चंद्रमसो द्विचत्वारिंशन्मासेषु समतिक्रांतेषु सहस्रांशोः पुनरष्टचत्वारिंशत्परिवत्सरेषु समतीतेषु विधत्ते पर्वराहुर्निजविमानेनाच्छादनम्; नित्यराहुविमानं तु कृत्स्नं सर्वकालं कलाभृद्विमानाद्धोऽविरहितं चतुर्भिरंगुलैरप्राप्तं च चंद्रविमानास्याऽधस्ताच्चारं चरति । तच्चैवं प्रतिपद आरभ्य प्रति- दिनमेकैकां कुमुदिनीपतिमंडलकलां बहुलपक्षे समावृणोति सौनपंचदशभागेन शुक्लपक्षे तु प्रतिपद आरभ्य तथैव मुंचति, इह

अथ नरक्षेत्रे शशिसूर्याणां प्रतिदिनमपरापरमंडलेषु परिभ्रमणतोऽनवस्थितांतरत्वात्तद्बहिर्वर्तिनां तेषां घटाकारावस्थिता-
नामंतरालप्रमाणमुच्यते । तथाहि—मनुष्यक्षेत्राद् बहिः शशिनः सकाशात्सूर्यस्य सूर्याच्च चंद्रमसः पंचाशद्योजनसहस्राण्यंतरम्
एकस्माद्विधोः सकाशाद् द्वितीयविधोरेकस्मादहिमद्युतेश्च द्वितीयाहिमद्युतेः साधिकयोजनलक्षमंतरं प्ररूपितं श्रीमदार्हता-
गमे । एतच्चांतरं पूर्वोक्तयोः पंचाशद्योजनसहस्ररूपयोर्द्वयोरंतरयोर्मीलने मध्यस्थायिनो नभोमणिविमानस्य विधुविमानस्य
वा संबंधिनो विष्कंभस्य प्रक्षेपे च स्यात् ।

सांप्रतं द्वीपोदधिषु शशिसूर्यसंख्याऽभिधीयते । तत्राऽपि प्रथमं तेषामेव प्रमाणमुच्यते तच्च सूक्ष्मोद्धारसागरसमानसार्द्ध-
द्वैतसमयैः स्यात्, तेन तत् स्वरूप प्रथमलहरीप्रथमतरंगप्रोक्तमपि प्रस्तावागतत्वात् किञ्चिदुच्यते तथाहि—आयामविष्कंभाभ्या-
मवगाहेन चोत्सेधांगुलनिष्पन्नैकयोजनमानो वृत्तसंस्थानः पल्य एकदिनादिसप्तदिनयावज्जातयुगलजमनुजमूर्धमूर्धजैर्निबिडतरं
तथा पूर्यते यथा कृशानुरपि न दहति पवनोऽपि नापहरति जलमपि न प्रवाहयति तद्वालाग्राणि । ततश्च प्रतिसमयमेकैक-
वालाग्रापहारेण यावद्भिः समयैः स पल्यो निर्लेपः स्यात्तावत्समयमानमुद्धारपल्योपमं बादरम् । एतेषां च दशकोटीकोटी-
भिरुद्धारसागरसमं स्याद्बादरं; बादरे च प्ररूपिते सूक्ष्मं सुखावसेयं स्यादिति बादरोद्धारपल्योपमसागरोपमप्ररूपणं; न
पुनरनयोः प्ररूपणे किंचिदपरं विशिष्टं प्रयोजनम् । अथ सूक्ष्मयोस्तयोः प्ररूपणा क्रियते । तान्येव वालाग्राणि प्रत्येकमसंख्येय-
खंडीक्रियंते । तानि च खडानि द्रव्यतः प्रत्येकमत्यंतशुद्धलोचनः छद्मस्थो यदतीव सूक्ष्मं पुद्गलद्रव्यं चक्षुषा पश्यति तद-
संख्येयभागमात्राणि । क्षेत्रस्तु सूक्ष्मपनकशरीरं यावति क्षेत्रेऽवगाहते ततोऽसंख्येयगुणानि बादरपर्याप्तपृथिवीकायिकतनुतुल्या-

द्विपञ्चाशत्सिद्धायतनेषु चतुर्विधसुराश्चातुर्मासिकसावत्सरिकजिनजननादिमहामहेष्वष्टाह्निकामहिमानं कुर्वन्तः सुखेनासते, तदेव नंद्या समृद्ध्या ईश्वरः स्फातिमान् नतु नाम्नैवेति नंदीश्वरः। अय चाष्टमद्वीपः। नवमः पुनरशोकवीतशोकाभिधानयोः पूर्वापरार्द्धे तयोः सर्ववज्ररत्नमयपर्वतप्रभृतेश्च प्रभयारुणत्वादरुणो, दशमस्त्वरुणवर, एकादशोऽरुणवरावभासः, द्वादशः कुडलस्त्रयोदशः कुडलवरश्चतुर्दशः कुंडलवरावभास एतानि पुनर्जंबूद्वीपादारभ्य क्रमेणाऽभिधानानि। अत ऊर्ध्वं शंखरुचक-भुजगकुशक्रोचादिनामभिर्द्वीपाभोनिधयो ज्ञेया यथा कथंचित्; परं तेऽपि सर्वे शंखः शखवरः शंखवरावभास इत्येवं त्रिप्रत्यवतारा विज्ञेयाः। एते च हारार्द्धहारप्रभृत्यलङ्कारचीनांशुकपट्टांशुकाद्यंशुकगधनीलोत्पलाद्युत्पलतिलकपद्मनिधानजल-कांतचंद्रकातादिमणिविधानहिमवदादिवर्षधरमहीधरपद्महृदादिमहाह्रदमदाकिनीसिंधुप्रभृतिशैवलिनीकच्छादिविजयवक्षस्कार-सौधर्मादिकल्पवासदेवकुरूत्तरकुरुमदिरतिर्यग्लोकवार्त्तिशक्राद्यावासकूटाभिजित्प्रभृतिनक्षत्रशशिसूर्यप्रभृतिप्रशस्तवस्तुनामभिर-भिधेयाः। पर ते सर्वेऽपि देवद्वीपादर्वाक् सूर्यवरावभाससागर यावत् पूर्वोक्तविधिना त्रिप्रत्यवतारा च विज्ञेयाः प्रत्येक-मेकनाम्नाऽसख्येयाश्च ततः परं देव १ नाग २ यक्ष ३ भूत ४ स्वयंभूरमणाभिधानाः पञ्च प्रत्येकमेकैका एव विज्ञेया न पुनस्त्रिप्रत्यवतारा नापि पूर्ववत् प्रत्येकमसंख्येयाः। अय भावः यथा जंबूलवणादिनामभिः प्रत्येकमसंख्येया द्वीपोदधयः संति तथा न देवादिमंदर(५)मितनामभिरपरो द्वीपः सागरो वा विद्यत इत्यर्थः। एतेषां समुद्राणां मध्ये लवणजलधौ लवणादपि क्षारतरं नीरं, वारुणीवरे तु वारुणी मदिरा, सा च सुजातपरमद्रव्यसन्मिश्रा ततोऽपि मधुरतररसं सलिलं, क्षीरवरे तु मधुधूलिमिश्रितत्रिभागावर्त्तितक्षीरादपि मनोहरतरास्वादमुदकं, घृतवरे तु शारदिकसुरभितरहैयंगवीनादपि रम्यतररसं

योजनशतानि सप्तदशाधिकान्युत्सेधे चत्वारि योजनशतानि सक्रोशत्रिंशद्योजनसमधिकानि च महीतलेऽवगाढः स पुनरधो-मध्योर्ध्वभागेषु च क्रमेण द्वाविंशत्यधिकानि दशयोजनशतानि त्रयोविंशत्यधिकानि सप्तयोजनशतानि चतुर्विंशत्यधिकानि चतुर्योजनशतानि विस्तीर्णो विज्ञेयः । यथा पुष्करे च द्वीपार्द्धे मानुषोत्तरस्तथा कुंडलवराभिधद्वीपे । तदर्द्धमीमाकृत् वप्राकार-कुंडलाकारः कुंडलवराख्यः क्षितिधरः, स च योजनसहस्रं महीतलेऽवगाढः द्विचत्वारिंशद् योजनसहस्राण्युत्सेधे अध ऊर्ध्व-भागयोश्च मानुषोत्तरभूधरवद् विस्तीर्णः, मध्यभागे तु द्वाविंशत्यधिकानि सप्तयोजनशतानि । एवं रुचकवरद्वीपेऽपि वप्राकृति-स्तदर्द्धविभागविधायी रुचकाभिधो भूधरः, स चैकं योजनसहस्रमवनितलेऽवगाढवान् चतुरशीतियोजनसहस्राणि चोत्सेधे मूले च दशयोजनसहस्राणि द्वाविंशत्यधिकानि विस्तारवान् मध्यविस्तारस्तु तस्य सप्तयोजनसहस्राणि द्वाविंशत्यधिकानि शिरोविस्तारस्तु तस्य वेद( ४ )मितसहस्राणि चतुर्विंशत्यधिकानि । अत्र च श्रीमदागमेयगाथास्तथाहि ' पुक्खरवरदीवड्ढं, परिखिवई माणुसुत्तरो सेलो । पायारसरिसरूवो, विभयंतो माणुसं लोगं ॥१॥ सत्तरसएगवीसाइ, जोअण-सयाइं सो समुव्विद्धो । चत्तारि अ तीसाइं, मूले कोसं च ओगाढो ॥ २ ॥ दस वा वीसाइं अहे, विच्छिन्नो होइ मज्झम्मि ॥ ३ ॥ कुंडलवरस्स मज्झे, नगुत्तमो होइ कुंडलो सेलो । पागारसरिसरूवो, विभयंतो कुंडलं दीवं ॥ ४ ॥ बायालीससहस्से, उव्विद्धो कुंडलो हवइ सेलो । एगं चेव सहस्सं, धरणिअलमहे समोगाढो ॥ ५ ॥ दस चेव जोअणसए, बावीसे विच्छडो अ मूलम्मि । सत्तेव जोअणसए, बावीसे विच्छडो मज्झे ॥ ६ ॥ चत्तारि जोअणसए, चउवीसे विच्छडो अ

एषां च विष्कंभमानं द्वे द्वे योजने । अतस्ते त्र्यशीतिमधिकशतेन गुण्येते जातानि त्रीणि शतानि षट्षष्टिसमधिकानि योजनानाम् । ये च सूर्यमंडलविधुमसंबंधिनोऽष्टचत्वारिंशदेकषष्टिभागीकृतयोजनभागास्ते चतुरशीत्यधिकशतेन गुण्यंते । जातानि ८८३२ एषां च योजनानयनार्थमेकषष्ट्याभागे हृते लब्धं शत चतुश्चत्वारिंशदधिकं योजनानां १४४९/६१ एतच्च पूर्वराशौ प्रक्षिप्यते । जात यथोक्तं क्षेत्रमानम् । यदा तु सर्वाभ्यंतरान् मंडलात् परतो यावत् सर्वबाह्यमंडलात इत्ययं चारस्या-त्मा चित्यते तदा पूर्णानि पंचयोजनशतानि दशाधिकानि भवंति । तथाहि–यदि सूर्यस्यैकेनाहोरात्रेण द्वे योजने एकस्य च योजनस्याष्टचत्वारिंशदेकषष्टिभागाश्चारक्षेत्रं लभ्यते, ततस्त्र्यशीत्यधिकेनाहोरात्रशतेन किं लभ्यते राशित्रयस्थापना

२ ४८/६१ १८३ अत्र च सवर्णनार्थद्वयोर्योजनयोरेकषष्ट्या गुणने उपरितनाष्टचत्वारिंशद् भागप्रक्षेपे च जात १७० । एतत् पुनरन्त्य-राशिना १८३ रूपेण गुण्यते जातानि ३१११०, ततोऽस्य राशेर्योजनानयनार्थमेक षष्ट्या भागे हृते लब्धानि ५१० योजनानि । एतावता तपस्य विष्कभक्षेत्रकाष्ठा शशिनस्तु मंडलविष्कंभः षट्पंचाशदेकषष्टिभागा योजनस्य चारक्षेत्रं पुनर्योजनानि ५०९ मितानि त्रिपचाशत् पुनरेकषष्टिभागा योजनस्य । तथाहि शशिनः पंचदशमंडलानि तदंतराणि च चतुर्दश, एषा च प्रत्येक विष्कंभमान पंचत्रिंशद् योजनानि त्रिंशत् पुनरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य संबधिनश्चत्वारश्च भागाः स्थापना ३५ ३०/६१ ४/७ यदि च चंद्रस्यैकेनाहोरात्रेण षट्त्रिंशद् योजनानि पंचविंशतिश्चैकषष्टिभागा योजनस्य चत्वारश्च सप्तभागा एकषष्टिभागस्य चारक्षेत्रं लभ्यते ततश्चतुर्दशभिरहोरात्रैः किं लभ्यते शशित्रयस्थापना

कल्पातीताश्च । तत्र कल्पः स्थितिर्जीतं मर्यादा
अथ वैमानिकनाकिस्वरूपं प्ररूप्यते । तथाहि—वैमानिका द्वेधा कल्पोपपन्नाः कल्पातीताश्च । तत्र कल्पः स्थितिर्जीतं मर्यादा
चेत्येकार्थाः । स पुनरिंद्रतत्सामानिकादिव्यवस्थारूपस्तं प्रतिपन्नाः कल्पोपपन्ना द्वादशत्रिदशलोकनिवासिनः ग्रैवेयकानुत्तर-
विमानवासिनस्तु कल्पातीताः । तेषां सर्वेषामप्यहमिंद्रत्वात् । कल्पोपपन्ना देवास्तु दशभेदास्तथाहि इंद्राः १ सामानिकाः २
त्रायस्त्रिंशाः ३ पार्षद्याः ४ आत्मरक्षाः ५ लोकपालाः ६ अनीकरूपाः ७ प्रकीर्णकाः ८ आभियोग्याः ९ किल्बिषिकाः १० ।
तेषु पुनरिंद्राः परमैश्वर्यशालिनः सर्वस्यापि स्वर्लोकनिवासिनाकिनिकरस्य स्वामिनस्ते च दशैवं भवंति तद्यथा—सौधर्मादिषु
वसु(८)मितेषु कल्पेषु प्रत्येकमेकैकः आनतप्राणताख्यकल्पद्वैते आरणाच्युतरूपकल्पयुगले च प्रत्येकमेकैक इति १ । तथा
इंद्रनामांतरेण शेषे द्युतिविभवादौ समाने भवाः सामानिकाः इंद्राणाममात्यपितृगुरूपाध्यायवत्पूज्याः परं तेऽपि स्वस्वामि-
तया स्वीकृतवंतः पुरुहूतान्, ते च सौधर्माधिपतिप्रभृतीनां दशानामपि पुरुहूतानां यथा पर्यायं चतुरशीत्य१ऽशीति २
द्वासप्तति ३ सप्तति ४ षष्टि ५ पंचाश ६ चत्वारिंशत् ७ त्रिंशद् ८ विंशति ९ दश १० सहस्रसंख्येया ज्ञेयाः २ । त्रयस्त्रिंशद्देव
त्रायस्त्रिंशास्ते पुनः पुरुहूतानां राज्यचिंताशांतिकपौष्टिकादिकार्यकारिणो मंत्रिपुरोहितस्थानीयाः ३ । पर्षदि साधवः
पार्षद्यास्ते पुनः शचीपतीनां सुहृत्प्राया अभ्यंतरमध्यमबाह्यपर्षद्भेदेन समय( ३ )संख्या विज्ञेयाः ४ । मधवतामात्मानं
रक्षंतीत्यात्मरक्षास्ते पुनः प्रत्यपायाभावेऽपि स्वस्थितिपरिपालनकृते शक्राणां च प्रीत्युत्पादनहेतवे समं ततः सुदृढनिबद्धसुभ-
टोचितपरिकराः कार्मुकासिशक्तिकुंतप्रभृतिहेतिनिवहविहस्तहस्ताः स्वस्वामिविनिवेशितनिष्प्रकंपनेत्राः परेषां क्षोभमापादयंतो-
ऽंगरक्षका इव तिष्ठंति । एते च पूर्वोक्तेभ्यः सामानिकेभ्यो यथाक्रमं चतुर्गुणाः प्ररूपणीयाः ५ । लोकान् पालयंतीति लोकपाला

मारवश्च इव स्वान्ताभिमहृषादिदेवैश्वरवर्जयावना अन्यापिनिर्वत्रम पते च सोम १ यम २ वरुण ३ वैश्रवणाख्यास्तारो लोकपालाः ४। अनीकं च तुरग १ गजेन्द्र २ रथ ३ पत्तय ४ वृष ५ गंधर्व ६ नाट्यमेदतः ७ सप्तविधम्। तेषु प्रथमानि षण्नीकानि संग्रामसाधितानि गंधर्वनाट्यानीके पुनरुपभोगार्थं ७। प्रकीर्णकास्तु पौरजनपदादिप्रकृतिसदृशाः ८ तथाऽभि योग्याः पुनर्दासवत् प्रेष्यकर्मणि व्यापार्यमाणा इत्यभियोग्याः प्रेष्यप्रायाः ९। किल्बिषमशुभकर्म तदेषां किल्बिषिकाश्चाण्डालप्रायाः १०। एते यथा वैमानिकानां इन्द्रमेदास्तथा भवनपतीनामपि प्ररूपणीयाः। व्यन्तरज्योतिष्कनिकाययोस्तु तथा त्रयस्त्रिंशल्लोकपालवर्जिताः। शेषा अष्टावेव भेदा विशेयाः।

अथ कल्पनामानि निगद्यन्ते सौधर्म १ ईशान २ सनत्कुमार ३ माहेन्द्र ४ ब्रह्म ५ लांतक ६ शुक्र ७ सहस्रारा ऽऽ ८ नत ९ प्राणता ऽऽ १० रणा ११ च्युत १२ नामानस्तावत् ( १२ ) कल्पिताः कल्पा भवेयुः। एतेषां मध्याद्द्वयोः कल्पयोः यथा क्रमं द्वात्रिंशदष्टाविंशति २ द्वादश ३ अष्ट ४ चतुः ५ लक्षपाद ६ चत्वारिंशत् ७ षट् ८ सहस्राणि भवेयुर्विमानानां द्वयोः पुनरानतप्राणतयोः प्रत्येकं शतचतुष्टयं विमानानाम् आरणाच्युतयोस्तु प्रत्येकं शतत्रयम्। अधस्तनग्रैवेयकत्रिके पुनरेकादशोत्तरं शतं विमानानाम्, मध्यमग्रैवेयके तु सप्तोत्तरं शतम्, उपरितनग्रैवेयकत्रिकेषु शतम्। उपरि तु पंचैवानुत्तरविमानानि भवेयुः। तेषां मध्ये सर्वार्थसिद्धनाममहाविमानं प्रसिद्धम्, अस्मिन्नेकावतारिण एव जीवाः सुरतया समुत्पद्यन्ते। तत्परितश्चतुर्दिक्षु चत्वारि विजय १ वैजयंत २ जयंता ३ अपराजिताभिधानानि भवेयुः। एतेषु पुनः संख्येयभवा एव जीवाः समुत्पद्यन्ते देवतया। यदुक्तं ' सव्वट्ठाओ सिद्धिगमा, पयारिम भवम्मि विजयमयमाइसु। भियनायाई

विमाणेहिं, असंखेज्जभवाओ नायव्वा ॥ १ ॥ ’ इति सर्वसंख्यया पुनरूर्ध्वलोके चतुरशीतिलक्षाणि सप्तनवतिसहस्रा-
धिकानि भवति विमानानां गृहभूमिकाकाराः प्रस्तटाः पुनरुपरि लोके द्वापष्टिर्भवंति । ते चैव सौधर्मेशानयोरेकवलयाकार-
तया व्यवस्थितयोः समप्रायभूमिकयोस्त्रयोदशप्रतरा भवति । यद्यपि च सौधर्मे ईशाने च प्रत्येकं त्रयोदशप्रतरास्तथाप्येक-
वलयाकारतया व्यवस्थानात्तयोः समुदितयोस्त्रयोदशविवक्षिताः । एवमन्येष्वप्येकवलयाकारेषु स्वर्लोकेषु वाच्यम्, सनत्कुमार-
माहेंद्रयोस्तु द्वादश, ब्रह्मलोके तु ऋतु( ६ )मिताः, लांतकस्वर्लोके तु पंच, महाशुक्रे तु चत्वारः, सहस्रारेऽपि च, आनत-
प्राणतयोश्च चत्वारः, एव आरणाच्युतयोरपि, ग्रैवेयकनवके पुनः प्रत्येकमेकैकः, एकस्तु प्रस्तटोऽनुत्तरविमानेषु एवं द्वापष्टिः
प्रस्तटा भवंत्यूर्ध्वलोके एतेषु प्रस्तटेषु प्रत्येकमेकैकांतःस्थितो मुख्यविमानभूतः स्याद् विमानेंद्रकः । एवमेते द्वापष्टिर्भवंति ।
एते पुनरुडु १ चंद्र २ रजत ३ वल्गु ४ वीर्य ५ वरुण ६ आनंद ७ इत्यादयो भवेयुः । एतेभ्यश्च चतुर्षु दिक्षु चत्वारः पंक्तयो
भवति विमानानां तास्ताश्च प्रथमप्रस्तटे द्वापष्टिविमानानिकाः स्युः ।

द्वितीयादिषु प्रतरेषु पुनरेकैकविमानहीनाः पंक्तयस्तावद् वाच्या यावद् द्वापष्टितमे प्रतरे तु दिक्ष्वेकैकमेव विमानम् ।
आद्यप्रतरे तु द्वापष्टिरावलिका विमानान्येवं भवंति, एकं देवद्वीपोपरि द्वे च नागसागरे चत्वारि च यक्षद्वीपे भूतसमुद्रे तु
वसु( ८ )मितानि स्वयंभूरमणद्वीपे तु षोडश स्वयंभूरमणार्णवे पुनरेकत्रिंशत् एवमग्रेतनेष्वपि प्रतरेषु वाच्यं यावद् द्वापष्टितमे
प्रतरे चतुर्दिक्षु देवद्वीपोपर्येकैकं विमानम् ।

अथ विमानसंस्थानान्युच्यंते तथाहि–सर्वेष्वपि प्रतरेषु मध्यगतानींद्रकविमानानि वृत्तसंस्थानानि । ततश्चतुर्दिक्षु प्रथमं

त्र्यस्रं ततश्चतुरस्रं ततो वृत्तमेव त्र्यस्रं चतुरस्रं वृत्तमित्येषा परिपाटी तावद् ग्रैवेयपर्यंतः वृत्तविमानानि सर्वाण्यप्येकद्वाराणि त्र्यस्रविमाने तु त्रीणि द्वाराणि चतुरस्रे तु चत्वारि वृत्तविमानानि सर्वाण्यपि प्राकारपरिवेष्टितानि चतुरस्रविमानानि पुनः सर्वाण्यपि चतुर्दिक्षु दंडमात्रस्थे वेदिकापरिक्षिप्तानि त्र्यस्रविमानेषु तु यतो वृत्तविमानं ततो वेदिका स्यात् शेषेषु तु पार्श्वेषु प्राकारः परिक्षिप्तः श्रीमत्क्षेत्रसमासे। यदुक्तं 'सव्वे वट्टविमाणा, एगदुवारा हवंति नायव्वा। तिन्नि य तंसविमाणे, चत्तारि य हुंति चउरंसे ॥ १ ॥ पागारपरिक्खित्ता, वट्टविमाणा हवंति सव्वेऽवि। चउरंस विमाणाणं, चउदिसिं वेइया होइ ॥ २ ॥ जत्तो वट्टविमाणा, तत्तो तंसस्स वेइया होइ। पागारो बोद्धव्वो, अवसेसेसु तु पासेसु ॥ ३ ॥' इति प्रकाशं च पंक्तीनामंतरेषु दिशां विमुच्य कुसुमानीवेतस्ततोऽवकीर्णत्वात् कुसुमावकीर्णानि नैकप्रकारस्वस्तिकादिविविधसंस्थानानि विमानानि भवंति। अथ सौधर्मादिकल्पेष्वावलिकागतपुष्पावकीर्णप्रतरस्थित विमानसंख्याभिधानाय करणमुच्यते यथाहि—सर्वेष्वपि कल्पेषु प्रथमप्रतरगतावलिकाविमानानामंतिमप्रतरस्थितावलिकाविमानानि चैक्यं नीयंते पश्चात्तदर्द्धीक्रियते सर्वार्द्धं च प्रतरसंख्यया गुण्यते ततो विवक्षिते कल्पे आवलिकागतविमानानां सर्वाग्रं भवति तत्र सौधर्मेशानकल्पयुगले प्रथमप्रतरे सर्वावलिकास्वेकोनपंचाशदधिकं त्रयोदशप्रतरे तु चतुर्दशमेकोनपरम् अनयोः मीलने शतचतुष्टयं चत्वारिंशत् समधिकं स्यात्। तदर्द्धे तु सपाद सविंशतम्। एतच्च सौधर्मेशान-संबंधिभिः प्रतरैर्गुण्यते जातं सौधर्मेशानकल्पयुगलावलिका-गत-विमान-सर्वाग्रमेकोनत्रिंशच्छतानि पंचविंशत्यधिकानि २९२५। शेषाणि तु कुसुमावकीर्णकानि विमानानि तानि च सौधर्मेशानकल्पयुगले षष्टिलक्षमध्यादावलिकागतानां पंचविंशतिसमधिकेन-

त्रिशच्छतविमानानां कर्पणादेकोनषष्टिलक्षाणि सप्तनवतिसहस्राणि पंचसप्तत्यधिकानि स्युः ५९९७०७५ एवमन्येष्वपि स्वर्लोकेषु भावना विधेया। अथ सौधर्मेशानसनत्कुमार १ माहेंद्र २ प्रभृतिषु १३ त्रयोदशसु स्थानेषु तत् सुखज्ञानाय यंत्रकं लिख्यते, तच्चेदम्—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ५ अनुत्तरविमान | ५ | ० | ० | ० | १ | ५ | ० |
| ३ ग्रैवेयक | १७ | ९ | २६ | १३ | ३ | ३९ | ६१ |
| ३ ग्रैवेयक | २९ | २१ | ५० | २५ | ३ | ७५ | ३२ |
| ३ ग्रैवेयक | ४१ | ३३ | ७४ | ३७ | ३ | १११ | ० |
| २ आरण ११ अच्युत १२ | ५० | ४५ | १०२ | ५१ | ४ | २०४ | ९६ |
| २ आनत ९ प्राणत १० | ७३ | ६१ | १३४ | ६७ | ४ | २९८ | १३२ |
| १ सहस्रारकल्प ८ | ८९ | ७७ | १६६ | ८३ | ४ | ३३२ | ५६६८ |

ऊर्ध्वमानतादिषु पुनस्ते एव केवलमाधारतया विज्ञेयम् । अथ विमानाधारभूतपृथ्वीपिंडस्य विमानोत्सेधस्य च प्रमाणमुच्यते तथाहि–द्वयोः सौधर्मेशानयोः कल्पयोः सप्तविंशतियोजनशतानि पृथ्वीपिंडो भवत्युत्सेधतः पंचाशतानि च योजनानां विमानोच्चत्वं, तदनुक्रमेण द्वयोः सनत्कुमारमाहेंद्रयोस्तथा ब्रह्मलोकलांतकस्वर्लोकयोस्तथा शुक्रसहस्रारयोस्तथाऽऽनतादिषु श्रुति(४)मितेषु कल्पेषु तथा ग्रैवेयकनवकेऽनुत्तरविमानपंचके एवं द्विके त्रिके चतुष्के नवके पंचके च पृथ्वीपिंडेषु शतमेकं हीयते योजनानाम् । विमानेषु च तदेव वर्द्धते यावदनुत्तरविमानेष्वेकविंशतियोजनशतानि पृथ्वीपिंडोत्सेधः । विमानोच्चत्वं पुनरेकादशशतानि पृथ्वीपिंडविमानोच्चत्वमीलने च सर्वेष्वपि सौधर्मेशानप्रभृतिषु स्थानेषु द्वात्रिंशद् योजनशतानि भवंति ।

अथावलिकागतविमानाना स्वामित्वविभागो विभाव्यते तथाहि–सौधर्मेशानादिषु कल्पेषु दाक्षिणाऽऽवलिकागतविमानानि दाक्षिणात्येन्द्राणाम् , ऊदीच्याऽऽवलिकागतविमानानि पुनरौत्तरसुरेश्वराणाम् । ये पुनर्वृत्तविमानेंद्रकास्ते दाक्षिणात्यस्वःपतीनां पूर्वतः पश्चिमतश्च यानि वृत्तानि विमानानि तान्यपि दक्षिणदिक्स्वःपतेः त्र्यस्राणि चतुरस्राणि च विमानानि सामान्यानि भवति, कोऽर्थः ? अर्द्धं तेषा दक्षिणदिग्पतेः अर्द्धं चोदीचोदिक्स्वामिनः। उक्तं च 'जे दाहिणेण इंदा, दाहिणओ आवली मुणेयव्वा । जे पुण उत्तरइंदा, उत्तरओ आवली तेसिं ॥ १ ॥ पुव्वेण पच्छिमेण य, सामन्ना आवली मुणेयव्वा । जे पुण वट्टविमाणे, मज्झिल्ला दाहिणिल्लाणं ॥ २ ॥ पुव्वेण पच्छिमेण य, जे वट्टा ते वि दाहिणिल्लस्स । तंसचतुरंसगा पुण, सामन्ना हुंति नायव्वा ॥ ३ ॥' इति सर्वेष्वपि च कल्पेषु स्वस्वकल्पावतंसकभूतानि शचीपतिनिवासोचितानि विमानान्यंतिमप्रतरे भवंति । तेभ्यश्च श्रुति(४)मितासु दिक्षु भवेयुर्विमानानि

तदैव ता विहितात्यद्भुतशृंगाराः कंदर्पकोशागारप्रकाराः स्वस्थानस्थिता एवोच्चात्रचानि चेतासि विदधत्यः समुपतिष्ठंते
ततस्ते तथाविधास्ताश्चेतसैव संकल्प्य संभोगसुखमनुभवंति । देव्यस्तु तथाकायसेवास्पर्शादिभिः सर्वत्र दिव्यप्रभावेन तनुषु
शुक्रपुद्गलसंचारतः सुरतसुखं समासाद्य संतुष्यंति पर ते पुद्गला वैक्रियशरीरांतर्गता इति न गर्भाधानहेतवः । ग्रैवेयकानुत्तर-
सुराः पुनरप्रवीचाराः । एते च सर्वेऽपि यथोत्तरमनंतगुणसुखभाजस्तथाहि कायसेविभ्योऽनंतगुणसुखाः स्पर्शसेविनस्ते-
भ्योऽप्यनंतगुणसुखा रूपप्रवीचाराः । एवमनंतगुणत्वं तावद् वाच्यं यावद् अनंतगुणसुखा ग्रैवेयकेभ्योऽनुत्तरसुराः । ऊर्ध्वलोके
तु देवीनामुपपातः स्वर्लोकद्वैतं यावत्, गमनागमने तु तासां सहस्रारं यावत् । सुराणां पुनरच्युतं यावदेव ते भवतो न परतः ।
अथ कल्पयुगलोत्पन्नानामपि देवीनामायुः स्थितिभेदेन पृथक् पृथक् कल्पनिवासिदेवोपभोगयोग्यतान्यक्ति-
र्विभाव्यते । तथाहि–अपरिगृहीतदेवीनां षड्विमानलक्षाणि भवंति, सौधर्मे तद्देवीनां मध्ये याः पल्योपमस्थितयो देव्यो
भवंति ताः सौधर्मसुराणामेवोपभोगयोग्याः । एकसमयाधिकद्विसमयाधिकपल्योपममादौ विधाय येषां दशपल्योपमानि
यावत् स्थितिस्ताः सनत्कुमारसुरयोग्याः। एवं समयाद्यधिकतया स्थितिवृद्धौ यासां विंशतिपल्योपमानि यावदाऽऽयुःस्थितिस्ता
ब्रह्मलोकनाकियोग्याः । एवमेव यासां समयाद्यधिकविंशतेरारभ्य त्रिंशत्पल्योपमानि यावदाऽऽयुर्मर्यादा ताः शुक्रसुर-
लोकसुरोचिताः । एवं त्रिंशतश्चत्वारिंशद् यावद् यदायुःसीमा ताः पुनरानतदेवतदयिताः । चत्वारिंशतस्तु पञ्चाशदवधीकृत्य
पल्योपमानि यदायुरवधिस्ताः पुनरारणसुराणां चेतोरमणकारिण्यः । ईशानसुरलोके पुनः श्रुति( ४ )मितानि विमानलक्षाणि
भवेयुरपरिगृहीतसुरीणाम् । तासां मध्ये साधिकपल्योपममेकद्वित्र्यादिसमयाधिकमारभ्य यासां पंचदशपल्योपमानि याव-

दाऽऽयुःस्थितिका मार्गेणादिक्रमेणैकोत्तरवृद्ध्यापामेव सेवनीयाः सर्वमायोग्य। अनेन क्रमेणैकादिसमयादिसमयसमधिकपल्या पल्योपमदशकान्तं यावत् पंचदशसमयाधिकपंचदशपल्योपमानि यावदायुःस्थितिका ईशानकल्पदेवानां भोग्याः। एवमेव पंचविंशतः पंचत्रिंशत् पल्योपमानि सर्वमीलनेन यावदायुःसीमा ताः सहस्रारसुरभोगोचितास्तु। एवं पंचत्रिंशतः पंच चत्वारिंशत् पल्योपमानि यावत् यावदायुःस्थितिकाः प्राणतदेवसमुचिताः पंचचत्वारिंशतस्तु पंचपंचाशत् पल्योपमानि यावत् यावदायुःस्थितिकाः पुनरच्युतसुरोचिताः। एतेषु पुनः सौधर्मेशानसंबंधिषु मध्यवर्ति( ४६ )मस्त्रिषु विमानलक्षेषु देव्य उत्पत्तिस्थिता विज्ञेयाः।

अथ स्वर्गाणामपरिगृहीतदेवीनां प्रमाणमाख्यायते, तथाहि—स्वस्वयोनियन्त्रयोर्मध्ये मध्यस्थपरिगृह्याः अप्रमरीचीगणना प्राक्-माहेन्द्रामनुष्या देवानामिष्टवचनानामुद्देशकेन नियमते। अनुपमानामनुपमात्तदिनवनिक्षिप्तनामध्यानां च अष्ट(१)प्रमिताः स्वयंसुरपतीनां ज्योतिष्कपतीनां च प्रत्येकं चत्वारश्चत्वारः। अथ अधीश्वरः प्रवीचारणसमये वासवसुपरवैक्रियरूपाणि देवीमिरिक्ष्यते यथाक्रमं निमित्तं तथाहि—यदा शक्रः प्रवीचारतुलामिकमपी भवति तदा वैक्रियमहारूपात्वेन ममपदस्यैकयोजनमाने विमानं सौमोपमासमानं करोति वैक्रियं यस्तु तदंतर्गतविम्बा मणिमयपीठिकायां स एव देवपतिस्तनोस्तु परवैक्रियं तत्समीपे यस्तु पुनरसौ प्रत्येक विकुर्वितेकसमारसरूपाभिर्वसु(८)मिताभिरग्रमहिषीभिः सुर्म नयन(२)मानाभ्यां गंधर्वनाट्यानीकाभ्यां परिकरितः कृतानेकोत्तरवैक्रियशरीरः समस्तोऽपि तस्मिन् विमाने सर्वेषुपरमसमाने। यस्तु पुनः प्रवीचारसुखमनुभवति। एवं प्रवीचारणसमये सर्वसंख्यया देवीरूपाण्यपि सततिसहस्राधिकद्वयस्ससमामानि भवेयुः। उक्तं च 'सक्कस्स देवरण्णो, देवीओ

अट्ठ हुंति नायव्वा । इक्किक्का वि अ इत्तो, विउव्वए सोलस सहस्से ॥ १ ॥ एगं च सयसहस्सं, अट्ठावीसं भवे सहस्साइं । सक्कस्स देवरण्णो, देवीणं हवइ उरोहो ॥ २ ॥' अथ देवानामाहारप्रस्तावादन्येषामपि प्राणिनामाहारस्वरूपप्ररूपणा क्रियते तत्रौजआहारलोमाहारकावलिकाहारभेदात्समय(३)मेयः स्यादाहारः । तेषु जंतोरुत्पत्तिदेशंगतस्य कार्मणसहचरितेन तैजसशरीरेण य आहारः स ओज आहारः । तथा त्वगिंद्रियेण यः स्पर्शस्तेन य आहारः स लोमाहारः । कवलिकाहारस्त्वंतःप्रक्षेपरूपः । एतेषां मध्ये प्रथमाहाराभ्यवहारिणः सर्वेऽपि चातुर्गतिका अपर्याप्ताः, पर्याप्ताः पुनः सर्वेऽपि लोमाहाराः । प्रक्षेपाहारः पुनः सुमनोनैरयिकाक्षविरहितानां सर्वेषामपि नरतिरश्चां सचित्ताचित्तमिश्ररूपस्त्रिविधो भवेदाहारविधिः, सुरनारकाणां पुनरचित्त एव । अपर्याप्तावस्थाया सर्वेषामपि प्राणिनामनाभोगत एव लोमाहारः स्यात्, पर्याप्तावस्थायां पुनराभोगानाभोगाभ्याम् । स च लोमाहारः शुभतरपुद्गलरूपश्चेतस्यैव परिचिंतितः सर्वेणैव वपुषा परिणमति सुराणां, नैरयिकाणां पुनरशुभपुद्गलरूपः ते चाऽऽहार्यमाणाः पुद्गला विशुद्धतरावधिदर्शनज्ञानरूपचक्षुर्मात्रादनुत्तरसुरैरेव दृश्यंते ज्ञायंते न पुनर्नाकिभिर्नवग्रैवेयकांते । एकेंद्रियाणां पुनरव्यक्तचैतन्यानामाभोगमंदतया वस्तुतोऽनाभोगनिर्वर्त्तित एव । अथ देवाना तदन्येषामपि च जंतूना कियता समयेनोत्कर्षत आहाराभिलाषः स्यात्तदुच्यते । दशवर्षसहस्ररूपजघन्यायुर्धारिणां सुपर्वणां भवनपतिव्यंतररूपाणामहोरात्रातिक्रमे सत्याहारग्रहणाभिलाषः समुत्पद्यते, समुत्पन्ने च तस्मिंस्तन्मात्रोपस्थितसर्वेंद्रियाऽऽनंददायककांततमपुद्गलैरतर्वपुः परिणतैस्तृप्यति दशसवत्सहस्रेभ्य ऊर्ध्वं समयप्रभृतिवृद्ध्या यावत् किंचिन्न्यून सागरोपमायुर्येषां तेषां देवानां दिवसपृथक्त्वेभ्यः स्यादाहारः, पृथक्त्वं पुनर्द्विप्रभृत्यानवभ्यः सख्यानं निगद्यते समयभाषया । अयं भावो दशवर्षसहस्रेभ्य उपरि

किंचिदूनमर्णवसवर्णप्रमाणमायुर्येषां तेषा देवानां मुहूर्त्तपृथक्त्वेभ्यः स्यादुच्छ्वासः। अथ भावो दशसंवत्सहस्रेभ्य ऊर्ध्वं तु समयादिवृद्धौ। यावत् किंचिन्न्यून सागरोपममायुस्तेषा मुहूर्त्तपृथक्त्वानि तावद् वर्द्धनीयानि यावत् पूर्णे पुनरुदधिसमाने, येषां यावंति तान्यायुस्तेषा तावद्भिः पक्षैरुच्छ्वासः नैरयिकाणां पुनरयमव्यवच्छिन्न एव एकद्वित्रिचतुष्पंचेंद्रियतिर्यङ्मनुजानां पुनरनियतः।

अथ किल्बिषिकनाकिस्वरूपं प्ररूप्यते। किल्बिषिका अशुभकर्मकारिणश्चांडालप्रायाः सुपर्वाणस्ते च ये समय( ३ )-प्रमेयपल्योपमायुषस्ते सौधर्मेशानयोरधःपरिवसंति, त्रिसागरसमानमानायुषस्तु सनत्कुमारसुरलोकस्याधः, त्रयोदशार्णव-सवर्णायुषस्तु लांतकस्वर्लोकस्याधस्तनभागे वसति। अतः ऊर्ध्वं पुनरेते सुरा नोत्पद्यते।

अथ देवानां लेश्यास्वरूपमुच्यते तथाहि—कृष्णनीलकापोततेजःपद्मशुक्ललेश्याभिधानाः षड्लेश्या भवंति। तासां मध्ये भवनपतिव्यंतराणामादिमाश्चतस्रो लेश्या भवेयुः। ज्योतिष्ककल्पद्वैतदेवतानां तेजोलेश्यैव। सनत्कुमारमाहेंद्रब्रह्मकल्पेषु तु पद्म-लेश्यैव। लांतकस्वर्लोकादिषु तु शुक्ललेश्यैव। लिश्यते श्लिष्यते जतुः कर्मभिः सममेताभिरिति लेश्याः। उक्तं च 'कृष्णादि-द्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्राऽयं लेश्याशब्दः प्रवर्त्तते ॥ १ ॥' एनं चैता यद्यपि भावलेश्या एव सुराणां नैरयिकाणामपि च तथापीह तद्धेतवोऽवस्थिताः कृष्णादिद्रव्यरूपा द्रव्यलेश्या एव प्रतिपत्तव्या न भावलेश्यास्तासामनवस्थितत्वान्नापि च बाह्यवर्णरूपाः। अयं भावस्तिर्यग्नराणां भवांतरसचरणे शेषसमयमपि च लेश्या लेश्यांतरोपधाने विशुद्धवसनमिव सञ्जिष्टादिरागयोगे सर्वथा स्वरूपपरिहारतस्तद्रूपेणैव परिणमति अन्यथैतत्लेश्यायाः पल्यत्रितय-

तेष्वशुद्धस्य पुनः पुनर्भवहेतुत्वादत्यंतशुद्धस्यात्र दैवतायुर्बंधनोचितप्रशस्तचेतोव्यापाररूपः शुद्धोऽध्यवसायविशेषो ग्राह्यः ।
देवगतिप्राप्तावपि कोऽपि व्यंतरेषु कोऽपि पुनर्भवनपतिप्रभृतिषु यद् गच्छति तत्रापि तीव्रतीव्रतरादिभेदभिन्नोऽध्यवसाय-
विशेष एव हेतुतया स्वीकर्त्तव्यः । निरतिर्यक्ष्वपि ये संख्येयसंवत्सरायुषस्ते नियमाद्देवगतावेवोत्पद्यते, तत्राप्युत्पद्यमानाः संतः
स्वायुषा समं समस्थितिषु न्यूनस्थितिषु वा देवेषु ते समुत्पद्यते नाधिकस्थितिषु । ततश्च पल्योपमासंख्येयभागमात्रेणायुर-
संख्यसंवत्सरायुषः खचरतिर्यक्पचेंद्रियास्ते अंतरद्वीपजतिर्यग्नराश्च भवनपतिव्यंतरेष्वेवोत्पद्यंते, शेषाः पुनर्हैमवंतवर्षादि-
गतास्तिर्यङ्मनुष्या यथासंभवं भवनपतिप्रभृतिष्वीशानांतेषु सुरेषु समुत्पद्यंते । संमूर्च्छिमतिर्यंचस्तु सुरेषु समुत्पद्यमाना भवन
पतिव्यंतरेष्वेवोत्पद्यंते न ज्योतिष्कादिषु । यतस्तेषां पल्योपमसंख्येयभागमात्रस्थितिष्वेव देवेषूत्पादो न तदधिकस्थितिषु
अध्यवसायविशेषाद् गतिविशेष इति । यदुक्तं तत् किंचिद् भाव्यते निरयादिगतिसमुचिताऽत्यंतरौद्रार्त्तध्यानपरिहारेण
तथाविधमंदशुभपरिणामा अकामतया क्षुत्पिपासादुःखसहनेन रज्जूद्बंधनहालाहलाशनज्वलनजलप्रविशनगिरिशिरःपतन-
प्रभृतिभिर्मृताः संतः समुत्पद्यंते व्यंतरेषु शूलपाणियक्षप्रभृतिवत् । बहुसत्त्वोपघातहेतुपंचाग्निसाधनप्रभृत्यज्ञानतपसि स्थिता-
स्तथा तत्तथाविधद्रव्यक्षेत्रकालभावेषु प्रतिबद्धाश्चंडकोपास्तपस्विनो वयमितिगर्वपर्वतमस्तकमध्यमध्यारूढा द्वैपायनवत् कुत्रचिद्
विषयवैरप्रतिबद्धचित्ताः प्रेत्य प्रयांत्यसुरकुमारप्रभृतिभवनपतिषु तापसास्तु काननिवासिनो मूलकंदफलाहारा ज्योतिष्कनाकि-
निकायं यावद् यांत्यमुत्रघाटिभिक्षाचरकाः कपिलमतानुयायिनः परिव्राजकाश्च पंचमस्वर्लोकं यावद् गच्छन्ति दर्शनदेशविरति-
समन्विताः पंचेंद्रियतिर्यंचश्च सहस्रारांतसुरगतयः, ससम्यग्दर्शनदेशचारित्रपवित्रितगात्रा नरास्तु द्वादशत्रिदशलोकं यावद्-

त्पद्यते यतिलिङ्गिसमाश्रितलिङ्गिनां मिथ्यादृष्टयोऽपि सम्यग्दृष्टिक्रियाराधनबलादुत्कर्षतो ग्रैवेयकान् यावद् गच्छति छद्मस्थसंयतानां पुनः सर्वार्थसिद्धविमाने उपपात उत्कर्षतः। एष उपपातविधिः सर्वोऽप्युत्कर्षतो विज्ञेयः। जघन्यतस्तु संयतानां श्रावकानामपि च सौधर्मे स्यादुपपातः परं तत्राऽपि स्थितिकृतो विशेषः साधोर्जघन्याऽपि स्थितिः पल्योपमपृथक्त्वप्रमिता, श्रावकस्य पुनः पल्योपमानेन। चतुर्दशपूर्वधरस्तु जघन्यतोऽपि लान्तककल्पे भवेदुपपातस्तापसादीनां पुनः स व्यंतरेषु। अयं पुनर्जघन्यो स्वस्वमतेन लिङ्गिनोऽप्युपपातविधिः सर्वोऽपि स्वस्वक्रियाकलापानुष्ठाननिष्ठानामेव विज्ञेयः।

अथ संहननविशेषमाश्रित्य स्वर्गगतिविशेषो भाष्यते तत्र संहननानि वज्रऋषभनाराच–ऋषभनाराच–नाराच–अर्धनाराच–कीलिका–सेवार्ताभिधानानि षट्( ६ )मितानि भवंति। तत्रोभयतो मर्कटबन्धो नाराचः प्रोच्यते, ऋषभशब्देन च पट्टः, वज्रशब्देन च कीलिका, ततश्च द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकाऽऽकृतिवज्राभिधानमस्थि यत्र भवेत् वज्रऋषभनाराचम्। यत् पुनः कीलिकारहितं तदृषभनाराचम्। पट्टरहितं तु नाराचमेवमन्यान्यपि भावनीयानि संहननानि। तेष्वन्तिमसंहनन श्रुति( ४ )मितान् यावदुपपातोऽस्य परतः कीलिकादि पुनरन्तिमान्येषु द्वयोर्द्वयोः कल्पयोर्वृद्धिः क्रियते ततः अच्युतात् परं सिद्धिगति यावद् प्रथमसंहननेनैव इति भावितः संहननान्याश्रित्य गतिविशेषः।

अथ देवानां तत्र स्थानाच्च्युतानामागतिविशेषो निगद्यते, तथाहि—सुराः स्वायुरन्तं प्राप्ताः सन्तः प्रायेण पर्याप्तसंख्येयायुस्तिर्यक्कर्मभूम्येषु, तथा पर्याप्तबादरपृथिव्यम्बुप्रत्येकवनस्पतिषु तत्राऽपि सनत्कुमारप्रभृतय एकेन्द्रियेषु नोत्पद्यंते आनतप्रभृत-

यस्तु च्युताः संतः समुत्पद्यंते मनुष्येष्वेव । अथ सुराणां वर्णविभागो विभाव्यते वैमानिकानां तथाहि सौधर्मेशानयोः सुराः सुवर्णवर्णाः । सनत्कुमारादित्रिके तु पद्मकेसरवद्गौरास्तदुपरि तु शुक्लशुक्लतमादिभेदेन श्वेतवर्णा एव ते विज्ञेयाः । इत्युक्तं किंचिद् वैमानिकनाकिस्वरूपम् । तदुक्तौ च प्रपंचिता किंचिच्चतुर्विधविबुधवक्तव्यता । इति किञ्चिन्निगदिता नैरयिकादिभेदेन चतुर्विधाः संज्ञिनः पंचेंद्रियाः । मनोव्यापाररूपसंज्ञाविकलाः पुनरसंज्ञिनः पंचेंद्रियास्ते च समूर्च्छनजतिर्यंचः संमूर्च्छनजमनुजाश्च एते च तिर्यंचो मनुजाश्च पूर्ववर्णितत्रिभेदा वाच्याः । एतेषां मध्ये संमूर्च्छनजनरा गर्भजमनुजसत्कवातपित्तप्रश्रवणोच्चारप्रभृतिष्व-शुचिस्थानेष्वेव समुत्पद्यते नान्यत्र । यदुक्तं श्रीप्रज्ञापनायां ' कहिणं भंते संमुच्छिममणुस्सा संमुच्छंति ! गोअमा ! अंतो मणुस्सखित्ते पणयालीसाए जोअणसयसहस्सेसु अड्ढाइजेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अंतरदीवेसु गब्भवक्कंति अ मणुस्साणं चेव उच्चारेसु वा पासवणेसु[2] वा खेलेसु[3] वा सिंघाणेसु वा वंतेसु वा पित्तेसु[6] वा सुक्केसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोएसु[11] वा गामनिद्धमणेसु[12] वा नगरनिद्धमणेसु[13] वा सव्वेसु चेव असुइट्ठाणेसु[14] इत्थ णं संमुच्छिममणुस्सा संमुच्छंति अंगुलस्स असंखेज्जभागमेत्ताए ओगाहणाए असन्नी-मिच्छादिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतमुहुत्ताउआ चेव कालं करंति ' इति भाविताः सूक्ष्मेतरैकेंद्रियद्वित्रिचतुरिंद्रियसंज्ञ्यसंज्ञिपंचेंद्रियभेदेन सप्तविधा जीवाः एते च सप्त पर्याप्तभेदेन चतुर्दशधा भवेयुः ।

पर्याप्तयः, पुनराहार१शरीरें२द्रिया३ऽऽनपान४भाषा५मनो६भेदेन षोढा भवति तासु पुनराहारपुद्गलादानपरिणमन-

स्तिकायस्कंधाऽधर्मास्तिकायदेश-तत्प्रदेशा-ऽऽकाशास्तिकायस्कंध-तद्देश-तत्प्रदेशाऽद्धा-पुद्गलास्तिकायस्कंध-देश-प्रदेश-
परमाणुरूपाश्चतुर्दशभेदा भवेयुरजीवानाम्, एतेषु धर्मश्चलनस्वभावो गत्युपष्टंभकत्वात् । अत एव च तदभावादलोके स्वलोकेश-
प्रणुन्नं केशाग्रमपि न प्रविशति । अधर्मस्तु निश्चलस्वभावः स्थित्युपष्टंभकत्वात् । अत एव चोर्वीपर्वतादीनां स्थितिपरिणतजीव-
पुद्गलाना च स्थैर्यं गतिपरिणतानां जीवपुद्गलानां यत् पुनरवकाशं ददाति तदाकाश धर्मास्तिकायादय एते त्रयोऽपि नित्या
अवस्थिता एकद्रव्या अरूपिणो निष्क्रियाश्च । एतेषु पुनर्धर्माधर्मावसंख्येयप्रदेशौ सकललोकव्यापकौ च, आकाशं तु लोकालोक-
व्यापकमनंतप्रदेशात्मक च । एते च धर्मास्तिकायादयस्त्रयोऽपि संपूर्णाः स्कंधतया प्रोच्यंते, देशास्तु तेषां द्विभागत्रिभागचतु-
र्भागादिकाः । प्रदेशास्तु निरंशा एतेषा भागाः । अद्धाशब्देन च कालः प्रोच्यते । स च वर्त्तंते भवंति भावास्तेन तेन रूपेण
एतान् प्रति प्रयोजकत्व वर्त्तना तल्लक्षणः । स च तत्त्वतो वर्त्तमानसमयरूपः, अस्य च निर्विभागत्वादेव न देशप्रदेशसंभवः,
व्यवहारतः पुनरावलिकादिरूपः कालः पूर्वसमयनिरोधेनैव चोत्तरसमयसद्भाव इति तत्त्वतस्तस्य समयरूपत्वादेव ।

अथ समयस्वरूप किंचित् श्रीमदागमेयालापकैरेव लिख्यते तथाहि ' समयस्स णं परूवणं करिस्सामि से जहा
नामए तुन्नागदारए सिया तरुणे जुगवं जुवाणे अप्पायंके थिरग्गहत्थे दढपाणिपायपासपिठंतरोरुपरिणए
तलजमलजुगलपरिघनिभबाहु चम्मिट्ठगदुहणमुठियसमाहयनिचियगायकाए लंघणपवणजयणवायाम-
समत्थे उरस्स बलसमन्नागए छेए दक्खे पत्तत्थे कुसले मेहावी निउणे निउणसिप्पोवगए एगं महइं
पडसाडइं पट्टसाडियं वा गहाय सयराहं हत्थमित्तं ओसारिज्जा । तत्थ चोयए पन्नवगं एवं वयासी । जेणं

कालेणं तेणं तुन्नागदारएणं तीसे पडसाडियाए पडसाडियाए वा सयराहं हत्थमित्ते ओसारिए से समए भवइ? नो इणमट्ठे समट्ठे, कम्हा जम्हा संखिज्जाणं तंतूण समुदय समिइ-समागमेणं पडसाडिया निप्फज्जइ उवरिल्लम्मि तंतुम्मि अच्छिन्ने हेट्ठिल्ले तंतू न छिज्जइ अन्नम्मि काले उवरिल्ले तंतू छिज्जइ अन्नम्मि काले हेट्ठिल्ले तंतू छिज्जइ। तम्हा से समए न भवइ। एवं वयंत पन्नवगं चोयए एवं वयासी। जेणं कालेणं तेणं तुन्नागदारएणं तीसे पडसाडियाए पडसाडियाए वा उवरिल्ले तंतू छिन्ने से समए न भवइ कम्हा जम्हा संखिज्जाणं पम्हाणं समुदयसमिइसमागमेणं एगे तंतू निप्फज्जइ उवरिल्ले पम्हम्मि अच्छिन्ने हेट्ठिल्ले पम्हे न छिज्जइ अन्नम्मि काले उवरिल्ले पम्हे छिज्जइ अन्नम्मि काले हेट्ठिल्ले पम्हे छिज्जइ तम्हा से समए न भवइ। एवं वयंतं पन्नवगं चोयए एवं वयासी जेणं कालेणं तेणं तुन्नागदारएणं तस्स तंतुस्स उवरिल्ले पम्हे छिन्ने से समए न भवइ कम्हा जम्हा अणंताणं संघायाणं समुदयसमिइसमागमेणं एगे पम्हे निप्फज्जइ उवरिल्ले संघाए अविसंघाइए हेट्ठिल्ले संघाए न विसंघाइज्जइ अन्नम्मि काले उवरिल्ले संघाए विसंघाइज्जइ अन्नम्मि काले हेट्ठिल्ले संघाए विसंघाइज्जइ तम्हा से समए न भवइ एत्तो वि णं सुहुमतराए समए पन्नत्ते समणाउसो!' अथाऽऽवलिकादिव्यावहारिककालस्वरूपं प्ररूपयते तथाहि असंख्येयैः समयैरेकावलिका प्रकीर्त्यते यदुक्तं 'असंखिज्जाणं समयाणं समुदयसमिइसमागमेणं सा एगा आवलिय त्ति पवुच्चइ' एतद् पुनरसंख्येयं तृतीयमसंख्येयमर्थसमानमवसेयं यदुक्तं 'जुत्ता संखिज्जं जहन्नमावलिया समयपरिमाणं' इति आवलिकानां पुनः षट्पंचा

शदधिकद्विशत्या क्षुल्लकभवो भवेत् यदुक्तं 'दोअसया छप्पन्ना आवलियाणेगखुड्डभवो' इति ॥ २ ॥ संख्येया आवलिका आन एक उच्छ्वास इत्यर्थः ॥ ३ ॥ ता एव सख्यातानि श्वासः ॥ ४ ॥ उभयोरपि कालः प्राणः अस्मिंश्च क्षुल्लक-भवः साधिकाः सप्तदश भवेयुः यदुक्त 'खुड्डभवा साहीया सतरस भवंति एगपाणुम्मि' इति ॥ ५ ॥ प्राणुसप्तकेन च स्तोकः कीर्त्यते ॥ ६ ॥ सप्तभिश्चस्तोकैर्लवः ॥ ७ ॥ तेषां च सप्तत्या मुहूर्त्तः अस्मिंश्च क्षुल्लकभवानां पंचषष्टिसहस्राणि पंच-शतानि षट्त्रिंशदधिकानि भवंति यदुक्त 'पणसट्ठिसहस्सपणसयछत्तीसा इगमुहुत्ति खुड्डभवा' इति ॥ ८ ॥ त्रिशन्मितैश्च मुहूर्त्तैरहोरात्रः ॥ ९ ॥ तैः पुनः पचदशमानैः पक्षः ॥ १० ॥ तद्द्वितयेन च मासः ॥ ११ ॥ मासद्वैतेन च ऋतुः, स च शिशिर ॥ १ ॥ हेमंत ॥ २ ॥ वसत ॥ ३ ॥ निदाघ ॥ ४ ॥ वर्षा ॥ ५ ॥ शरद् ॥ ६ ॥ भेदेन च षोढा ॥ १२ ॥ ऋतुत्रितयेन पुनरयनं ॥ १३ ॥ अयनद्वैतेन च परिवत्सरः, तस्मिन् पुनराषाढ ॥ १ ॥ श्रावण ॥ २ ॥ भाद्रपदऽऽ-॥ ३ ॥ श्विन ॥ ४ ॥ कार्त्तिक ॥ ५ ॥ मार्गशीर्ष ॥ ६ ॥ पौष ॥ ७ ॥ माघ ॥ ८ ॥ फाल्गुन ॥ ९ ॥ चैत्र ॥ १० ॥ वैशाख ॥ ११ ॥ ज्येष्ठ ॥ १२ ॥ नामानो भानु( १२ )मिता भवंति मासाः ॥ १४ ॥ संवत्पंचकेन च युगं ॥ १५ ॥ विंशत्या युगैर्वर्षशतं ॥ १६ ॥ तैर्दशभिर्वर्षसहस्रं ॥ १७ ॥ शतेन च तेषा वर्षलक्षं ॥ १८ ॥ चतुरशीत्या च वर्षलक्षैः पूर्वांग भवेत् ॥ १९ ॥ पूर्वांगं च चतुरशीतिसंवत्सरलक्षैर्गुणित पूर्वं स्यात् तत्र च सप्ततिः कोटिलक्षाणि षट्पंचाशच्च कोटिसहस्राणि शरदां भवेयुः ॥ २० ॥ पूर्वं च चतुरशीतया लक्षैर्गुणितं त्रुटितांगं भवेत् ॥ २१ ॥ तदपि च चतुरशीत्या लक्षैर्गुणितं त्रुटितं स्यात् ॥ २२ ॥ एतदपि चतुरशीतया लक्षैर्गुणितमटटागं ॥ २३ ॥ तदपि च चतुरशीतया लक्षैर्गुणितमटटम् ॥ २४ ॥ एवम-

अजीवभेदगणनरूपा अजीवसंख्या ।

अथ पुण्यप्रकृतीनां द्विचत्वारिंशत् प्रकाराः प्रोच्यते । तथाहि सातो १ चैर्गोत्र २ मनुष्यगति ३ तदानुपूर्वी ४ देवगति
५ तदानुपूर्वी ६ पंचेंद्रियजात्यौ ७ दारिक ८ वैक्रिया ९ हारक १० तैजम ११ कार्मण १२ रूपत्पुःपंचकप्रथमतस्तु
त्रितयोपाग १५ प्रथमसहनन १६ प्रथमसंस्थान १७ शुभवर्ण १८ शुभगध १९ शुभरम २० शुभस्पर्शाऽ २१ गुरुलघु २२
पराघातो २३ छ्वासा २४ तपो २५ द्योत २६ शुभनभोगति २७ निर्माण २८ त्रम २९ बादर ३० पर्याप्त ३१ प्रत्येक ३२
स्थिर ३३ शुभ ३४ सुभग ३५ सुस्वरा ३६ देय ३७ यशः ३८ सुर ३९ नर ४० तिर्यगायु ४१ स्तीर्थकरनाम ४२ लक्षणा
द्विचत्वारिंशद् भेदा भवेयुः पुण्यप्रकृतीनाम् । एतेषु यदुदयात् सौख्यमनुभूयते तत् सातवेदनीयम् । आनुपूर्वी तु द्विसमयादि-
विग्रहेण भवातर व्रजतो जतोर्वृषभनासिकारज्जुकल्पा यदुक्तं कर्मविपाके 'पुव्वीउदओ वक्के' इति । यदुदयाच्च शरीर न गुरु
न च लघुकं तदगुरुलघुनाम । यदुदयाच्च परेषा बलशालिनामपि दुर्द्धर्षः स्यात्तत् पराघातनामकर्म । यदुदयात् पुनःश्वसन-
लब्धिमान् भवेत्तदुच्छ्वासनामकर्म । यदुदयाच्च वपुस्तापप्रदं स्यात्तदाऽऽतपनाम । एतच्च मार्त्तंडमंडल एवावसेय न पुनः
कृशानौ यतस्तस्मिन्नुष्णस्य शोणवर्णस्य चोदयः प्रवर्त्तते न पुनराऽऽतपस्य, उक्त च कर्मविपाके 'रविबिंबे उ जिअंगं,
तावजुअं आयवाउ न उ जलणे । जमुसिणफासस्स तहिं, लोहिअवन्नस्स उदउत्ति ॥ १ ॥' इति । यदुदयात्
पुनरनुष्णप्रकाशः स्यात्तदुद्योतनाम, श्रमणगीर्वाणोत्तरवैक्रियज्योतिःखद्योतानामिव । शुभनभोगतिस्तु मत्तमतंगजमरालबाला-
दीनामिव विज्ञेया । यदुदयाच्च निजनिजस्थानेषु करचरणभुजकरजप्रमुखांगोपाङ्गानां निर्मितिः स्यात्तन्निर्माणनाम एतच्च सूत्र-

६७ नाराच ६८ ऽर्द्धनाराच ६९ कीलिका ७० सेवार्त्तरूपसंहननपचक ७१ न्यग्रोध ७२ सादि ७३ वामन ७४ कुब्ज ७५ हुण्ड ७६ रूपसंस्थानपंचकनीचैर्गोत्र ७७ दान ७८ लाभ ७९ भोगो ८० पभोग ८१ वीर्यांतराय ८२ पचकलक्षणा नयन(२) समधिकाऽशीतिर्भवति पापप्रकृतिभेदानाम् । एतेषां च व्याख्या कर्मविपाकादिग्रंथांतरम्योऽवसेया ग्रंथगौरवभयान् नात्र विधीयते इत्युक्ताः पापप्रकृतिभेदाः ।

अथ च द्विचत्वारिंशदाश्रवभेदाः प्रोच्यंते तथाहि–स्पर्शन १ रसन २ घ्राण ३ चक्षुः ४ श्रोत्रेंद्रिय ५ क्रोध ६ मान ७ माया ८ लोभ ९ प्राणातिपात १० मृषावादा ११ ऽदत्तादान १२ मैथुनसेवन १३ परिग्रहग्रहणशुभा १४ ऽशुभमनो १५ वचन १६ वपुर्योग १७ पचविंशतिक्रियारूपा द्विचत्वारिंशद् भेदा मनेयुराश्रवतत्त्वस्य । क्रियाः पुनरिमाः पंचविंशतिस्तथाहि-कायेनाऽयतना प्रवृत्तेन निर्वृत्ता प्रथमा कायिकी क्रिया ॥ १ ॥ अधिकरणेन निर्वृत्ता द्वितीयाऽधिकरणिकी ॥ २ ॥ जीवा-जीवयोरुपरि प्रद्वेषकरणेन प्राद्वेषिकी ॥ ३ ॥ निर्वेदात् क्रोधाद्वा स्वपरयोः परितापनेन निर्वृत्ता पारितापनिकी ॥ ४ ॥ स्वपरहस्तमारणेन निर्वृत्ता प्राणातिपातकी ॥ ५ ॥ कृषिकर्माद्यारंभेण निर्वृत्ताऽऽरंभिकी ॥ ६ ॥ जीवाजीवादिवस्तुसंग्रहेण निर्वृत्ता पारिग्रहिकी ॥ ७ ॥ मायया परवंचनरूपया प्रवृत्ता मायिकी ॥ ८ ॥ जिनवचनाऽश्रद्धानस्वरूपमिथ्या-दर्शनप्रत्ययेन निर्वृत्ता मिथ्यादर्शनप्रत्ययिकी ॥ ९ ॥ अप्रत्याख्यानेनाऽविरत्या निर्वृत्ताऽप्रत्याख्यानिकी ॥ १० ॥ तुरगमतंगजादिकौतुकावलोकनेन निर्वृत्ता दृष्टिकी ॥ ११ ॥ रागद्वेषाभ्या जीवाजीवस्वरूपप्रच्छनेन पृष्टिकी अथवा रागा-तुरगादीना हस्तादिस्पर्शनेन स्पृष्टिकी ॥ १२ ॥ जीवाजीवौ प्रतीत्य कर्मबंधनेन प्रातीत्यिकी ॥ १३ ॥ गजतुरगादिकं द्रष्टुं

समवायुपनिपतव प्रमत्तस्य च यत्र निरीक्ष्य दर्शनस्पर्शकरणेनाभ्यागतान्प्रकारिवमाजने प्रमातो संमवायुपनिपातेन सामन्तोप
निपातकी ॥ १४ ॥ राजाधारेशाभिनिर्वृत्ते यंत्रशस्त्रापाकर्षेण नैशस्त्रिकी ॥ १५ ॥ जीवेन ज्ञानादिनाऽजीवेन वस्त्रादिना
प्रयत्नादिके मारणतः स्वाहस्तिकी ॥१६॥ जीवाजीवयोराज्ञापनेनाऽऽज्ञापनिकी तयोरानायनेनाऽऽनायनिकी वा ॥१७॥
जीवाजीवयोर्विदारणेन वैदारणिकी ॥ १८ ॥ अनुपयोगादादानप्रश्नसमयेनाऽनाभोगिकी ॥ १९ ॥ इह परलोक
विरुद्धाचरणेनाऽनवकांक्षाप्रत्ययिकी ॥ २० ॥ दुष्प्रणिहितयोगत्रयेण प्रायोगिकी ॥ २१ ॥ अष्टकर्मणां समुदायेन यया
भवति सा सामुदानिकी ॥ २२ ॥ मायालोभरूपप्रेमनिमित्ता या भवति सा प्रेमिकी ॥ २३ ॥ क्रोधमानरूपद्वेषयोगतो या
भवेत् सा द्वैषिकी ॥ २४ ॥ अप्रमादिनां भवोपग्राहिणां केवलकायप्रयोगप्रत्ययेन ऐर्यापथिकी ईर्यापथिकस्या मार्ग
शोधन यया ऐर्यापथिकीति वा ॥ २५ ॥ इत्युक्ता द्विचत्वारिंशदाऽऽस्रवभेदाः ।

अथ संवरस्य प्रकाराः प्ररूप्यन्ते तथाहि ईर्याभाषैषणाऽऽदाननिक्षेपपारिष्ठापनिकारूपपञ्चसमितिसमन्वितता ॥ ५ ॥ मनो-
वचनकायगुप्तित्रयगुप्तता ८ क्षुत् १ पिपासा २ शीतो ३ ष्ण ४ दंशमशक ५ अचेला ६ अरति ७ वनिता ८ चर्या ९ निषिद्या
१ शय्याऽऽ ११ क्रोश १२ वध १३ याच्ञा १४ अलाभ १५ रोग १६ तृणस्पर्श १७ मल १८ सत्कारपुरस्कार १९
प्रज्ञा २ अज्ञान २१ दर्शनपरिषह २२ रूपद्वाविंशतिभेदपरीषह १ क्षमाराधनाद्यर्हन्वाति २१ मार्दवा २२ आर्जव २३
शुचि २४ तपः २५ संयम २६ सत्य २७ शौचा २८ किंचन्य २९ ब्रह्म ३ रूपदशविधयतिधर्मसमाराधनाऽभिरतता
४१ अशरण ४२ संसारे ४३ एका ४४ अन्यता ४५ अशौचा ४६ आस्रव ४७ संवर ४८ निर्जरा ४९ धर्म ५० लोक

५१ बोधि ५२ रूपद्वादशभावनाभिधानसामायिक ५३ छेदोपस्थापन ५४ परिहारविशुद्धिक ५५ सूक्ष्मसंपराय ५६ यथा-
ख्यात ५७ रूपपंचचारित्रसमाचरणस्वरूपाः सप्तपञ्चाशद्भेदा भवेयुः संवरतत्त्वस्य । इत्युक्ताः संवरतत्त्वभेदाः ।

अथ निर्जरातत्त्वभेदा विभाव्यंते । तथाहि संसृतिबीजभूतानां कर्मणां जरणान्निर्जरा सा पुनरनशन १ न्यूनोदरिका २ वृत्तिसंक्षेप ३ रसत्याग ४ तनुक्लेश ५ संलीनता ६ रूपषड् ( ६ ) प्रकारबाह्यतपः प्रायश्चित्त ७ विनय ८ वैयावृत्त्य ९ स्वाध्याय १० ध्यान ११ तनुव्युत्सर्ग १२ रूपषड्विधाभ्यन्तरतपःस्वरूपा द्वादशविधा विज्ञेया एतेषां व्याख्या तु पुरः करिष्यते । इत्युक्ता निर्जराप्रकाराः ।

अथ बंधभेदा विभाव्यते । तत्र मिथ्यात्वाविरतिप्रभृतिभिर्बन्धनिबंधनैः कर्मवर्गणापुद्गलैः सहात्मनः क्षीरनीरवत् वह्न्ययःपिंडवद् वाऽन्योन्यानुगमाभेदात्मकः संबंधो बंधः । स पुनः प्रकृतिस्थित्यनुभागप्रदेशबंधभेदाच्चतुर्भेदः । तेषु स्थितिरसप्रदेशरूपाणां बंधानां यः समुदायः स प्रकृतिबंधः १ । अध्यवसायविशेषतः गृहीतानां कर्मपुद्गलानां यत् स्थिति-कालनियमनं स स्थितिबंधः २ स च ज्ञानावरणदर्शनावरणवेदनीयान्तरायेषु त्रिंशत्सागरसमानकोटिकोटीमानः, मोहनीये तु सप्ततिकोटीकोटीप्रमिताऽर्णवोपमप्रमाणः, आयुषि तु त्रयस्त्रिंशत्सागरमितः, नामगोत्रयोस्तु विंशतिकोटीकोटीसागरसमानमानः, अयमुत्कर्षतः स्थितिबंधः प्रोक्तः । जघन्यतस्तु वेदनीये द्वादशमुहूर्तमानः, नामगोत्रयोस्तु तदष्टकं, शेषकर्मणां पुनरंतर्मुहूर्तम् । कर्मपुद्गलानामेव शुभोऽशुभो वा घात्यऽघाती वा यो रसः सोऽनुभागबंधः ३ । प्रदेशबंधस्तु कर्मणां दलसंचयो विज्ञेयः ४ । उक्तं च 'प्रकृतिः समुदायः स्यात्, स्थितिः कालावधारणम् । अनुभागो रसो ज्ञेयः, प्रदेशो दलसंचयः ॥ १ ॥'

समयश्चतुर्विंशतिर्मुहूर्त्ता उत्कर्षतः, सनत्कुमारे च विंशतिमुहूर्ताधिकानि नवदिनानि, माहेंद्रे च दशमुहूर्त्ताभ्यधिका द्वादशवासराः;
ब्रह्मलोके च सार्द्धा द्वाविंशतिदिवसाः, लांतकस्वर्लोके च पंचचत्वारिंशद्दिनानि, महाशुक्रे तु वासराणामशीतिः, सहस्रारे तु
घस्रशतम्, आनतप्राणतयोस्तु संख्येया मासाः, ते पुनराऽऽनतापेक्षया प्राणते प्रभूताः, ते पुनर्वर्षादर्वागेव, द्वयोः पुनराऽऽरणा-
च्युतयो' संख्येयानि वर्षाणि, परमत्राप्याऽऽरणापेक्षयाऽच्युते प्रभूतानि, तानि पुनर्वर्षशतादऽर्वागेव, अधस्तनग्रैवेयकत्रिके तु
संख्येयानि संवत्शतानि, तानि च वर्षसहस्रादर्वागेव, मध्यमग्रैवेयकत्रिके तु संख्येयानि सवत्सरसहस्राणि, तान्यपि शरल्लक्षा-
दर्वागेव, उपरितनत्रिकेषु तु संख्येयानि हायनलक्षाणि, तान्यपि कोटेरर्वागेव, विजयप्रभृतिषु च चतुर्षु विमानेषु पल्योपमस्या-
ऽसंख्येयो भागः, सर्वार्थसिद्धे तु पल्योपमस्य संख्येयोंऽशः । एतदखिलमुपपातच्यवनांतरमुत्कर्षतोऽवसेय जघन्यतस्तु समयः

इत्युक्तं सुराणामंतरम् ।

अथ तन्नैरयिकाणामुच्यते । तथाहि सामान्येन नैरयिकेषूपपातच्यवनांतरं तपन(१२)मितमुहूर्त्ताः । अथ तद् विभागतः
कीर्त्यते तथाहि रत्नप्रभायामुपपातच्यवनांतरं चतुर्विंशतिर्मुहूर्त्ताः, शर्कराप्रभायां तु सप्तदिनानि, वालुकाप्रभायां तु पंचदश-
दिवसाः, पंकप्रभायां चैको मासः, धूमप्रभाया पुनस्तौ द्वौ, तमःप्रभायां तु ते चत्वारः, तमस्तमःप्रभायां तु ते ऋतु(६)-
प्रमिताः । एतदंतरमुत्कृष्टमऽप्यवसेयम् । जघन्यतस्तु सामान्यतोऽविभागतश्च समयो विज्ञेयः । इत्युक्तं नारकाणामंतरम् ।
नरगतौ तु गर्भजमनुजानामुत्पत्तेर्विपत्तेश्चांतर द्वादशमुहूर्त्ता संमूर्छिममनुष्याणां तु चतुर्विंशतिर्मुहूर्त्ताः एतत् पुनरंतरमुत्कर्ष-
विषयं, जघन्यतस्तु द्वयोरपि संमूर्च्छिमगर्भजमनुजयोः समयमितमंतरवसेयम् ।

दानाद्यंतरायकर्मक्षयोपशमसमुत्थाः । एतास्तु छद्मस्थानामेव यास्तु तत्कर्मक्षयजन्यास्तास्तु क्षायिके भावे कथयिष्यन्ते केवलिनः, सम्यक्त्वसर्वविरती अपि क्रमतो दर्शनमोहक्षयोपशमजन्यत्वात् क्षायोपशमिके एवात्र ग्राह्ये न पुनः क्षायिके क्षायिकभावे तु नव भेदा भवति, तथाहि–केवलज्ञानावरणकेवलदर्शनावरणक्षयसमुत्थे केवलज्ञानकेवलदर्शने दर्शनमोहनीयकर्मक्षयसमुत्थं क्षायिकसम्यक्त्वं दानाद्यंतरायपंचकक्षयसमुद्भूताः पंचदानादिलब्धयः, चारित्रमोहनीयकर्मक्षयसमुत्थं यथाख्यातं च चरितमिति, औदयिके तु भावेऽज्ञाना१ऽसिद्धत्वा २ऽसयम३लेश्याषट्क९कषायगतिचतुष्क१७वेदत्रिकमिथ्यात्वाख्या एकविंशतिर्भेदा भवेयुः, अयं भावः इहासदध्यवसायात्मकं ज्ञानमप्यज्ञानं तच्च मिथ्यात्वोदयजमित्यौदयिकं यदुक्तं ' जह दुव्वयणमवयणं, कुच्छियसीलं असीलमसईए । भन्नइ तह नाणं पि हु, मिच्छद्दिट्ठिस्स अन्नाणं १ '। असिद्धत्वं च सिद्धत्वाभावरूपं तदप्यष्टकर्मोदयजत्वादौदयिकम्, असयमोऽविरतत्वं तदप्यप्रत्याख्यानावरणकषायोदयजत्वादौदयिक एव भावे, लेश्यास्तु येषा मते कषायनिष्यंदो लेश्यास्तन्मतेन कषायमोहनीयोदयजत्वादौदयिन्यः, यन्मतेन योगपरिणामो लेश्यास्तदभिप्रायेण योगत्रयकर्मोदयजन्या येषां पुनरष्टकर्मपरिणामो लेश्यास्तन्मतेन संसारित्वासिद्धत्ववदष्टकर्मविपाकजा इत्यौदयिन्यः, कषायास्तु कषायमोहनीयोदयादेव जायन्ते इत्यौदयिक एव भावे वर्त्तंते, गतिचतुष्कवेदत्रिकमिथ्यात्वानि तु यथाक्रमं गतिनामकर्मनोकषायमोहनीयमिथ्यात्वमोहनीयकर्मोदयजत्वादौदयिकान्येव उपलक्षणत्वान्निद्राद्या अपि तत्तत्कर्मोदयजन्या वाच्याः, परं प्राचीनग्रंथेषु प्राय एतावन्त एव निर्दिष्टा दृश्यंत इत्येतावन्मात्रा एवोक्ता औदयिकभावभेदाः, पारिणामिके तु भावे भव्यत्वाभव्यत्वजीवत्वलक्षणास्त्रयो भेदा भवेयुरेतेषां सर्वदैवमेव परिणामान्नहि भव्योऽभव्यत्वमभव्यो वा भव्यत्वं जीवोऽजीव-

८

भव्यजीवो वा जीवत्वं कदाचित् परित्यजतीति। एवं सर्वेऽपि भावपञ्चकभेदा जीवस्थित्यादिसंस्थानम् भवति, एतेषां च पञ्चानां भावानां द्विकादिसंयोगरूपाः षड्विंशतिभङ्गा भवन्ति, तथाहि—दश द्विकसंयोगाः, दश त्रिकसंयोगाः, पञ्च चतुष्कसंयोगाः, एकश्च पञ्चक-संयोगः। एवं षड्विंशतिविधाः सान्निपातिकभावभेदा भवन्ति, परं षडेव योगा जीवेष्वविरुद्धाः संभवन्ति न शेषा विंशतिः संयोगभङ्गाः प्ररूपणामात्रभावित्वेन तेषामसंभवित्वात्। ते च इमे द्वौ त्रिकसंयोगौ द्वौ चतुष्कसंयोगौ एको द्विकसंयोगः एकश्च पञ्चकसंयोगः। तत्रात्र भावना क्षायोपशमिकानि इन्द्रियाणि पारिणामिकं जीवत्वादि औदयिकी पुनर्नरकाद्यन्यतरगतिः इत्येवं त्रिकसंयोगरूपः सान्निपातिको भावः सर्वेषु जीवेषु संभवति। तथा पारिणामिकं जीवत्वादि औदयिकी मनुष्यगतिः क्षायिकानि ज्ञानदर्शनचारित्रादीनीति त्रिकसंयोगरूपो द्वितीयसान्निपातिको भावः केवलिषु भवति। तथा सम्यक्त्वे क्षायिकं दर्शनं क्षायोपशमिकानीन्द्रियाणि पारिणामिकं जीवत्वादि औदयिकी नरतिर्यग्सुरनैरयिकान्यतरगतिरिति गतिचतुष्केऽपि प्राप्यतेऽसौ चतुष्कसंयोगरूपः प्रथमः सान्निपातिको भावः। तथा औदयिकी नरकादिकाऽन्यतरगतिः क्षायोपशमिकानि इन्द्रियाणि पारिणामिकं जीवत्वादि औपशमिकं सम्यक्त्वमिति चतुष्कसंयोगरूपो द्वितीयः सान्निपातिको भावो गतिचतुष्केऽपि प्राप्यते। तथा क्षायिकं सम्यक्त्वादि पारिणामिकं जीवत्वादीति द्विकसंयोगरूपः सान्निपातिको भावः सिद्धानामेव भवति। तथा यः क्षायिकसम्यग्दृष्टिर्मनुष्य उपशमश्रेणिं प्रतिपद्यते तस्यौपशमिकं चारित्रं क्षायोपशमिकानीन्द्रियाणि क्षायिकं सम्यग्दर्शनं औदयिकी मनुष्यगतिः पारिणामिकं जीवत्वमिति पञ्चकसंयोगरूपः षष्ठः सान्निपातिको भावो भवति एवं षड् सान्निपातिक-भावस्यैव भेदा भवेयुर्जीवेषु न पुनः केवलं पञ्चभ्य औपशमिकादिर्भाव इति भावितं जीवेषु भावस्वरूपम्।

अथाजीवेषु तन्निगद्यते तथाहि—धर्मास्तिकायाऽधर्मास्तिकायाऽऽकाशास्तिकायकालपुद्गललक्षणाः पंचाप्यजीवाः—पारिणामिके भावे वर्त्तंते तेन तेन रूपेण परिणमनस्वभावत्वात् तथाहि—धर्मास्तिकायाऽधर्मास्तिकायाऽऽकाशास्तिकायानामनादिसमयादारम्य जीवानां पुद्गलानां च यथाक्रमं गतिस्थित्युपष्टंभावकाशदानपरिणामेन परिणतत्वादनादिपारिणामिकभाववर्तित्वं, कालस्यापि समयावलिकादिपरिणामपरिणतत्वेन पारिणामिकभाववर्त्तित्वमेव, द्व्यणुकादिस्कंधानां तु सादिकालात्तेन तेन स्वभावेन परिणामात् सादिपारिणामिकत्व मेरुमहीधरादिस्कंधानां पुनरनादिकालात्तेन तेन रूपेण परिणामादनादिपारिणामिकत्वम्, अनंतपरमाणुस्वरूपाः स्कंधास्त्वौदयिकेऽपि भावे न पुनः केवलाणवस्तेषां जीवेनाग्रहणात्, अयं भावः शरीरादिनामोदयजनित औदारिकादितनुतया औदारिकादीनां पुद्गलानामेवोदय इति भावितमजीवेषु भावस्वरूपम् द्विचत्वारिंशन्मितासु पुण्यप्रकृतिषु तु क्षायिकौदयिकपारिणामिकलक्षणस्त्रयो भावा भवेयुः, पापप्रकृतिषु पुनर्मोहनीये कर्मणि पंचापि भावाः संभवंति ज्ञानावरणदर्शनावरणांतरायेष्वौपशमिकवर्जाश्चत्वारो भावा भवंति। शेषेषु पापप्रकृतिभेदेषु पुनः क्षायिकौदयिकलक्षणास्त्रयो भावा भवंति इति भावितं पुण्यपापभेदेषु भावस्वरूपम्। एवमाश्रवसंवरादिष्वपि भावनीयभावस्वरूपं श्रीमदागमानुसारेण इति भावितं जीवादिपदार्थेषु भावस्वरूपं ७।

अथाल्पबहुत्वं जीवतत्त्वे विभाव्यते, तथाहि—सर्वास्तोका गर्भजमनुजाः १। तेभ्यो गर्भजनार्यः संख्येयगुणाः २। ताभ्यः पर्याप्तबादराग्निकायिकजीवा असंख्येयगुणाः ३। तेभ्यः पुनरनुत्तरसुरा असंख्यगुणाः ४। तेभ्यः पुनरुपरितनग्रैवेयकत्रिकनाकिनः संख्येयगुणा ५। तेभ्योऽपि मध्यमग्रैवेयकत्रिकसुपर्वाणः संख्यातगुणाः ६। तेभ्योऽप्यधस्तनग्रैवेयकत्रिकवृंदा-

एताः संख्येयगुणाः ७। तेभ्योऽप्यनुत्तरसुराः संख्यातगुणाः ८। तेभ्योऽप्यारणसुपर्वाणः संख्येयगुणाः ९। तेभ्योऽपि प्राणत-
देवेषु संख्येयगुणता १०। तेभ्योऽप्यानतसुमनसः संख्यातगुणाः ११। तेभ्योऽपि तमस्तमापृथिवीनैरयिका असंख्येयगुणाः
१२। तेभ्योऽपि तमःप्रभानैरयिका असंख्यातगुणाः १३। तेभ्योऽपि सहस्रारसुरा असंख्येयगुणाः १४। तेभ्योऽपि शुक्रलोक-
वासिनोऽसंख्येयगुणाः १५ तेभ्योऽपि धूमप्रभापृथिवीनारकेषु गणनातिगगुणत्वं १६। तेभ्योऽपि लान्तकस्वर्गौकसामाकिनाम्
असंख्येयगुणत्वं १७। तेभ्योऽपि पंकप्रभानैरयिकेषु संख्यातीतगुणता १८। तेभ्योऽपि ब्रह्मलोकदेवानां गणनातिगगुणता १९।
तेभ्योऽपि वालुकाप्रभानैरयिका असंख्येयगुणाः २०। तेभ्योऽपि माहेन्द्रत्रिदिवत्रिदशा असंख्यातगुणाः २१। तेभ्योऽपि सनत्कुमार
सुराणामसंख्येयगुणत्वं २२। तेभ्योऽपि शर्कराप्रभानारका असंख्येयगुणाः २३। तेभ्योऽपि संमूर्छिममनुजाः संख्यातीत-
गुणाः २४। तेभ्योऽपीशानस्वर्गवासिना असंख्यगुणाः २५। तेभ्योऽपीशानविदर्भदेव्यः संख्येयगुणाः २६। ताभ्योऽपि सौधर्म-
सुराणां संख्येयगुणत्वं २७। तेभ्योऽपि सौधर्मस्वर्गौकसां देव्यः संख्यातगुणाः २८। ताभ्योऽपि भवनपतिविबुधा असंख्येय
गुणाः २९। तेभ्योऽपि तदेव्यः संख्येयगुणाः ३०। ताभ्योऽपि रत्नप्रभापृथिवीनैरयिका असंख्येयगुणाः ३१। तेभ्योऽपि
खचरपंचेंद्रियतिर्यग्योनिजपुरुषा असंख्येयगुणाः ३२। तेभ्योऽपि तेषां स्त्रियः संख्येयगुणाः ३३। ताभ्योऽपि स्थलचरपंचेंद्रिय-
तिर्यग्योनिजनरा संख्यातगुणाः ३४। तेभ्योऽपि तेषां स्त्रियः संख्येयगुणाः ३५। ताभ्योऽपि वारिचरपंचाक्षतिर्यग्योनिज
नराः संख्येयगुणाः ३६। तेभ्योऽपि तेषां स्त्रियः संख्येयगुणाः ३७। ताभ्योऽपि व्यंतरसुराः संख्यातगुणाः ३८। तेभ्योऽपि
तदेव्यः संख्येयगुणाः ३९। तेभ्योऽपि ज्योतिष्कदेवाः संख्यातगुणाः ४०। तेभ्योऽपि तदेव्यः संख्येयगुणाः ४१। ताभ्योऽपि

तेभ्योऽपि स्थलचरपंचेंद्रियतिर्यग्योनिजा नपुंसकाः संख्यातगुणाः
खचरपंचाक्षनपुंसकतिर्यग्योनिजाः संख्येयगुणाः ४२ । तेभ्योऽपि पर्याप्तचतुरिंद्रियाः संख्येयगुणाः ४५ ।
४३ । तेभ्योऽपि नपुंसकवारिचरपचेंद्रियतिर्यग्योनिजाः संख्येयगुणाः ४४ । तेभ्योऽपि पर्याप्तत्रींद्रियाविशे-
तेभ्योऽपि पर्याप्तपचेंद्रिया विशेषाधिकाः ४६ । तेभ्योऽपि पर्याप्तद्वींद्रिया विशेषाधिकाः ४७ । तेभ्योऽपि
षाऽधिकाः ४८ । तेभ्योऽप्यपर्याप्तपंचेंद्रिया असंख्येयगुणाः ४९ । तेभ्योऽप्यपर्याप्तचतुरिंद्रिया विशेषाधिकाः ५० । तेभ्योऽ-
प्यऽपर्याप्तत्रींद्रिया विशेषाधिकाः ५१ । तेभ्योऽपर्याप्तद्वीन्द्रियाविशेषाधिकाः ५२ । तेभ्योऽपि पर्याप्तप्रत्येकबादरवनस्पतिका-
यिका असख्येयगुणाः ५३ । तेभ्योऽपि पर्याप्तबादरनिगोदा असंख्येयगुणाः ५४ । तेभ्योऽपि पर्याप्तबादरपृथिवीकायिका
असंख्येयगुणाः ५५ । तेभ्योऽपि पर्याप्तबादराऽप्कायिका असंख्येयगुणाः ५६ । तेभ्योऽपि पर्याप्तबादरवायुकायिका असंख्येय-
गुणाः ५७ । तेभ्योऽपि अपर्याप्तबादरतेजस्कायिका असंख्येयगुणाः ५८ । तेभ्योऽपि बादरापर्याप्तप्रत्येकवनस्पतिकायिका असं-
ख्येयगुणाः । ५९ । तेभ्योप्यऽपर्याप्तबादरनिगोदा असंख्येयगुणाः ६० । तेभ्योऽपि बादरपर्याप्तपृथ्वीकायिका असंख्येय-
गुणाः ६१ । तेभ्योऽप्यपर्याप्तबादराऽप्कायिका असंख्येयगुणाः ६२ । तेभ्योऽप्यपर्याप्तबादरवायुकायिका असंख्येयगुणाः ६३ ।
तेभ्योऽप्यपर्याप्तसूक्ष्माग्निकायिका असंख्येयगुणाः ६४ । तेभ्योऽपर्याप्तसूक्ष्मपृथिवीकायिका विशेषाधिकाः ६५ । तेभ्योऽपर्याप्त-
सूक्ष्माप्कायिका विशेषाधिकाः ६६ । तेभ्योऽप्यपर्याप्तसूक्ष्मवायुकायिका विशेषाधिकाः ६७ । तेभ्योऽपि पर्याप्तसूक्ष्मतेजस्का-
यिकाः संख्येयगुणाः ६८ । तेऽभ्योऽपि पर्याप्तसूक्ष्मपृथिवीकायिका विशेषाधिकाः ६९ । तेभ्योऽपि पर्याप्तसूक्ष्माप्कायिका
विशेषाधिकाः ॥ ७० ॥ तेभ्योऽपि पर्याप्तसूक्ष्मपवनकायिका विशेषाधिकाः ७१ । तेभ्योऽप्यपर्याप्तसूक्ष्मनिगोदा असंख्यात-

ननु क्षेत्रस्पर्शनयोः को विशेषः १ । उच्यते यदवगाढं तत् क्षेत्रं यथावगाहमपि यदन्यप्रदेशैः स्पृष्टं सा स्पर्शना यथैकप्रदेशाव-
गाढस्य परमाणोः सप्तप्रदेशा स्पर्शना उक्तं च ' जं दव्वं जेसु पएसेसु ओगाढं तं चेव तावइआ पएसा खित्तं जं
पुण तं चेव दव्वं तस्स चेव खित्तस्स छसु दिसासु एगं आगासपएसपयरं सव्वओ समंतादहिअं परिप्फुसए
सा फुसणत्ति । ४ । कालः सिद्धाना साद्यनंतरूपो ज्ञेयः ५ । अतरं सिद्धानामुत्पत्तिविरहरूपमवसेयम् ६ । भागस्तु सर्व-
जीवानां कतितमे भागे सिद्धा इत्येवं रूपो विज्ञेयः ७ । भावस्तु क्षायिकप्रभृतिकस्तन्मध्ये कस्मिन् भावे सिद्धा वर्त्तंत इत्येवं
रूपो वाच्यः ८ । अल्पबहुत्वं च पुरुषसिद्धाद्याश्रित्याऽव्यवसेयम् ९ । एतानि यथाक्रमं भाव्यंते । तथाहि–सन् विद्यमानो
मोक्षः मोक्ष इत्यनेन केवलपदेन वाच्यत्वात् यद् यत्केवलपदवाच्यं तत्तदस्ति यथा घटः, केवलपदवाच्यश्च मोक्षस्तस्मादस्तीत्य-
न्वयव्याप्तिः, व्यतिरेकव्याप्तौ तु यदसत्तत्केवलपदवाच्यं न स्याद् यथा खरविषाणं वियत्पुष्प वेति । एषा च सत्पदप्ररूपणा
मोक्षपदस्य गतींद्रियप्रभृतिचतुर्दशमार्गणास्थानेषु कर्त्तव्या तत्र प्रथमं प्रत्युत्पन्ननयमाश्रित्य मार्गणास्थानेषु सत्पदप्ररूपणा
विधीयते मोक्षपदस्य तथाहि–गतिपंचकमध्ये सिद्धिगतावेव सिद्धसंभवो नान्यस्मिन् गतिचतुष्के १ । इंद्रियद्वारे च एकेंद्रि-
यादिपचेंद्रियांतेषु सिद्धत्वं नास्ति सर्वथाशरीरपरित्यागेनैव सिद्धत्वपर्यायोत्पत्तेः यदार्षम् ' इहं बुंदिं चइत्ताणं, तत्थ
गंतूण सिज्झई ' अत एवातींद्रियाः सिद्धाः २ । कायद्वारे च कायः शरीरं तद्योगिनः षड्जीवनिकायास्तेषु सिद्धत्वं
न संभवति तद्विपक्षाकायरूपत्वात् सिद्धानाम्, असरीरा जीवघणा ' इति सिद्धांतोक्तेः ३ । योगद्वारे च योगस्त्रिधा
तत्रैकेन्द्रियानां केवलः काययोगः समुदितो तनुवचनयोगौ तु द्वींद्रियाद्यऽसंज्ञिपंचेंद्रियांतानां तनुवचनमनोयोगत्रिकं तु पर्याप्त–

संज्ञिपंचेंद्रियाणाम्, एतेषु सिद्धत्वं नास्त्ययोगित्वात् सिद्धानाम् ४। वेदद्वारे च त्रिषु वेदेषु सिद्धत्वं न संभवत्यवेदत्वात् सिद्धानाम् ५। कषायद्वारे च तेष्वकषायेष्वपि सिद्धत्वासंभवः अकषायित्वात् सिद्धानाम् ६। ज्ञानद्वारे मतिज्ञानादिज्ञान चतुष्टये केवलज्ञाने एव सिद्धत्वं नान्य ज्ञानचतुष्के तस्य क्षायोपशमिकत्वात् ७। संयमद्वारे च सर्वसंयमदेशसंयमासंयम भावेषु त्रिष्वपि स्थानेषु न सिद्धत्वं शरीरसद्भावे एव तेषां भावात् सिद्धानां चाऽशरीरित्वात् अत एव 'सिद्धा नोचरित्ती नोअचरित्ती' इत्युच्यते इति ८। दर्शनद्वारे चक्षुर्दर्शनाऽचक्षुर्दर्शनाऽवधिदर्शनकेवलदर्शनानां मध्ये केवलदर्शन एव सिद्धत्व नान्य दर्शनत्रिके तस्य क्षायोपशमिकत्वात् सिद्धानां पुनः क्षायिकभावे वर्तमानत्वात् ९। लेश्याद्वारे च षट्स्वपि लेश्यासु न सिद्धत्व मपरमशीलपर्यवसानासां सिद्धानां चाऽलेश्यत्वात् १०। भव्यद्वारे च सिद्धिगमनयोग्या ये ते भव्यास्तद्विपरीतास्त्वभव्याः सिद्धास्तु नो भव्या नो अभव्या 'सिद्धे नो भव्वे नोअभव्वे' इति श्रीमत्समयः ११। सम्यक्त्व-द्वारे च सम्यक्त्वानि क्षायिकादीनि पंच तेषां मध्ये क्षायिकसम्यग्दर्शन एव सिद्धत्व नेतरस्मिन् सम्यक्त्वचतुष्टये तस्य क्षायोपशमिकत्वात् १२। संज्ञिद्वारे च यद्यपि संज्ञा त्रिधा—हेतुवादोपदेशिकी दृष्टिवादोपदेशिकी दीर्घकालिकी चेति तथापीहं कृतमिदं च करोमीदं च करिष्यामीति त्रिकालविषयया दीर्घकालिक्या संज्ञया ये संज्ञावन्तस्ते संज्ञिनस्तद्विपरीताः पुनरसंज्ञिनः सिद्धास्तु नोसंज्ञिनो नोऽसंज्ञिनः 'सिद्धे नोसन्नी नोअसन्नी' इतिश्रीप्रज्ञापनोक्तेः १३। आहारकद्वारे च ओजोलोमप्रक्षेपाहारभेदादाहारास्त्रेधा, तद्विषये येषां ते आहारकास्तद्विपरीतास्त्वनाहारकास्तयोर्मध्येऽनाहारकत्वे सिद्धत्वं न पुनराहारकत्वे भवस्थानामेव भावात् १४। इति भाविता अस्मदुक्तनयानुसारेण मत्यादिचतुर्दशमार्गणास्थानेषु सिद्धानां सत्पद-

प्ररूपणा। ननु मोक्षे प्रस्तुते सिद्धप्ररूपणायाः कोऽवसर ? उच्यते जीवस्य कृत्स्नकर्मक्षयेण यत्स्वरूपावस्थानं स मोक्ष उच्यते स च जीवस्यैव धर्मः धर्मधर्मिणोश्च कथंचिदभेदात् सिद्धप्ररूपणया मोक्षप्ररूपणा कृता स्यादिति नाप्रस्तुताभिधानम्।

अथ पूर्वपर्यायसारनयालंबनेन गतिप्रभृतिमार्गणास्थानेषु मोक्षपदस्य सत्पदप्ररूपणा क्रियते। तथाहि–गतिद्वारे मनुष्यगतावेव मोक्षो नेतरस्मिन् गतित्रये। जातिद्वारे च पंचेंद्रियजातावेव मोक्षो नान्यस्मिन् जातिचतुष्टये। कायद्वारे त्रसकाय एव मोक्षो नान्यस्मिन् कायपंचके। योगद्वारे तु योगत्रयेऽपि न मोक्षोऽयोगिन एवं तत् संभवात्। वेदद्वारेऽपि न मोक्षः क्षपितवेदस्यैव तत्संभवात्। कषायद्वारेऽपि न मोक्षस्तत्क्षय एव मुक्तिप्राप्तिः। ज्ञानद्वारे केवलज्ञान एव मोक्षो नान्यस्मिन् ज्ञानचतुष्टये। संयमद्वारे तु यथाख्यातचरित्र एव मुक्तिर्न शेषसंयमचतुष्टयदेशसंयमासंयमेषु। दर्शनद्वारे तु केवलदर्शन एव मुक्तिर्न शेषदर्शनत्रिके। लेश्याद्वारे तु न मोक्षोऽलेश्यस्यैव सिद्धिगमनात्। भव्यद्वारे तु भव्यस्यैव मोक्षो नाभव्यस्य। सम्यक्त्वद्वारे तु क्षायिकसम्यग्दर्शन एव मोक्षो न शेषदर्शनचतुष्टये। संज्ञिद्वारे तु संज्ञिन एव मोक्षो नाऽसंज्ञिनः। आहारकद्वारे त्वनाहारकस्यैव मोक्षो नाऽऽहारकस्य। इति भाविता पूर्वपर्यायसारनयानुसारेण गत्यादिचतुर्दशमार्गणास्थानेषु यथायोगं मोक्षस्य सत्पदप्ररूपणा १। द्रव्यप्रमाणे चिंत्यमाने सिद्धजीवद्रव्याण्यनंतानि भवंति २। क्षेत्रप्रमाणे चिंत्यमाने लोकस्याऽसंख्येयतमे भागे एकः सिद्धः सर्वेऽपि वा सिद्धाः यतोऽसंख्येयस्य तारतम्येनाऽसंख्येयभेदत्वं वर्त्तते ३। स्पर्शनाद्वारे क्षेत्रावगाहनातः स्पर्शनाऽधिका भवति, अयमर्थः यावति क्षेत्रेऽसावेकः सिद्धोऽवगाढोऽनेको वा तस्य क्षेत्रस्य येऽनंतराः सर्वदिक्षु प्रदेशास्तेऽपि तावति क्षेत्रे स्थितेऽनेकेनाऽनेकैर्वा सिद्धैः स्पृश्यंत इति हेतोः ४। कालद्वारे एकसिद्धापेक्षया कालः

सापनतः सर्वसिद्धापेक्षया पुनरनापनंता, अनादिसमयादारभ्य सिद्धानां सद्भावात् सर्वसिद्धापेक्षयाऽनादिता, तदपचनाभावात् पुनरनंतता ५। अंतरद्वारे तु प्रतिपाताभावात् सिद्धानां च्यवनस्यांतरं नास्ति, तत्पातमाश्रित्य पुनर्वर्तते यथा समयमेकं उत्कर्षतः षण्मासाः ६। अल्पद्वारे सम्यग्भ्योऽनंतगुणा अपि सिद्धाः सर्वजीवानामनंततमे भागे वर्तन्ते ७। भाव-द्वारे तु सिद्धाः क्षायिके पारिणामिके च भावे वर्तंते तत्र सिद्धेषु केवलज्ञानकेवलदर्शनादिकं क्षायिके भावे वर्तते, जीवत्वं च पारिणामिके भावे विज्ञेयं ८। अल्पबहुत्वद्वारे मोक्षगमनभवे ये नपुंसकत्वमनुभूय सिद्धास्ते नपुंसकसिद्धाः एवं स्त्रीपुरुषयोरपि ज्ञातव्यं, तेषां मध्ये स्तोका नपुंसकसिद्धास्तेभ्योऽपि स्त्रीसिद्धाः संख्येयगुणास्तेभ्योऽपि पुरुषसिद्धाः संख्येयगुणाः। ननु नपुं-सकानां चारित्रमपि न भवति कुतो मोक्षगमनम्? उच्यते ये जन्मनपुंसकास्तेषां चारित्रं न भवति ये तु पश्चान्नपुंसकीकृता-स्तेषां तु भवति तेन तन्नपुंसकानां सिद्धिरपि भवतीति कृता सत्पदप्ररूपणादिभिर्नवभिर्द्वारैर्मोक्षतत्त्वप्ररूपणा तत्कृतो च व्याख्यातः सम्यक्त्वस्याभ्यंतरे प्रथमपरमार्थसंस्तवाख्यभेदः १।

अथ सुदृष्टपरमार्थयतिजननिषेवणाख्यो द्वितीयस्तद्भेदो व्याख्यायते। तथाहि गीतार्थचारित्रिणां तथा सम्यग्दर्शनिनां च जिनवचनबहुमानपूर्वकं पर्युपास्तिः सुदृष्टपरमार्थयतिजननिषेवणमुच्यते। तत्र गीतशब्देन सूत्रमुच्यते, अर्थेन तद् व्याख्यानं तदुभयेन समन्विता ये ते गीतार्था इत्युच्यते यताऽत्र 'गीयं भण्णइ सुत्तं, अत्थो तस्सेव होइ वक्खाणं। उभएण य संजुत्तो, सो गीयत्थो मुणेअव्वो ॥ १ ॥' चारित्रिणस्तु सकलप्रतिपक्षसमारंभकाः सम्यग्दर्शनिनस्तु सुसम्यक्त्वाः तेषां सेवा जिनवचनबहुमानपूर्वकं विधेया तत्र विनयो वाक्योच्चारणाः बहुमानस्त्वाभ्यंतरभक्तिरूपः। यतस्तेषां गीतार्थादीनां

सेवया जीवाजीवादिपदानां यथावत् परिज्ञानयोगाच्च सम्यग्दर्शनस्य विशुद्धता चोभवीति ॥ इति व्याख्यातो द्वितीयः श्रद्धानभेदः ॥ २ ॥।

अथ व्यापन्नदर्शनवर्जनस्वरूपस्तार्तीयकः श्रद्धानभेदः प्रोद्भाव्यते। तत्र व्यापन्नं विनष्टं दर्शनं सम्यक्त्वं येषां ते व्यापन्नदर्शनास्ते च निह्नवयथाच्छंदःप्रभृतयो विज्ञेयाः। तेषु यथार्थवादिनोऽपि ये क्वाप्यंशे जिनवचनापलापं विदधति ते निह्नवाः। गुरुसिद्धांतनिरपेक्षतयैव सर्ववस्तुस्वरूपप्ररूपकास्तु यथाछंदसः। एतेषु बहुरत १ जीवप्रदेशा २ ऽव्यक्त ३ सामुच्छेद ४ द्वैक्रिय ५ त्रैराशिकाऽ ६ बद्धिक ७ स्वरूपाः सप्त निह्नवा भवेयुस्तेषु बहुषु समयेषु रता बहुरता दीर्घकालद्रव्यप्रभृतिप्ररूपिणस्ते च श्रीवर्द्धमानस्वामिनः पंचमावबोधसमुत्पत्तेश्चतुर्दशसंवत्समतिक्रमे समुत्पन्ना भगवज्जामातुर्जमालेः सकाशात्तेन तत्स्वरूपं किमप्युच्यते।

तथाहि अन्यदा कदाचिद् भगवान् श्रीमान् वर्द्धमानस्वामी समवासार्षीत् कुंडपुरनाम्नि नगरे, तत्र च भगवद्भगिनी-सुदर्शनातनूजन्मा जमालिनामा राजकुमारः श्रीवीरतीर्थंकरं समाकर्ण्य समवसृतं तद्वंदनतद्वचनसमाकर्णनविषयोत्सुकितचेतोवृत्तिः समागमत्तत्समीपे सपरिकरः सर्वद्धर्या, तत्र च समेत्य त्रिः प्रदक्षिणीकृत्य च सौवश्वसुरं चरमतीर्थंकरं विधिवत्तद्वंदनपुरस्सरं स समुपविष्टः समुचितः प्रदेशे सपरिच्छदः। तदा च निर्मिता भगवता भवनिर्वेदजननी सुकृतदेशना संवेगरंगरंगत्तरगसंगमगंगापगासमाना। तां च समाकर्ण्य सम्यक्संवेगरंगपूरितांतरगः पंचप्रकारसांसारिकसुखसंवेदनविषयविरक्तचेतोरंगः समापृच्छ्य पितरौ निष्क्रांतः पंचशतपरिवृतः स समहामहं श्रीमन्महावीरतीर्थंकरसमीपे। तत्प्राणप्रियाऽपि तमनु

संथरिज्जमाणे असंथरिए किं कडे कज्जइ त्ति । च कृतक्रियमाणयोर्भेद उक्तः ।
एतत्पदवृत्तिः। किं निष्पन्न उत निष्पाद्यते अनेनाऽतीतकालनिर्देशेन वर्त्तमानकालनिर्देशेन स्वकीयवचनसस्तारककर्तृसाधुवचनयो-
उत्तरोऽप्येवमेव तदेवं संसारकर्तृसाधुभिरपि क्रियमाणस्य अकृतता उक्ता । ततश्चाऽसौ क्रियमाणं कृतमित्यभ्युपगतं तेन विद्यमानस्य
विमर्शात् प्ररूपितवान् क्रियमाणं कृतं यदभ्युपगम्यते तन्न सगच्छते। यतो येन न भवति विद्यमानत्वात् चिरतनघटवत् । अथ
करणक्रिया प्रतिपन्ना तथा च बहवो दोषाः। तथाहि यत् कृत तत् क्रियमाणं भवति, सर्वदा क्रियमाणत्वात्, स एवमंते-
कृतमपि क्रियते ततः क्रियतां नित्य कृतत्वात् प्रथमसमये चेति न च क्रियासमाप्तिर्भवति, वचनमन्यथा प्ररूप्यते श्री
वासिगणं समीलय तदग्रे एवमेव प्ररूपणा कुर्वन् समयज्ञैर्विनेयजनैरूचे किमिति श्रीमदार्हतं निर्मायतया जग्मुः
सद्भिर्भवद्भिः । एवं तैरुक्तोऽपि यदा स न तद्वचन मेने तदा समयज्ञास्ते विनेयास्तदंतिकं विहाय तद्वचनानुरक्ता
श्रीमद्वर्द्धमानजिनचलननलिनमूले । अगीतार्थास्तु शेषशिष्यास्तस्थुस्तदंतिक एव । तत्प्राणप्रियाऽपि निजदयितवचनमेव
तदुक्तमेव मेने सत्यतया समयज्ञाऽपि । तदनु श्रमणीगणपरिवृता सा प्रव्रजिता तत्सहचरीजनपुरतोऽपि तथै-
समीचीन न तु मत्पितुरेवं प्ररूपणाकरणप्रवीणाऽन्यदा कदाचिद् भगवदुपासकस्य ढकस्य शय्यातरस्य पुरतोऽपि क्षिप्त्वांगारकम् ।
वाख्यातवती । तदा च स ढंकः श्रीमद्वीरतीर्थंकरोपासकस्तस्याः प्रतिबोधहेतवे तत्कंबलीं काणीचकार वीरवचनं
तदा च सा साध्वी तं प्रत्यूचे भोः ! श्रमणोपासक ! किमिति प्रज्वालिताऽस्मत्कंबली । सोऽपि तां प्रत्यूचे भवेत्तदैव
प्रमाणीक्रियते तदैव युक्त वक्तुमेवं तत्रभवतीनां भवतीनां नान्यथा यतो युष्मन्मतेन चेद् भस्मसाद् कृता सा

इत्येवेति वक्तुं युज्यते नेतरथा, इति तेनोक्ते प्रबुद्धा सती सा भगवती ममवचनात्मा च प्रमाद साधु साधूक्तं भद्र! भवता यत् इयत्कालं दुर्वचनारम्भात्मनः युक्तियुक्त्या प्रतिबोधितास्मि तद् वचिस्व समयप्रस्तावं मया प्रज्ञापितं तदुचितं समस्तु मिथ्या मे दुष्कृतमिति तदनु ष्ठापितमिथ्यादुष्कृत विधाय सोधप्रावाश्रिय प्रति प्रज्ञापितवती सा तद् ढंकश्रमणोपासकप्रति-बोधितम्। तथापि स सोधमतिविधिबद्धं तं जमालिं न मुमोच। तदनु पुनः साऽन्योपासमवर्तिनी साधुसंपद्वतीसाध्वीसहस्र मध्ये स्वयं प्रतिबुद्धावेवंकमाणकप्रतिबोधितश्रमणश्रमणीमनसमन्विता गता श्रीमद्वर्द्धमानजिनचरणकमलमूले। स जमालिः पुनरेकाकी नानाऽसद्भावोद्भावनाभिरात्मानं परं च व्युद्ग्राहयन्स्तुरितमनालोच्य पश्च पापचतुर्विधाहारपरिहाररूपां संलेखनां निर्माय लान्तकेऽथास्थितत्रिसप्ततिकिल्बिषिकनामादिविमानेषु त्रयोदशसागरसमानायुस्त्रिदशः समजनि, ततश्च्युत्वा चतुष्पञ्चतिर्यग्नरामरसंभवरूपं परिभ्रम्य संसारं समाराध्य पुनर्मनुजजन्मनि सम्यक् श्रीमत्प्रवचनधर्मं प्रदकर्मनिर्मूलनपूर्वं भविष्यत्पुनर्भवं विगतजराजननिधनवियोगरोगादिनिखिलदुःखलक्षम्। उक्तं च तत्र भगवत्यां नवमशते 'जमालीणं अणगारे अद्धमासिआए संलेहणाए तीसं भत्ताइं अणसणाए छेदेति-छेइत्ता अणालोइअ-अपडिक्कंते कालमासे कालं किच्चा लंतए कप्पे तेरससागरोवमठिइएसु देवकिब्बिसिएसु देवत्ताए उववन्ने। जमाली णं भंते ताओ देवलोगातो आउक्खएणं जाव कहिं कहिं उववज्जिहिति? गोयमा! चत्तारि पंच तिरिक्खजोणियमणुस्सदेवभवग्गहणाइं संसारं अणुपरियट्टित्ता ततो पच्छा सिज्झिहिति।' इत्युक्ता किंचित् प्रथमनिह्नववक्तव्यता ॥ १ ॥

अथ जीवप्रदेशाऽऽख्यद्वितीयनिह्नववक्तव्यता किंचिदुच्यते। तत्र चरमप्रदेशो जीव इति वादिनो जीवप्रदेशास्ते च

तिष्यगुप्तादुत्पन्नाः षोडशवत्सरव्यतिक्रमे श्रीवीरजिनपंचमज्ञानोत्पत्तेः । अतस्तत्स्वरूपं किंचित् प्ररूप्यते । तथाहि–राजगृह-नाम्नि नगरे गुणशैलकचैत्ये चतुर्दशपूर्वी वसुनामा सूरिः समाजगाम । तदंतेवासी च तिष्यगुप्तः सप्तममात्मप्रवादपूर्वम-ध्यापयत् साधून् 'एगे भंते जीवपएसे जीववत्ति वत्तव्वे सिया ? नो इणमट्ठे समट्ठे । एवं दो जीवपएसा-तिन्नि संखिज्जा असंखिज्जा वा जाव एगेण वि पएसेण ऊणा नो जीवत्ति वत्तव्वं । कहं जम्हा कसिणे पडि-पुन्ने लोगागासपएसे जीवत्ति वत्तव्वं' इत्यस्याऽऽलापकस्याध्यापनावसरे मिथ्यात्वमोहनीयकर्मोदयवशवर्त्तितया चरमस्यैव जीवप्रदेशस्य जीवत्वं निर्णीतवान् । तदनु पुनः स्वमनःकल्पितमंत्यप्रदेशस्यैव जीवत्वं प्ररूपयन्निवारितः स एवं गुरुभिः 'भद्र ! मैवमन्यथा' यतः समस्तैरेव प्रदेशैः पूर्णो जीवः स्यान्नेतरथेत्युक्तोऽपि यदा स न प्रतिबुद्धस्तदा गुरुभिस्त-त्यागविषये तनूत्सर्गे निर्मिते, परमात्मानं च वितथप्ररूपणया प्रतारयन् जगामाऽऽमलकल्पायां नगर्याम् । तत्र पुनराम्रशा-लवने स स्थितवान् सपरिवारः, तस्यां च नगर्यां मित्रश्रीनामा श्रमणोपासकस्त ममागत निह्नवं विज्ञाय तत्प्रतिबोधकृते सखडिकादिने तं निमंत्रयामास निजसौधे, निमंत्र्य च पक्वान्नसिद्धान्नतीमनादिनिखिलवस्तुस्तोमं स तदग्रतो ढौकयामास, ढौकयित्वा च सर्वस्यापि वस्तुनोऽंत्य लेशमात्रं वितीर्य वसनस्याऽपि तंतुमाकृष्य तमपि च दत्त्वा वंदयामास, तं प्रति वंदित्वा च स सौवपरीवारमप्युवाच 'वदध्वं भो यूयं यत् प्रतिलाभिताः स्वयं स्वहस्तेन मया गुरवः । तदहं धन्योऽस्मि कृतपुण्योऽस्मि यन् मदीयसदने समागताः श्रीगुरवः, प्रतिलाभिताश्च मया स्वयं स्वहस्तेन सर्ववस्तुनाऽपि' इति तेनोक्ते स प्रोचे निह्नव-गुरुः 'किमिति वयं निमंत्र्य धर्षिताः' इति तेनोक्ते स प्रोचे श्रमणोपासकश्चेद् भवतां मतं प्रमाणं तर्हि मया यूयं

वंदापितास्तत् क्षंतव्योऽयं युष्माभिरविनयो मदीयः। इत्युक्त्वा तत् प्राग्भवसंबंधिवपुः परित्यज्य स सूरिसुरस्त्रिदशधाम जगाम जनितविस्मयः सर्वेषां सौवशिष्यवराणाम्। अथ च ते सर्वेऽपि विनेयास्तां निजगुरुतनुं व्युत्सृज्य चिंतयामासुरेवं यथाऽनेन देवेन सता वयं वंदापितास्तथा न ज्ञायते एतेषामस्माकं मध्येऽन्यः कश्चन देवो भविष्यति तस्याऽसंयतस्य माभूयाद्-वंदनमित्यलमस्माकं मिथो वंदनेनेति गृहीताऽव्यक्तव्रता अपरैर्गीतार्थैर्बोधिता अपि ते नैवाऽबुध्यन्। तदनु ते श्रमणसंघेन निह्नवा इति बहिष्कृताः स्वसाधुवर्गात्। अथ च ते निह्नवा विहारेण विहरन्तः क्रमेण राजगृहं जग्मुर्नगरम्। तत्र च मौर्य-वंशजो बलभद्राभिधानो नृपतिः श्राद्धपुंगवोऽस्ति। तेन ते समागता विज्ञाताऽधिज्ञाय पुनरानायिताः स्वसन्निधौ तदुद्या-नान्निजभटैः। तदनु पुनस्तान्निजसेवकजनान् प्रत्येवमादिशत् स महीनेता 'यदाऽऽनीयतां वंशकटास्तथा सज्जीक्रियतां मत्त-मतगजास्तदनु पुनरेतान् मारयत कटमर्दनेन।' इति तेनोक्ते ते साधवः प्रोचुः 'राजन्! भवान् श्रावकत्वेन विदितोऽभूदस्मा-भिस्तत् किमिति मारयसे त्वं साधुभूतानप्यस्मान्?' इति तैः प्रोक्ते स नृपतिरिति कथयांचकार 'भोः! किं ज्ञायते यूयं यतयस्तस्करा वा हेरिका वा?' इति तेनोदीरिते सति ते प्रोचुः 'भोः! पंचमलोकपाल! क्षमापाल! वयं साधव एव न तु तस्करा हेरिका वा'। इति तैरुक्ते सति स नृपतिः पुनस्तानूचे 'भो अव्यक्ततया परस्पर वंदनादिविनयकर्मपराङ्मुखाः कथमस्माभिः श्रद्धीयंते यूयं साधुतया, अव्यक्ततया च कथमहं विज्ञातो युष्माभिः श्राद्धतया' इति तेन शिक्षितास्ते त्रपानम्रं प्राप्ताः सतः प्रबुद्धास्तदव्यक्तमतत्यागं चक्रुः। तदनु तेन महीपतिना 'युष्मत्प्रतिबोधकृते कृतमिदं मये' त्युदीर्य क्षमयित्वा च तं निजं वचनापराधं सविनयं सत्कृत्य च विमुक्तास्त्यक्ताव्यक्तमतास्ते यतिपुंगवाः, तदनु ते विजह्रुः सर्वेऽपि श्रीमद्-

समयरामया । इत्युक्तं तृतीयनिह्नवस्वरूपं ।

अथ च तुरीयमाश्वमित्रनिह्नवस्वरूपं किमप्युच्यते तत्र समुच्छेद वस्तुनः समुत्पन्नस्य समुत्पत्त्यनंतरमेव सर्वथापि स-
वंतीत्येवंशीलाः सामुच्छेदास्ते च मिथिलायामश्वमित्रतो यथा समुत्पन्नास्तथा तत्स्वरूपं प्ररूप्यते तथाहि । मिथिलायां
नगर्यां लक्ष्मीगृहोद्याने श्रीमहागिरिगुरोरंतेवासी कौडिन्यनामा समाययौ । तच्छिष्योऽश्वमित्रः श्रीवीरनिर्वाणाद् व्यतीते
सति विंशतिसमधिके वत्सरशतद्वयेऽनुप्रवादपूर्वस्य नैपुणिकं वस्तु पपाठ, तत्र चायमालापकः 'पडुप्पन्नसमया नेरइया
वुच्छिज्जिस्संति एवं जाव वेमाणियत्ति' एवं च तस्य पठतो मिथ्यात्वमोहनीयकर्मोदयवशतः महत्तमो विपर्यासः श्रीमद्गु
ऊहापोहेन प्रशमयतु । यतं चेद् वस्तुचिता सर्वेषां भावानां तर्हि क्व सुकृतदुष्कृतकर्मविपाकवेदनम् । एवं च स तत्र
प्रज्ञापिता श्रीगुरुभिः 'भद्र ! नैवमस्यथा यतः सर्वेऽपि भावा द्रव्यरूपतया नित्याः पर्यायरूपतया चानित्या' इत्युक्तोऽपि
न गुरुमिश्रवचनानि स्वीकृतवान् स्वमतः समुत्पत्तिसमनन्तरमेव समस्तवस्तूनां विनाशत्वं प्ररूपयन् प्राप्तवान् कांपील्य
पुरनाम्नि नगरे मथुरिकाः । तत्र च नगरे खंडरक्षाख्या श्रमणोपासकाः शौल्किकाः सन्ति तैस्ते समागता विज्ञाताः सामुच्छे
दास्तस्तु ते चौरसे प्रतिबोधकृते ते मारयितुं प्रारब्धाः तदा च ते प्रोचुः सामुच्छेदाः 'वयं व्रतधारिणः श्रुताः श्रावक
तथा तद् किं विपरीतं वनितावतो भवद्भिः' इति तेषामस्य श्रमणोपासककुलमहाः मोचिरे 'रे ! वयं तु पथिन भवतो यत्रपा
पतो युष्मन्मतेन ये साधवः प्रव्रजितास्ते तु तन्मतमनेन व्यवच्छिन्नाः । भवंतस्तु केऽप्यपरे परमोषिणः तेमाश्चेषे । तत्
रूपमत्रमाभिर्युष्माकं न क्रियते निग्रह' इति तैर्युक्त्या शिक्षिताः संतः प्रतिबुद्धाः परित्यज्य तत् कुमतं ते सर्वथा सम्यक्-

श्रीजैनमार्गं तदनु तैस्ते तमपराधं क्षमयित्वा विमुक्ता इति किंचिदक्षरन्यासीकृता तुरीयनिह्नववक्तव्यता ।

अथ पंचमद्वैक्रियनिह्नवस्वरूपं किमप्युच्यते। तत्र कालाभेदेन क्रियाद्वयानुभववादिनो द्वैक्रियास्ते चोल्लुकातटे गंगतः
सम्रुत्पन्नाः समतीते श्रीवीरनिर्याणतो वसु(८)विंशतिसमधिके संवत्सरशतद्वैते तत्कथानक चेदम्। तथाहि उल्लुकाभिधाने जनपदे
उल्लुकासरित एकस्मिंस्तीरे खेटस्थान नाम पुरमपरतीरे पुनरुल्लुकातीर पुरम्। तस्मिंश्च महागिरिगुरोरंतेवासी धनगुप्तनामा
पश्चिमतटे प्रवर्त्तते। तच्छिष्यस्तु गगसूरिनामा पूर्वाशातटसंस्थिते संनिवेशे। स चाऽन्यदा कदाचित् शरत्समये निजगुरुधनगुप्त
पादवदनं निमित्तमुल्लुकासरित्तीरमुत्तरन्नधःशीतमुपरि च तरणिकिरणताप संवेदयन्नेकस्मिन् समये क्रियाद्वयसंवेदनं स्वीचकार।
तदनु च स गुरुचरणनमस्करणपुरस्सर गुरून् प्रति विज्ञपयामास 'भगवन्मया सरिद्वारि समुत्तरता समसमयमेव शीतातपवेदन-
लक्षण क्रियाद्वयमनुभूतम्। तर्हि एकस्मिन् समये युगपत् क्रियाद्वयानुभवतो 'जुगवं दो नत्थि उवओगा' इत्यस्य वाक्य
स्य कथं प्रमाणता' इति तेनोक्ते तद्गुरवस्ते धनगुप्तसूरयः प्रोचुः 'भद्र! नैवमब्रवी यतः समयः परमसूक्ष्मतमः कालस्तद्भे-
दोऽरूपेव क्रियाद्वयानुभूतौ स पुनः कमलदलशतव्यतिभेदक्रियापृथक्कालवत् सूक्ष्मत्वान्नोपलक्ष्यते।' इति गुरुभिर्बोध्यमानो-
ऽपि स यदा न प्रतिबुद्धस्तदा तैस्स गणान्निर्वासितः सन् जगाम राजगृहनामधेयनगरम्। तत्र च वैभारगिरिनितंबनिकटप्रति-
ष्ठितपचधनुःशतमितायामविस्तारो महातपस्तीरप्रभाभिधानो जलाशयविशेषो वर्त्तते। तत्परितश्च समन्ताद्युद्यानम्। तत्र च
मणिनागो नाम नागस्तच्चैत्ये सभायां क्रियाद्वयवेदन प्ररूपितवान् स गगनामाचार्य्यः। तदा च तदुत्सूत्रवचनं निशम्य
श्रुत्यनुचितक्रोधाक्रांततनुः स नागः प्रत्यक्षीभूय तमेवमाचख्यौ रे! दुष्टात्मन्! रे! दुर्बुद्धे! किमेवंविधमवक्तव्यमुत्सूत्रं

६ शकुनिकाविद्या
ताश्चेमाः सप्त तथाहि वृश्चिकविद्या १ सर्पविद्या २ मूषविद्या ३ मृगीविद्या ४ वाराहीविद्या ५ काकीविद्या
७ एताभिः सप्तभिर्विद्याभिर्वादे पराजितोऽपि स वादिनमेतानि विधाय रूपाण्युपसर्गयति ।' इति श्रीगुरुभिरुक्तः स रोहगुप्त-
स्तान् प्रति विज्ञपयामास 'भगवतः ! किमथ न स्यात् कापि समुन्नति 'रिति तेनोक्तास्ते भगवतस्तस्मै पाठसिद्धा मयूरी
१ नकुली २ मार्जारी ३ व्याघ्री ४ सिंही ५ उलूकी ६ श्येनविद्या ७ लक्षणास्तत्प्रतिपक्षभूताः सप्तविद्याः प्रदत्तवंतः ।
इत्येताः सप्तविद्यास्तस्मै प्रदाय तद्रजोहरणमभिमंत्रयामासुः श्रीसूरिपादाः । अभिमत्र्य च कथयामासुस्ते तं प्रति 'चेदेता-
मिस्तद्विद्याविपक्षभूताभिः सप्तभिर्विद्याभिः पराजितो वादी त्वदुपसर्गायान्यत् किमपि प्रयुंक्ते तदा स्वमूर्द्धोपरि रजोहरणमेत-
दभिमन्त्रितं भ्रामयेस्तद्दनुजरिपुपतिनाऽपि त्वं न जीयसे ।' इति गुरुदत्तशिक्षः शिक्षितविद्यः स रोहगुप्तः समाययौ वादि-
शार्दूलसमधिष्ठितां तां सभा प्रोचिवांश्च स एवं वादिने यत् 'पूर्वपक्षस्त्वदीयो मदीयस्तूत्तरपक्षः' इति तेनोक्तो वादी चिंतया-
मास यदयं वादी जैनो जिनमतनिष्णातमतिस्तदस्यैव मतमंगीकृतपूर्वपक्ष गृह्णामि । यदय स्वीयमतं न स्वयं दूषयिष्यतीति
विचिंत्य प्रोचिवान् 'यज्जगति जीवाजीवलक्षणौ द्वावेव पदार्थौ नास्ति तदतिरिक्तः कोऽपि तृतीयः पदार्थः ।' इति तेनोक्ते तं
प्रति प्रोचिवान् साक्षेपं रोहगुप्तः 'देवानांप्रिय ! काननमिवासि किरात इव नगरश्रियं किं वेत्सि ? त्व मतमार्हतं, यतोऽस्मन्-
मते जीवा अजीवा नोजीवा इति पदार्थत्रयमेव वेविद्यते ।
यथा भूर्भवःस्वस्त्रयम् । यथा स्त्रीपुंनपुंसकत्रितयम् । यथा वा उत्तममध्यमजघन्यत्रयी । इत्यादिवत् सर्वमपि वस्तुत्रितया-
त्मकमेव जीवलोके न तु किंचिद्द्वयात्मक' मित्यादि वचोयुक्तिभिर्निर्जितः स वादी तदुपसर्गाय मुमोच वृश्चिकादीन् यथा-

कथम् । ते च रोहगुप्तेन परिपाट्या पराजिताः केकिमृगादिभिः । एवं प्रतिवादिना रोहगुप्तेन प्रतिविद्याभिर्वादिविद्यासमूहेऽपि निष्फलीकृते स वादी सस्मार रासभीं विद्याम् । सापि रूक्षरीरूपा शीर्षोपरि रजोहरणं भ्रामयता तेन रोहगुप्तेन निष्फलीकृता सती परिव्राजकशीर्षोपरि विष्ठामूत्रे विधाय विरसं रसंती यातवती स्वस्थानम् । एवं तेन रोहगुप्तेन निर्जितः स वादी त्रपा-नतवदनः स्थाने स्थाने जनैर्निन्द्यमानो जगाम यथागतम् । जितकाशी स रोहगुप्तोऽपि गत्वा गुर्वन्तिके यथास्थितं सर्वं निवेदयामास वादिविजयस्वरूपम् । तदा च गुरुभिः प्रोक्तं ' भद्र ! भवता वादमध्ये इत्थं कस्मान्न प्रोक्तं यद्राशिद्वयमेव यथा जीवाजीवनोजीवलक्षण राशित्रयं कल्पितम् । किंतु वस्तुतस्तु द्वावेव पदार्थौ न पुनस्त्रयम् । यद्यपि त्वयैतन्न प्रोक्तं तर्हि अधुनापि तत्र गत्वा निवेदयेत्थ् ।' इत्थं गुरुभिरुक्तोऽपि स स्वमहत्त्वक्षतिभीत्या तत्र न गतवान् मिथ्याहङ्कृतवान् देवं, परं गुरूणामग्रेऽपि स्थापयामास स्वोक्तमेव । तदा च श्रीगुरवो नृपसमीपे गत्वा कथयामासुः ' यदस्माकं मते जीवा जीवरूपौ द्वावेव पदार्थौ न पुनर्नोजीवलक्षणस्तृतीयः पदार्थः । तदनेनास्मच्छिष्येणाधिनास्मत्सिद्धान्तविरुद्धोक्त्या स्थापितं वस्तुमिदम् 'मिति गुरुभिः प्रोक्ते सति स गुरुभिरपि सार्धं स्वोक्तस्थापनाय षण्मासान् यावत्तुपसभाय चकार साहंकारतया विवादम् । एवं च षण्मासमपि निर्विण्णेषु नृपप्रमुखेषु तैः परिषदः श्रीगुरुवस्तन्मतनिर्लोठनाय कुत्रिकापणे जग्मुस्तत्र च देवताधिष्ठ श्रीजीवाजीवनोजीवलक्षणवस्तुत्रययाचने श्रीजीवाजीवौ सा दत्तवती नोजीवास्तु न संतीत्युक्तवती । एवं चतुश्चत्वारिं शदुत्तरशतपृच्छाभिः स निर्जितो गुरुभिः । तत्स्वरूपं च लिपिश्चुम्ब्यते तथाहि ।

तेन रोहगुप्तेन द्रव्य १ गुण २ कर्म ३ सामान्य ४ विशेष ५ समवायलक्षणाः षट्मूलपदार्थाः प्ररूपिताः । अतएव षड्

इत्युक्तः सन् स प्राह ' जननि ! यदध्ययनेन तत्रभवत्यास्तुष्टिर्भविति तद् भवत्या समाख्यं प्रसादमाज्ञापय ' इति तेनोक्ता सती सा स्वं धन्य मन्यमाना सप्रणयं प्रोक्तवती ' वत्स ! निर्दलितदुर्नयविवादं दृष्टिवादं पठ शठताविप्रयुक्तः ' स चिंतयामास यस्याभिधानमपि मनोहर तदध्ययन तु कीदृग्विध भविष्यतीति समुत्पन्नतत्पठनकौतुकः स सौवसवित्रीं प्रश्नयांबभूव 'भूवलयतिलकतुल्यं तदध्यापकं गुरुं प्रकटीकुरु यथा तन्निकटे तत् पठामि।' इति तेन विज्ञप्ता सती सा तं प्रत्युवाच 'तनयात्मीयेक्षुवाटके तोसलिपुत्रनामानः श्रीजैनाचार्याः सर्वजनाश्चर्यकारिज्ञाननिधयः समवसृताः सन्ति तत्पार्श्वे त्वमधीष्व विश्वजनीनं श्रीजिनोपज्ञ श्रीदृष्टिवादं कृतभव्यजनताचित्ताह्लादम् ।' इति तयोक्तः स प्रातःसमये तत्र यास्यामीत्युदीर्य तद्ध्यानैकतानमनास्त्रियामामतिवाहयामास विनिद्रतया । प्रत्यूषे तु स चलितस्तत्पठनाय । तदा च तस्यार्द्धमार्गे तज्जनकसुहृत्तत्प्राभृतहेतुकासतटप्रतिष्ठापितसार्द्धनवेक्षुदंडः कोऽपि द्विजन्मा मिलितः सम्मुखस्तेनालिंगनपुरस्सर संपृष्टः ' किमर्थमेवमेकाकी गच्छन्नसि ' इति तेनोक्तः सन् स आर्यरसालवाटके, इक्षवस्तु त्वदर्थं मयानीताः संति तेन व्यावृत्य समागच्छ मया समं सौवसौधे ।' इति तेनोक्तः सन् स आर्यरक्षितः कथयामास–' जनन्यादेशादहं व्रजन्नस्मि शीघ्रमेव समेष्यामि ततः कृतकृत्यः, पूज्यपादैस्तु गंतव्य सौवावासे बंधुप्रसत्तिहेतवे । ' इत्युक्त्वा सौवेक्षुवाटं पति स स्वरँश्चिंतयामास ' अस्मान्निमित्ततो दृष्टिवादस्य परिच्छेदा अध्याया वा नव सार्द्धाः समाप्तिं यास्यंति न समधिक'मिति निश्चित्य गतः स प्राप्तः समये शारदवारिदगर्जितरवानुकारियतिजनविधीयमानस्वाध्यायध्वन्याद्वैतमयोपाश्रयद्वारदेशम् । तत्रागतः सन् स चिंतयामास कथमेतच्छासनानभिज्ञेनैतद्वंदनं विधेयमिति चिंतयतस्तस्य श्रीगुरुवंदननिमित्तं तत्र ढड्ढराभिधः श्राद्धः समागमत् । तत्पृष्ठानुगः सोऽपि तत्क्रियमाणं गुरुवंदनादि

पृष्टा स प्रोक्तः ' भद्र ! मम निर्यामकताकृते कियंतमपि समयमवतिष्ठ त्व यथा मम त्वन्निर्यामनात्समाधिमृतिर्भवेत् । यतः प्रेत्यसुखाभिलाषिणामयमेवावसरः सम्यक्साधितो विलोक्यते ' इति तैरुक्ते सति तद्वत्ति तद्वचनं प्रपद्य स तत्र तस्थिवान् । तत्र च स्थितेन तथा ते शुश्रुषिता यथा तेषा देवभूयगततामिव समभूत् समाधिः । एवं च तदुत्तरविस्याविधानसावधाने तस्मिंस्ते गोप्यमिदं तस्मै निवेदयामासु ' यदुज्जयिन्यां प्राप्तेन भवता पृथगुपाश्रये शयनादने विधेये । यतो वज्रस्वामि-मंडल्या येन सकृदपि स्वापसदने निर्मिते स तैः सममनशनप्रतिपन्ना भविष्यति । भवांश्च श्रीमदार्हतमतप्रभावको भविता तेन मद्वचन विधेयं भवता ' इति तैरुक्तः सन् स तथेत्युदीर्य तद्वचनं प्रपन्नवान् । अथ च श्रीभद्रगुप्ताचार्येषु तन्निर्याम-नात् समाधिना देवत्वमधिगतेषु स श्रीमानार्यरक्षितस्ततः स्थानाद् विजहार श्रीवज्रप्रभुपादसमीपे । अथ च नगरासन्ने तस्मिन् समागते सति श्रीवज्रस्वामिना निशाविरामे स्वप्नो ददृशे यत् केनापि प्राघूर्णकेन परमान्नं भृत्पतद्ग्रहस्थितं बहु भक्षितम् अल्पमेव स्थितमिति । स च श्रीगुरुभिः स्वविनेयानां पुरस्तादुक्तं द्विवारोऽप्येवं यदेतत् स्वप्नानुभावेन कोऽप्यद्य विनेयः समायास्यति स च मयि स्थित बहु श्रुतं पठिष्यति स्वल्पमेव स्थास्यति । इति तस्मिन् स्वविनेयानां पुरः स्वप्नविचारं प्ररूपयति सति सम्प्राप्तः श्रीमानार्यरक्षितस्तदा च श्रीवज्रस्वामिपादास्तमभिनवमभ्यागतं समागतं निरीक्ष्याभ्युत्थानपुरस्सरं तं प्रति स्वागतादिप्रश्न चक्रुः । सोऽपि श्रीपूज्यपादानभिवंद्य समुपविष्टस्तत्पादपद्ममूले । तदा च ते श्रीगुरवस्तं प्रति प्रश्नयाबभूवु ' महानुभाग ! कुतस्ते किं निमित्तमावागमन ' मिति तैः पृष्टः स प्रोचिवान् ' भगवँस्तोसलिपुत्रसूरिपादानां समीपात् ' तदा च तैरुक्त ' भवान् किमार्यरक्षितोऽधीतशेषपूर्वगतश्रुतपाठाय समायातोऽसी 'ति तैः पृष्टे स ' ओ ' मित्यू-

पृष्टा स प्रोक्तः ' भद्र ! मम निर्यामकताकृते कियंतमपि समयमवतिष्ठ त्व यथा मम त्वन्निर्यामनात्समाधिमृतिर्भवेत् । यतः प्रेत्यसुखाभिलाषिणामयमेवावसरः सम्यक्साधितो विलोक्यते ' इति तैरुक्ते सति तद्दत्ति तद्वचनं प्रपद्य स तत्र तस्थिवान् । तत्र च स्थितेन तथा ते शुश्रुषिता यथा तेषा देवभूयगतवामिव समभूत् समाधिः । एवं च तद्वरिवस्याविधानसावधाने तस्मिंस्ते गोप्यमिदं तस्मै निवेदयामासु ' यदुज्जयिन्यां प्राप्तेन भवता पृथगुपाश्रये शयनादने विधेये । यतो वज्रस्वामि- मंडल्या येन सकृदपि स्वापसदने निर्मिते स तैः सममनशनप्रतिपन्ना भविष्यति । भवांश्च श्रीमदार्हतमतप्रभावको भविता तेन मद्वचन विधेयं भवता ' इति तैरुक्तः सन् स तथेत्युदीर्य तद्वचनं प्रपन्नवान् । अथ च श्रीभद्रगुप्ताचार्येषु तन्निर्याम- नात् समाधिना देवत्वमधिगतेषु स श्रीमानार्यरक्षितस्ततः स्थानाद् विजहार श्रीवज्रप्रभुपादसमीपे । अथ च नगरासन्ने तस्मिन् समागते सति श्रीवज्रस्वामिना निशाविरामे स्वप्नो ददृशे यत् केनापि प्राघूर्णकेन परमान्नं मत्पतद्ग्रहस्थितं बहु भक्षितम् अल्पमेव स्थितमिति । स च श्रीगुरुभिः स्वविनेयानां पुरस्तादुक्तं द्विवारोऽप्येवं यदेतत् स्वप्नानुमानेन कोऽप्यद्य विनेयः समायास्यति स च मयि स्थितं बहु श्रुत पठिष्यति स्वल्पमेव स्थास्यति । इति तस्मिन् स्वविनेयानां पुरः स्वप्नविचारं प्ररूपयति सति सम्प्राप्तः श्रीमानार्यरक्षितस्तदा च श्रीवज्रस्वामिपादास्तमभिनवमभ्यागत समागतं निरीक्ष्याभ्युत्थानपुरस्सरं तं प्रति स्वागतादिप्रश्नं चक्रुः । सोऽपि श्रीपूज्यपादानभिवंद्य समुपविष्टस्तत्पादपद्ममूले । तदा च ते श्रीगुरवस्तं प्रति प्रश्नयांबभूवु ' महानुभाग ! कुतस्ते किं निमित्तमात्रागमन ' मिति तैः पृष्टः स प्रोचिवान् ' भगवँस्तोसलिपुत्रसूरिपादानां समीपात् ' तदा च तैरुक्त ' भवान् किमार्यरक्षितोऽधीतशेषपूर्वगतश्रुतपाठाय समायातोऽसी 'ति तैः पृष्टे स ' ओ ' मित्यू-

प्रव्रज्यया। अथ चार्यरक्षितः पुनः पुनर्जननी वंदापनविषये प्रेरयति लघुभ्राता। सोऽपि च जविकाध्ययने बहुक्लेशमनुभवन् श्रीवज्रस्वामिनं प्रति विज्ञप्तवान् 'भगवन्, दशमपूर्वस्याद्यापि कियदवशिष्यते ?।' इति तेन विज्ञप्ते श्रीवज्रगुरुरपि प्रोक्तवान् 'अधीष्वस्यक्षेप किमनेन प्रश्नविधानेन ?।' पुनरपि व्यतीते सति कियत्यपि सत्यपि समये स तमेव प्रश्नं चकार गुर्वन्तिके। श्रीगुरवोऽपि तं प्रत्यूचु'र्महानुभाग! मदरस्तिष्ठति सर्पवस्त्वधीत' इति श्रीगुरुभिरुक्ते स कियत्यपि दिनानि पुनर्महोद्यमं व्यधात्तदध्ययने। अथ च मातृवदापनविषये पुनः पुनरनुजन्मना प्रेरितस्तद्विषयोत्कण्ठितचित्तः स विज्ञप्तवान् श्रीगुरुम् 'अनुजानीध्वं मां जननीप्रभृतिसांसारिकवर्गवंदापनविषये। ततः कृतकृत्यः पुनः मत्वर समेष्यामि श्रीपूज्यपादपादमूले पुरतः पठनार्थं' तदा च श्रीगुरुभिः श्रुतोपयोगदानादवगतं यद्दशमपूर्वमध्येव स्थास्यति मदीयायुषः स्तोकत्वात् प्रत्यागतस्य चास्य मया सार्द्धममिलनात्। इति दत्तश्रुतोपयोगैस्तैः पूज्यपादैः प्रोक्तं-'भद्र! तत्र इयत्येव प्राप्तिस्तेन तव मिथ्यादुष्कृतमस्तु त्वया सुखसंयमयात्रया गंतव्यम्।' इति दत्तानुज्ञः स श्रीपूज्यपादपादवदनपुरस्सर विजहार दशपुरपुर प्रति। स सोदरः मार्गे च मिलितः स पाटलीपुरनगरे स्वधर्माचार्याणा श्रीतोसलिपुत्राणाम्। तदा च ते गुरवः स्वविनेयमधीतसार्द्धनवपूर्वं श्रीआर्यरक्षितनामानं योग्य विज्ञाय तं सौवपदे स्थापयित्वा परलोकं साधयामासुः। श्रीआर्यरक्षितसूरयोऽपि स्वधर्मगुरुषु श्रीतोसलिपुत्रसूरिषु दिवगतेषु सुखसंयमयात्रया प्रापुर्दशपुरनाम्नि पुरे। तत्रागतैश्च तैः श्रीआर्यरक्षितसूरिभिः स्वदेशनया प्रतिबोध्य प्रव्राजितः स्वजननीभगिनीप्रभृतिकः पितृवर्जः स्वजनवर्गः। पिता तु तैः सार्द्धं तिष्ठति प्रेम्णा तपस्यां तु न गृह्णाति वदति च गुरूणां पुरतः 'आजन्मावधिगृहीतोपवीतकरपात्रिकावस्त्रयुगलछत्रिकोपानत्-

प्रभृत्यिदं पृथिवेस्थैर्य कर्म कुर्वामि ?। वैदेशान्यनुयानीर्थं तदा प्रपद्येऽहं युष्मदीयां मार्गयाम्' इति जनकेनोक्ते गुरवर्धितया मातृा–मनेन वेषेण वैनमब्रज्यावानं त्वनुचितम्। तथापि प्रमत्यासानसमनन्तरं मनो शनैः समपाद्यया कारापयिष्यतेऽनेन सम्यक्सापुर्विमनरमारिकयिति निर्विश्य तं मैनरीक्षया दीक्षयामासुः श्रीसूरयः। दीक्षासमनन्तरं च प्रापितो ग्रहणासेवनाख्यां द्विविधां शिक्षां स्वयमेव श्रीमार्यरक्षितसूरिभिः। अथ चाऽन्यदा पूर्वदीक्षिताः श्रमणोपासकपोताः प्रोचुः 'वयं वयं छत्रिका धरमेकं मुक्त्वा सर्वानपि साधुधुमवासमामः' इति तैरुक्ते स्वपराशुद्धिं निरीक्ष्य स जरत्श्रमणकुंजरः स्वांगजन्मानं श्रीमार्यरक्षितनामानं गुरुं प्रति विज्ञप्तवान् 'पुत्र! मामद्याऽमी सर्वेऽपि वापसो वंचन्ते, अहं तु कुतो हेतोरवंदनीयः!' इति तेन विज्ञप्ते श्रीगुरवस्तं प्रति प्रोचुः 'तात! कथितमस्ये कर्म तव यथा जापदीति यतो धृतीतवपस्थानामेवस्या परममनुचित तद् त्वमनया कथामि तस्मिन्नतिचयाचक्रोऽपः' इति श्रीगुरुभिरुक्ते तेनोक्तं तर्हि मयस्वेनं पदत्रपानत्करकरात्रिकोप वीतानि स्थापिता स श्रीगुरुभिः। परिधानं तु विप्रजनोचितमधापि न मुचति। अन्यदा च पूर्वदीक्षितास्त मात्सरिणः परि धानपरिहारकृते तं प्रति पूर्ववत् प्रोचुस्तदा च स संजातकोपस्तान् प्रस्तूपे 'या वंदध्वं पूर्व कदाचन युष्मत्पूर्वदनेन पा देवसाधाधिभि साम्प्रति मा भूयाद् परं परिधानं सैवाप स्यस्थे' इति वेदोक्ते सति तत्पावनकृते श्रीसूरपर्मितयामासुरुपायांतरम्। अन्यदा च कस्मिन्नपि श्रमणसत्तम कलानधने कालधर्ममुपेयुषि पूर्वसंस्थिताः साधवस्तच्छरीरोद्वहनायाऽहंपूर्वं धनाममपादित निरेषाऽर्थयिष्यते न त्वस्मत्तंयमिति रिति श्रीगुरुभिरुक्ते सति जनकर्षिः प्राह 'पुत्र, यदि प्रभूत पुण्यमत्र योमनीति तदा ममा

दिशास्मिन् कर्त्तव्यविधाने ' इति तेनोक्ते श्रीगुरुवोऽप्यूचुरस्मिन्नुह्यमाने उपसर्गाः समुत्तिष्ठंति तत्सहनं चेन्न क्रियते तदास्माकं शुभ न भवति, अस्मिन्नुह्यमाने च निर्जरा महत्तरा, एव स्थिते सति यथारुचि विधेहि ' इति श्रीगुरुभिरुक्ते स प्राह ' मया गृहित्वे पुरोहितपदप्रतिष्ठितेन सर्वाण्यपि नृपतिकृत्यानि निष्प्रत्यूहतया निर्वाहितानि तदेतदुद्वहने का मम प्रत्यूहभीति '–रित्युदित्वोत्क्षिप्तं तेन तत्कुणपम्। एवं सौवांसविन्यस्ततत्कुणपस्य संघस्य तस्य व्रजतः पूर्वशिक्षिताः शिशवः कटिनित्रसनमपजह्रुः। अपहृतेऽपि तस्मिन् स्वतनयामंगलभिया स न मुमोच शवमतश्चित्तं दूनोऽपि। तदा च तत्क्षणमेव पूर्वं सज्जीकृत श्चोलपट्टस्तत्कट्यां दवरकेण बद्धः साधुभिः। अथ च कृत्य विधाय प्रत्यागाते सति तस्मिन् गुरुभिः परिधानकृते शाटकनिमंत्रणे तस्य कृते सति स प्रोचे यदालोकनीयं तत् त्वालोकित सर्वैरपि। अथ चोलपट्ट एवास्तु किमधिकेन परिग्रहसंग्रहेण त्यक्तसंगस्य मे ?। एवमुपायैस्त्याजितः स सकलमपि गृहस्थनेपथ्यम्, पर श्रीगुरुभिरनेकधा बोध्यमानोऽपि स गोचरचर्यायां न याति। तदा च श्रीगुरुभिस्तस्य तद्गमनकृते साधव एवं रहः शिक्षिताः। ' यदद्य युष्मद्विहृतं युष्माभिरेव भोज्यं न तु मत्पितुः किमपि देय 'मिति तान् शिक्षयित्वा सौनवप्तारमापृच्छय विजह्रुः श्रीगुरवः समासन्नग्रामे। गच्छद्भिश्च तैः पितृमनःप्रत्यायनार्थं माधव एवं उक्ता यत् ' मज्जनकस्यैवैयावृत्यादिविधौ युष्माभिर्यतनीयम्।' अथ च भोजनवेलायां साधुभिः श्रीगुरुतातस्यार्पिनं निमंत्रितस्तेन तस्य तद्दिनेऽपोषणमेव समभवत्। अथ च द्वितीयदिने समागतैः श्रीगुरुभिः स्वतातस्य समाधाने पृष्टे सति स प्राह ' पुत्र ! चेद् भवता बहिर्बहुदिनानि विहारो विहितोऽभविष्यत्तदा ममानशनसिद्धिः संजाताऽभविष्यद्। यत एतैर्भवद्विनेयैरानीतं भक्ताद्यतैरेव भुक्त मन्नामापि न गृहीत 'मिति तेनोदिते

वनिता कर्त्तनकर्मणा स्वपरिधानकृते कृतवती कष्टेन शाटकमेकं तमपि वस्त्रपुष्पेण प्रार्थित सा तस्मै प्रयच्छति अन्येषां तु तत् प्रदाने किं कथनम् ? दुर्बलिकापुष्पस्तु यथेच्छं हविर्भुंजानोऽपि पूर्वपठितपूर्वनवकनित्यस्मरणवशतः कृशतरतां तनौ भजते। तस्य च सौगतमतभाविता दशपुरवासिनः स्वजनाः श्रीगुरु प्रति विज्ञपयामासुर्यत् ' अस्माकं मते भिक्षवो ध्यानं विदधति, युष्मत्शासने तु तन्नास्तीति ' तैरुक्ते सति श्रीगुरवः प्रोचुरयं युष्मदीयः स्वकीयो दुर्बलिकापुष्पस्तनौ दुर्बलत्वं ध्यान-विधानत एव धत्ते ' इति श्रीगुरुभिरुक्ते सति तत्संबंधिनः प्रोचुर्यत् ' अयं गार्हस्थ्ये स्निग्धतराहाराभ्यवहारतः प्रबल तनुरासीद् युष्माकं तु भिक्षावृतीनां कुतस्तद्योग ' इति तैरुक्ते सति श्रीगुरवः कथयांबभूवुरस्माकं लब्धिनिधेर्घृतपुष्पात्सर साहारयोगस्तु भूयानपि वेविद्यते। अथ चेदस्मदुक्ते युष्माकं न प्रत्ययस्तदा युष्माभिरयं स्वनिलये पोषणीयः सरसाहारैः ' इति गुरूक्ते सति तैर्गुर्वादेशेन स्वावासे नीत्वा स स्निग्धाहारैः पोषितोऽप्यनवरतं पूर्वपठितपूर्वगतश्रुतचिंतनवशात् कृशतामेव भजते। अथ गुर्वादेशाचेन पूर्वगतध्याने त्यक्ते प्रांताहारभोज्यपि स समभूत् पुष्टतनुः। एवं च तस्य ध्यानविधानं निरीक्ष्य तद्वचनेन प्रविबुद्धास्तदीयस्वजनाः श्रमणोपासकतां भेजुः। तस्मिंश्च गच्छे दुर्बलिकापुष्पफल्गुरक्षितविंध्यगोष्ठामाहिलनामानः श्रुति(४)मिताः प्रज्ञातिशयविश्रुतकीर्त्तयो यतयो विजयंते। तेषां मध्ये विंध्येन विज्ञप्ता श्रीगुरवः ' भगवंतो महत्यां वाचना-मडल्यां ममाध्ययनं विदधतः स्खलना बोभवीति तेन मम पृथग्मंडल्यां वाचनाप्रदानविषये प्रसीदत्वम् '। इति तेन विज्ञप्ते सति श्रीगुरवस्त प्रति कथयांबभूवु ' भद्र ! यदि तव पृथग्मंडल्यां वाचना दीयते तदान्येषां साधूनां तदंतरायः स्यात्तेन तव दुर्बलिकापुष्पो वाचनाचार्यो भव'त्विति गुरुभिरुक्ते गुर्वादेशाद् विंध्यस्य वाचनां ददतो दुर्बलिकापुष्पस्य पूर्वाधीतस्य

याद्दश तत्स्वरूप श्रीसीमंधरजिनेनोक्तं ताद्दशं श्रीपूज्यपादैरप्युक्तम् । अथ यास्याम्यहं स्वस्थाने ' इति तेनोक्ते सति श्रीगुरवः
प्रोचुस्त प्रति ' प्रतीक्षस्व क्षण यावद् यतयः समायाति तवर्द्धिं दृष्ट्वा च यथा ते चरिते निश्चलचेतसो भवंति ' इति तैरुक्ते
सति शचीपतिः प्रोचे ' मत्समृद्धिदर्शनेन निदान कुर्वंति यतयस्तेन मदवस्थानमयौक्तिक 'मिति तेनोक्ते सति ते प्रोचु–
' स्तर्हि किंचित् त्वदागमनचिह्न विधेहि ' इति तैरुक्ते सति द्वारमन्यतो विधाय ययौ त्रिदिवं त्रिदशपतिः। अथ च समागतैः
साधुभिर्द्वारप्रश्ने निर्मिते श्रीगुरुभिरूचे ' द्वारमन्यपार्श्वे वेविद्यते तेन तत्रागच्छध्वम् ' इति तैरुक्ते सति यतिभिः प्रोक्त
' मित्थमेतत् कथं जात 'मिति तत्पृष्टाः श्रीगुरवः प्रोचुः ' शक्रेणैतदेवं विहित 'मिति श्रीगुरुभिरुदीरिते ते प्रोचुस्तर्हि किं
न स स्थापितोऽस्मदागमनं यावत् ' इति विज्ञप्ते सति श्रीपूज्यैरुक्तं सर्वं पूर्वाशापतिस्वरूपम् । तस्मिन्नुक्ते च सति यतय-
श्चिंतयामासुः कथ भवत्यस्मादृशां हीनपुण्याना दर्शनं शचीपतिरूपसमृद्धेः । अथ चाऽन्यदा दशपुरपुरं प्रति विजह्रुः
श्रीआर्यरक्षितसूरयस्तदा च मथुरायां समायातः कोऽपि वादी चार्वाकः सर्वनास्तित्वस्थापनवावदूकः । तस्मिन्नायाते च सति
श्रीसंघेन साधुद्वय प्रेषितं श्रीगुरुसमीपे गुरुभिश्च गोष्ठामाहिलस्तत्र प्रहितस्तन्निग्रहहेतवे । तेन च सति गृहीतः श्रीमदार्हत-
मतियुक्तिभिः तदा च स संघेन वादलब्धिसंपन्नत्वात्तत्रैव चतुर्मासीं स्थापितः। इतश्च निजायुःपर्य्यंतमवधार्य श्रीगुरुभिः
पृष्टाः साधवः को युष्माकमाचार्यः क्रियते ?। तदा च श्रीगुरुसत्कसकलमुनिभिरुक्तं फल्गुरक्षितो गोष्ठामाहिलो वा भवत्वस्मा-
कमाचार्यः श्रीगुरूणा च दुर्बलिकापुष्पः समतः । तदा च श्रीगुरुभिः संमील्य सकलसाधुवर्गनिष्पावतैलसर्पिःकुंभत्रितय-
निदर्शनं दर्शितम् । यथा तेष्वधोमुखेषु विधीयमानेषु निष्पावाः सर्वेऽपि निर्यांति, तैलं तु किंचित्तिष्ठति, घृत तु प्रभूतं

तिष्ठति । एवं दुर्बलिकापुष्पं प्रतीत्य भगवियते निष्पावसमिभोऽहं जाते, फल्गुरक्षितं तु प्रतीत्य तैलकुम्भनिभः, गोष्ठामाहिलं त्वाश्रित्य घृतघटसमत्वेन भवते । दुर्बलिकापुष्पो पुष्पमित्राचार्यो गणस्यसूरीर्य स स्थापितः स्वपदे । स्थापयित्वा च स्वयं मोक्षे श्रीगुरुभिर्यतीनां पञ्चमीशानुवर्तनीयमेतस्मिन्नथा चार्ये । इति दत्तशिक्षिताः श्रीमदार्यरक्षितसूरयः प्रान्तसमयेऽनशनं विधाय च सुः सुरलोकं प्रीतार्थैर्निर्वापिताः । अथ च मथुरास्थितेन गोष्ठामाहिलेन जनकिंवदन्त्याकर्णितं यद् गुरुभिः स्वपदेऽवतीर्णं दुर्बलिकापुष्पस्य चरितं स्वपदम् । ततो रोषोद्गोष्ठामाहिलो गुरौ श्रीदुर्बलिकापुष्पे च प्रतनुत्याचार्ये प्रोषे चरितुमोत्सन्नंतरं मथुरापुरीतो दशपुरे प्राप्तस्तस्थौ पृथगुपाश्रये । अन्यदा च विन्ध्यनामा मुनिपुंगवः कर्मप्रवाद विधानेऽष्टमपूर्वे कर्मस्वरूपमेवं प्ररूपयति । यथाहि किञ्चित् कर्म बद्धमात्र एव शुष्ककुड्यापतितचूर्णमुष्टिवदेव जीवात् विमुच्यते । किञ्चिच्च स्पृष्टमात्रंलेपकुड्योपरि पतितचूर्णमुष्टिं तव कालान्तरेण विघटते । किञ्चिच्च बद्धस्पृष्टनिकाचितबद्धकः चिरकालेन स्वपदेऽभ्यासमात्रं तत्र विरेच वेदनात् विमुच्यते जीवतः, एतच्च समाकर्ण्य गोष्ठामाहिलेन प्रोक्तं यथा कञ्चुकिनं नरं प्रस्तवतः कञ्चुक समन्वेति एव स्पृष्टमात्रं कर्म जीवं समन्वेति जीवेन सहाभिभावमापन्नं तु कर्म न विमुच्यतेऽविभाग गतत्वात् सर्वेऽपि तत् तन्मतमयमीमांसः प्रसज्यते । इति तेनोक्ते विन्ध्य प्राह—मया यथागुरुवदनारविन्दादाकर्णितं तथा व्याख्यातमिति विन्ध्येनोक्ते स प्राह—गुरुः किं वेत्ति ? इति तेनोक्ते सति विन्ध्यः प्रपच्छ श्रीदुर्बलिकापुष्पमित्रगुरोः पार्श्वे गुरुभिस्तथैव तथा प्रोक्ते तद् सत्यं गुरुभिरित्यमेव व्याख्यातत्वात् । यत्तु गोष्ठामाहिलेनोक्तमविभागगतत्वात् कर्मणो जीवस्य मुक्तिर्न भवति तदयुक्तं यतोऽन्यान्यपिरः सर्वात्मनापि चाहिता भावित। प्रतिकर्मस्वरूपतत्त्वतो विमुच्यते एवं जीवोऽपि

कर्मस्कंधेभ्यः । इति गुरुनिगदितं युक्तिप्रकारं निशम्य विंध्यो गोष्ठामाहिलपुरतो निवेदयामास। तस्मिन्निवेदिते स प्रतियुक्त्युत्पत्तेरभावात् तूष्णिं स्थितः। अन्यदा च नवमपूर्वे साधूनां प्रत्याख्यानं वर्ण्यते यथा 'पाणाइवायं पच्चक्खामि जावज्जीवाए' इत्यादि तदा च गोष्ठामाहिलेनोक्तं नैतदेवं युक्तम्। यतः प्रत्याख्यानमनियतावधितयैव कृतं सांप्रतं, नियतावधौ तु तस्मिन् विधीयमानेऽवधौ पूर्णे तु वयमेतत् प्रत्याख्यातं वस्तु सेविष्याम इत्याशंसादोषसंभवात्। इति तेनोक्ते विंध्येनोदितं नैवदेव गुरुभिरित्थमकथनात् इति विंध्येनोक्तः स श्रीदुर्बलिकापुष्पगुरुभिः सह वादकृते ढुढौके। तदा च गोष्ठामाहिलः स्वपक्षं स्थापयन् गुरुभिरूचे 'भो! आर्य! नहि साधूनां सविधिप्रत्याख्याने विधीयमानेऽवधौ पूर्णे वयमेतत् प्रत्याख्यातं वस्तु सेविष्याम इत्याशंसा लेशतोऽपि वेविद्यते। किंतु मृतानाममृताशनादिभवे मा भूत् प्राणातिपातनिरत्यादिप्रत्याख्यानभंग इति सपरिमाणतया तदुकरण' मिति गुरुणा निगदितेऽपि गोष्ठामाहिलस्तन्न श्रद्धे। अश्रद्दधाने च तस्मिन् श्रीसंघेन शासनसुरी शरीरोत्सर्गेण समाकृष्टा तत्रस्थाने समेता सती कथितवती श्रीसंघं प्रति किं निमित्तं निर्मिता मत्स्मृतिस्तत्रभवता श्रीसंघेनेति तयोक्तः श्रीसंघः समादिशत्तां यद् गच्छ त्वं तीर्थपतिसमीपे पृच्छ चैतद् यद्दुर्बलिकापुष्पमित्राचार्यप्रभृतिकः श्रीसंघो वक्ति तत् सत्यमुत गोष्ठामाहिलोक्तं सत्यमिति श्रीसंघोक्ता श्रीशासनदेवता प्रोक्तवती—यदि श्रीसंघेन मदागमं यावच्चनूत्सर्गः क्रियते तदा तत्साहाय्यान्मम तत्र गमनसामर्थ्यं संभवेदिति तयोक्तः श्रीसंघस्तनूत्सर्गे तस्थौ। तस्मिंश्च तत्रस्थिते सति सा गता श्रीतीर्थपतिसमीपे। तत्र च प्रष्टव्यं पृष्ट्वा प्रत्यायाता श्रीसंघसमीपे प्रोक्तवती च यद् भगवताऽऽदिष्टं श्रीसंघः

रत्नकंबलं वितीर्णम् । अन्यदा च तस्मिन् बहिर्गते किमेतेन मूर्च्छानिदानेन बहुमूल्येन वस्तुनेति विचिन्त्य तत् पाटयित्वा दत्तं
यतीनाम् । एतच्च स विदित्वा चेतसि कषायितः । अन्यदा च श्रीगुरुभिर्जिनकल्पवर्णने विहिते सति शिवभूतिना विज्ञप्तं
'भगवन् ! किमयं वस्त्रपात्रप्रभृतिको विविधोपधिर्ध्रियते जिनकल्प एव किं न क्रियते त्यक्तनिश्शेषोपधिपरिग्रहः ? ।' इति
तेनोदिते श्रीगुरुभिरुक्तं 'संप्रति समयसंहननादिहान्या स कर्तुमशक्यत' इति श्रीगुरुभिरुक्ते तेनोक्तं 'सत्त्ववतां किं
करिष्यति कालः ? अहं करिष्ये जिनकल्प' मित्युदीर्य विहाय वस्त्रप्रभृतिकं सकलोपधिं निरगान्नग्नतया बहिरेकाकी । तदनु
तद्भगिन्यपि तत्प्रेम्णा तथैव निरगात् । अथ च सा तथाविधरूपा सती प्रविष्टा पणांगनासदने भिक्षाहेतवे । तया च तां
तथाविधरूपां निरीक्ष्य शाटिकां परिधापिता सा । अत एव तत्संतानजाताभिर्यतिनीभिरद्यापि वसनपरिधानं विधीयते ।
अथ च शिवभूतिना कौडिन्यकोट्टवीराभिधानौ द्वौ विनेयौ प्रव्राजितौ । ताभ्यां च बहवो विनेयाः प्रव्राजिताः । एवं शिष्य-
प्रशिष्यपरंपरया वृत्तिमगमद् बोटिकमतम् । इत्युक्ता देशप्रभूतविसंवादिनिह्नववक्तव्यता । एषां च देशबहुविसंवादिनिह्नवानां
यथाच्छन्दसां च यद् वर्जनं क्रियते स तृतीयः श्रद्धानभेदो विज्ञेयः ॥ ३ ॥

अथ कुदृष्टिवर्जनस्वरूपतुरीयश्रद्धानभेदः किंचिदुच्यते । तत्र सम्यग्ज्ञानाभावेन कुत्सितदृष्टिर्दर्शनं येषां ते कुदृष्टयः अनंत-
धर्मात्मके वस्तुनि प्रमाणसिद्धे सत्यपि स्वाभिप्रेतैकैकधर्ममंतरेण तदितरधर्मनिराकरणबद्धकक्षाः स्वाभिप्रेतैकांशस्थापन-
दक्षास्ते च यावतो नयास्तावन्मिता विज्ञेयाः । यदुक्तं–'जावइया वयणपहा, तावइया चेव हुंति नयवाया । जावइ-

सम्यग्दर्शनादिसद्गुणगणेच्छुभिर्भव्यप्राणिभिः सर्वदा सर्वप्रकारेण वर्जनीय एव कुदृष्टिसंसर्गः सुदूरीकृतापवर्गः । इत्युक्त-स्तुरीयः श्रद्धानभेदः तदुक्तौ च प्रपंचितं किंचित् श्रद्धानचतुष्कस्वरूपम् ॥

॥ इति श्रीमत्तपागच्छालंकारहारभट्टारक–घटाकोटीरश्रीसोमजयसूरीशशिष्यशिरोमणि–श्रीइंद्रनंदिसूरिराजविनेयाणु-सिद्धांतसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरपर्याये श्रीऋषभदेवदेशनाभिधानायां तृतीयलहर्यां ज्ञानश्रद्धानचतुष्कस्वरूपवर्णनं नामा प्रथमस्तरंगः समाप्तः ॥

र्णांगीविरचनयावज्जिनकरबीजपूरनालिकेरादिमोचनप्रभृतिकमंगपूजायामेवांतर्भवति तथा धूपोत्क्षेपसुगंधवासप्रक्षेपाद्यपि च ॥ १ ॥ अग्रपूजा तु नैवेद्यढौकनादिभिः संभवेत्, आदिग्रहणात् पुष्पप्रकरपुष्पगृहरचनजललवणारात्रिकोत्तारणप्रदीपकरणगीत-नृत्यातोद्यनिनादप्रभृतयोऽपि पूजाभेदा अग्रपूजायामेव संग्रहीता अवसेयाः ॥ २ ॥ भावपूजा तु भगवत्सद्भूतगुणोत्कीर्त्तनरूप-नमस्कारस्तुतिस्तोत्रादिभणनतो विज्ञेया अथवा श्रीजिनवचनानुसारेण सम्यग्यतिजनसमुचितक्रियाकलापपरिशीलनतो भाव-पूजा संजायते । यदुक्तं 'भावच्चणमुग्गविहारया य दव्वच्चणं तु जिणपूजा' इति वचनात् ॥ ३ ॥ इत्युक्तास्त्रयो भेदा भगवत्पूजायाः । अथवा गंधमाल्याधिवासधूपप्रदीपैः श्रीमदर्हत्समर्हणा पंचप्रकारा प्रोक्ता श्रीमदार्हतागमे अधिवासस्तु गंधमाल्यादिभिः संस्कारविशेषो ज्ञेयः । केचित्तु 'तहियं पंचुवयारा, कुसुमक्खयगंधधूवदीवेहिं ।' इति वचनात् कुसुमा-क्षतगंधधूपप्रदीपैः पूजा पंचभेदा वदंति । अथवा पुष्पाक्षतगंधधूपप्रदीपनैवेद्यफलजलैः श्रीमदर्हत्समर्हणाऽष्टभेदावसेया यदुक्तं 'कुसुम १ क्खय २ गंध ३ पईव ४ धूव ५ नेवज्ज ६ फल ७ जलेहिं ८ पुणो ॥ अट्ठविह कम्ममहणी, अट्ठुवयारा हवइ पूआ ॥ १ ॥ इति अथवा 'न्हवणविलेवणअंगम्मि, १ वच्छजुअलं २ च वासपूजा ३ य । पुप्फारुहणं ४ मल्ला-रुहणं ५ तह वन्नयारुहणं ६ । ॥ १ ॥ चुन्नारुहणं ७ जिणपुंग-वाणं आहरणरोहणं ८ चेव । पुप्फगिहं ९ पुप्फपगरो १० आरत्तियमंगलपईवो दीवो ११ । धुवुक्खेवो, १२ नेवज्जं १३ सुहफलाण ढोअणयं १४ । गीअं १५ नट्टं १६ वज्जं, १७ पूआभेया इमे सत्तर ॥ २ ॥' इत्येतद्गाथोक्तपूजाप्रकारैः सप्तदशभेदा भगवद-र्चावसेया । अथवा स्नानं विलेपनं विभूषणपुष्पवासेत्यादिवृत्तोदितैकविंशतिभेदैरेकविंशतिप्रकारा विज्ञेया । एवमनेकप्रकार-

१० वुम्मारि, ११ ईई १२ अइवुट्ठि १३ अणभिवुट्ठीओ १४। हुंति न जियवहुतरणी, पसरइ भामंडलुज्जोओ १५ ॥ ४ ॥ सुरइआ णिगुवीसा, मणिमयसीहासणं सपयवीढं १६ । छत्तत्तय १७ इंदद्धय १८ सियचामर १९ धम्मचक्काइं २० ॥ ५ ॥ सह जगगुरुणा गयण-ट्ठियाइं पंचवि इमाइं विअरंति । पाउब्भवइ असोयो चिट्ठइ जत्थप्पहू तत्थ २१ ॥ ६ ॥ चउमुहमुत्तिचउक्कं २२ मणिकंचणताररइयसालतिगं २३ । नवकणय-पंकयाइं २४ अहोमुहा कंटया हुंति ७ ॥ २५ ॥ निच्चमवट्ठियमित्ता, पहुणो चिट्ठंति केसरोमनहा २६ । इंदिअअत्था पंचवि २७ मणोरमा हुंति छप्पि रिऊ ॥ २८ ॥ ८ ॥ गंधोदयस्स वुट्ठी २९, वुट्ठी कुसुमाण पंचवन्नाणं ३० । दिंति पयाहिण सउणा ३१, पहुणो पवणो वि अणुकूलो ३२ ॥ ९ ॥ पणमंति दुमा ३३ वज्जंति, दुंदुहीओ गहीरघोसाओ ३४ । चउतीसाइसयाणं, सव्वजिणिंदाण हुंति इमा ॥ १० ॥' इत्युक्ताश्चतुस्त्रिंशदतिशयाः । अथ प्रातिहार्याष्टकगाथा लिख्यते, तथाहि–' कंकेल्लि कुसुमवुट्ठी, २ देवज्झुणि ३ चामरा ४ ऽऽसणाइं च ५ । भामंडल ६ भेरि ७ छत्तं ८, जयंति जिणपाडिहेराइं ॥ १ ॥' अथैतेषां निश्शेष-श्रीगुणरत्नरत्नाकराणां श्रीमत्तीर्थंकराणां पञ्चत्रिंशद्वचनगुणा नामोच्चारमात्रेण निगद्यन्ते तथाहि संस्कारवत्त्वम् १ औदात्यम् २ उपचारपरीतत्त्वं ३ जलधरगंभीरघोषत्वं ४ प्रतिशब्दविधायिता ५ दक्षिणता ६ उपनीतरागता ७ महार्थता ८ अव्याहतता ९ शिष्टता १० संदेहानुत्पत्ति ११ निराकृतेतरोत्तरत्वं १२ हृदयंगमिता १३ परस्परसापेक्षत्वं १४ प्रस्तावोचितत्वं १५ तत्त्व-निष्ठत्वम् १६ अप्रकीर्णप्रसृतत्वम् १७ अनात्मश्लाघान्यनिन्दित्वम् १८ आदेयत्वम् १९ अविच्छिन्नमधुरत्वम् २० प्रशस्यत्वम्

२१ अपरमर्मवेधित्वम् २२ उदारत्वम् २३ धर्मार्थप्रतिबद्धत्वं २४ कारकादिविपर्यासाभावो २५ विभ्रममुक्तिविरहितत्वं २६ चित्रकृत्त्वम् २७ अद्भुतता २८ अनतिविलम्बिता २९ अनेकजातिविचित्रत्वम् ३० आरोपितविशेषत्वं ३१ सत्त्वप्रधानत्वं ३२ वर्णपदवाक्यविविक्तत्वम् ३३ अव्युच्छित्तिः ३४ अखेदित्वं ३५ चेति पंचत्रिंशद् वचनगुणास्तेषां तीर्थपतीनामशेषाः । तथैव तेषां मध्यमजनसमर्थितविपरीतपक्षस्य श्रीमज्जिनवचनगुरूणामज्ञानकोपाद्या अष्टादशदोषा नाविर्भवंति येनोक्तवचनवत्तुनिश्चितये यदुक्तं श्रीप्रवचनसारोद्धारे 'अन्नाण १ कोह २ मय माण, ४ लोभ ५ माया ६ रई अ ७ अरई अ ८ । निद्दा ९ सोय १०, अलीअवयण ११ चोरिआ १२ मच्छर १३ भया १४ य ॥१॥ पाणिवह १५ पेम १६ कीडा, १७ पसंग हासा य १८ जस्स इअ दोसा । अट्ठारस वि पणट्ठा, नमामि देवाहिदेवं तं ॥२॥' इत्युक्तं किंचिद्देवस्वरूपम् ।

अथ सिद्धस्वरूपं प्ररूप्यते । तथाहि-तीर्थंकरसिद्धा १ अतीर्थंकरसिद्ध २ तीर्थसिद्धा ३ अतीर्थसिद्ध ४ स्वलिंगसिद्ध ५ परलिंगसिद्ध ६ गृहिलिंगसिद्ध ७ स्त्रीलिंगसिद्ध ८ नरलिंगसिद्ध ९ नपुंसकलिंगसिद्ध १० प्रत्येकबुद्धसिद्धे ११ एकसिद्धा १२ अनेकसिद्ध १३ स्वयंबुद्ध १४ बुद्धबोधित १५ भेदात् पंचदशविधाः सिद्धाः । तेषु ये तीर्थपतिपदवीमनुभूय सिद्धिपदमुपगतास्ते तीर्थंकरसिद्धाः १ तदन्ये पुनरतीर्थंकरसिद्धाः २ अथ च तीर्थे विद्यमाने सति ये सिद्धास्ते तीर्थसिद्धाः ३ तीर्थे त्वनुत्पन्नेऽपि ये जातिस्मरणादिना सिद्धास्तेऽतीर्थसिद्धा ज्ञेयाः, तीर्थानुत्पत्तौ वा ये मरुदेवीस्वामिन्यादिवत् सिद्धिसौधमधिरूढास्ते चाप्यतीर्थसिद्धतया विज्ञेयाः ४ स्वलिंगसिद्ध ५ परलिंगसिद्ध ६ गृहिलिंगसिद्ध ७ स्त्रीलिंगसिद्ध ८ पुरुषलिंगसिद्ध ९ नपुंसकलिंगसिद्धास्तु १० प्रसिद्धा एव । प्रत्येकबुद्धसिद्धास्तु नमिनृपत्यादिवत् किंचनैक निमित्तमासाद्य ये प्रतिबुद्धास्ते

समवसेयाः ११ एकसिद्धास्तु ये एकस्मिन् समये एकतयैव सिद्धाः १२ अनेकसिद्धास्तु तद्विपर्ययादध्यवसेयाः १३ स्वयमात्मनैव वैराग्यहेतुबाह्यनिमित्तमनपेक्ष्य जातिस्मरणादिना ये प्रतिबुद्धाः संतः सिद्धास्ते स्वयंबुद्धसिद्धा अध्यवसेयाः १४ बुद्धैर्गुरुभिर्बोधिताः संतो ये सिद्धास्ते बुद्धबोधितसिद्धा अधिगंतव्याः १५ एतेषां च सिद्धानां क्षेत्रलिंगवेदावगाहनासंस्थानादीनि द्वाराणि व्याख्यायंते । तत्र क्षेत्रद्वारे पंचचत्वारिंशद्योजनलक्षमानं मनुष्यक्षेत्रमेव सिद्धतापर्यायोत्पत्तिस्थानं निगदितं श्रीमदार्हतागमे । तत्राप्येकस्मिन् समये ऊर्ध्वलोके मेरुचूलिकादौ चत्वारः सिध्यंति, जलधौ च द्वौ, जले च त्रयः, तिर्यग्लोके तु नरक्षेत्ररूपे शतमष्टोत्तरम्, अधोलोके त्वधोलौकिकग्रामरूपे 'चतुरुड्ढलोए य दुवे समुद्दे, तओ जले वीसमहे तहेवे'ति वचनात् श्रीउत्तराध्ययनाभिप्रायेण विंशतिः सिध्यंति, 'चत्तारि उड्ढलोए, दुवे समुद्दे तओ जले चेव । बावीसमहोलोए, तिरिए अट्ठुत्तरसयं चे'ति वचनात् प्रवचनसारोद्धारानुसारेण द्वाविंशतिः, लिंगद्वारे त्वेकस्मिन् समये गृहिलिंगे श्रुति( ४ )मिताः सिध्यंति, अन्यलिंगे तु दशप्रमिताः, स्वलिंगे पुनरष्टोत्तरशतमिताः । वेदद्वारे तु विंशतिः स्त्रीवेदे, नपुंसकवेदे तु दश, नरवेदे त्वष्टोत्तरशतम् । अवगाहनाद्वारे तु अवगाहना त्रेधा–उत्कृष्टा १ मध्यमा २ जघन्या ३ च । तासु च पंचशतधनुर्मिता उत्कृष्टावगाहना । अस्यां चोत्कृष्टावगाहनायामेकसमये द्वावेव सिद्धिसौधमधिगच्छतः । जघन्या तु द्विहस्तमिता प्रणीता श्रीमदर्हन्मते । एतस्या च जघन्यावगाहनायामेसकमये चत्वारः सिध्यंति, उक्तस्वरूपोत्कृष्टजघन्यांतरालवर्त्तिनी मध्यमा । अस्यां चोत्कर्षत एकसमये अष्टोत्तरशतं सिध्यति । इयं चरिमभवावगाहना परिज्ञेया सिद्धिगतानां पुनरियमेव त्रिभागहीना त्रिधाप्यवसेया । यदुक्तं षट्त्रिंशत्तमाध्ययने 'उस्सेहो जस्स जो होइ,

भवम्मि चरमम्मि सो तिभागहीणो तत्तो अ सिद्धाणोगाहणाभवे।' संस्थानद्वारे तु सिद्धानां प्रागुभव चरमसमये शीघ्ररेचकनरूप पर्यन्तसिद्धनिश्चलोपानपार्श्वस्थितमभूत्कि भवति संस्थानं तदुसंस्थानवशेन ते तिष्ठन्ति सर्वं यदम्। यदुक्तं श्रीप्रवचनसारोद्धारे 'जं संठाणं तु इह भवं चयतस्स चरमसमयम्मि। आसी पएसघणं, तं संठाणं तहिं तस्स ॥ १ ॥ उत्ताणओ व पासिल्लओ निसन्नओ चेव जो। जह कुणइ कालं, सो तह उववज्जए सिद्धो ॥ २ ॥' अवस्थितिद्वारे तु ईषत्प्राग्भाराभिधाना या उत्तानातपत्रसंस्थानसंस्थिता अर्जुनकनकमय्याः सिद्धिशिलाया उपरि योजनस्य उपरितनक्रोशस्य षष्ठे भागे सिद्धानामवस्थितिः संभवेत्। एते च सिद्धा एकस्मिन् समये द्वात्रिंशन्मिताः सिद्धयन्ति सहस्रमासयुगनन्तरसमयेऽपि तावन्मिता एव सिद्धयन्ति अनुक्रमतो एवमष्टौ समयान् यावदनंतरसिद्धयन्ति द्वात्रिंशत्प्रमितानां सिद्धयत्सु नवसमयेऽपि चेत् द्वात्रिंशन्मिताः सिद्धयंति तदा समयांतरिता एव। एवमष्टचत्वारिंशत्प्रमितानां तु सप्तसमयान् यावदनंतरसिद्धयन्ति सिद्धिगमनम्। षष्टिसंख्यानां तु षट्समयान् यावत्। द्विसप्ततिमितानां तु पंच समयान् यावत्। चतुरशीतिसंख्यकानां तु चतुःसमयान् यावत्। षण्णवति प्रमितानां तु त्रीन् समयान् यावत्। द्विसमधिकशतमितानां तु द्वौ समयौ मर्यादीकृतम्। अष्टोत्तरशतसंख्यास्तु एकस्मिन् समये सिद्धिमिताः अथ चेत् पुनरपि तावन्मिता एव सिद्धयंति तदा समयांतरिता एव न पुनरनंतरिता इति निर्धारितं सिद्धिगतसिद्धस्वरूपम्।

अथ चैत्यस्वरूपं किंचित् प्रदर्श्यते, यत्र चैत्यशब्देन शाश्वताशाश्वतरूपाः श्रीमदर्हत्प्रतिबिंबको विज्ञेयाः। तत्र नंदीश्वरद्वीपादिस्थितप्रासादेषु चातुर्निकायिकनाकिभवनस्थितसिद्धायतनेषु च श्रीऋषभचन्द्राननवारिषेणवर्द्धमाननामानः भुवि(४)मिताः

श्रीमदर्हत्प्रतिमितयः समवसेयाः । अशाश्वतप्रतिमास्तु श्रीअष्टापदश्रीशत्रुञ्जयप्रमृतितीर्थेषु श्रीभरतसगरादिसार्वभौमनिर्मापिताः परिज्ञेयाः । श्रुत पुनरंगप्रविष्टानंगप्रविष्टभेदेन द्विप्रकार परिकीर्त्तितम् । तत्रांगप्रविष्टमाचारांगादि द्वादशविधं विज्ञेयम् । अनंगप्रविष्टं पुनरावश्यकाद्यनेकविधमवगतव्यम् । धर्मस्तु चारित्रधर्मरूप एकादिदशातभेदः समवसेयः । तत्र धर्मस्यैकविधत्वमनुकपया परिज्ञेय १ द्विविधत्वं तु तस्य सम्यग्ज्ञानक्रियाभ्यां २ त्रैविध्य तु तस्य ज्ञानदर्शनचारित्रैः ३ चातुर्विध्यं तु दानशीलतपोभावभेदैः ४ पचविधत्व तु पंचभिर्महाव्रतैः ५ षड्विधत्वं तु षड्विधजीवनिकायरक्षाकरणतः ६ सप्तप्रकारत्वं तु सप्तनयानुसारिचरणकरणाराधनतः ७ अष्टविधत्वं तु वसु(८)मितप्रवचनजननीसमाराधनतः ८ नवविधत्वं तु नवतत्त्वनिर्णयपुरस्सरचरिताचरणतः ९ दशविधत्वं तु क्षांतिमृदुतार्जवतामुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मभेदतः समवगतव्यम् १० । उक्तं च ' श्रीधर्मो दययैकधा निजगदे, ज्ञानक्रियाभ्यां द्विधा, ज्ञानाद्यैस्त्रिविधश्चतुर्विधतया, ख्यातो व्रतैः पंचधा । षोढा कायसुरक्षणेन नयतः, सप्ताष्टधा मातृभि-स्तत्त्वैः स्यान्नवधा तथा दशविधः, क्षांत्यादिभिः सद्गुणैः ॥ १ ॥ ' इति । एतत् श्रीमच्चारित्रधर्मस्याधारभूता जिनकल्पिकस्थविरकल्पिकपरिहारविशुद्धिकप्रतिमाप्रपन्नक्षीराश्रवमध्वाश्रवघृताश्रवसंभिन्नश्रोतःकोष्ठबुद्धिजंघाचारणविद्याचारणवैक्रियलब्धिसंपन्नपदानुसारिप्रज्ञाभ्युत्पन्नादिभेदैरनेकविधाः साधवो बोधव्याः । आचार्यास्तु पंचेंद्रियसंवरणनवविधब्रह्मगुप्तिधरणचतुर्विधकषायनिर्मुक्तता-पंचमहाव्रतयुक्तता-पंचधाचारनिरतिचारपरिपालननिरतता-पंचसमितिसमितता-त्रिगुप्तिगुप्ततारूपषट्त्रिंशद्गुणगरिष्ठाः परिज्ञेयाः । एवमन्या अपि षट्त्रिंशिकाः श्रीगुरुगुणषट्त्रिंशिकाप्रकरणाद् विभावनीयाः । उपाध्यायास्त्वधीतप्रवर्त्तमानसकलसूत्रार्थाः सूरिपदस्थापनयोग्या-

स्वच्छसर्पिर्गुडादिभाजनस्थापनादिः परिहेयाः। प्रवचनवर्णने तु प्रागुक्तस्वरूपे एव विधेये। एतेषु च पञ्चसु स्थानेषु भक्ति १ बहुमान २ वर्णवादना ३ अवर्णवादनाशना ४ आशातनापरिहाररूपः ५ पञ्चविधो विनयः कर्तव्यः। तत्र भक्तिरर्हदादीनां मनःसिकरणादिपरा बाह्यप्रतिपत्तिरूपा परिज्ञेया १ बहुमानस्तु तेष्वेव मानसिकनिर्भरप्रतिरूपः परिज्ञेयः २ तथामेवार्हत् प्रभृतीनामधिकगुणकीर्तनादिभिर्यथार्थवर्णनरूपः ३ तेषामेव एवोत्तानामवर्णवादोत्तेजनप्रभृतिरूपावर्णवादनाशनमप्यवसेयम् ४ आशातनापरिहारस्तु पिशुनसेवनादिना विधेयः। तत्राशातना जघन्य १ मध्यमो २ त्कृष्ट ३ भेदेन श्रीमदर्हतो त्रिप्रकाराः परिहेयाः। तासु जघन्यापि श्रीमदर्हदाशातनाऽनन्तसंसारपरिवर्तननिदानं संपनीपद्यते किं पुनर्मध्यमोत्कृष्टाशातनानां दुष्टविपाकस्वरूपं कथनीयम्। तत्र तीर्थंकराणामेवमाशातना यथा सर्वोऽपि स्थूलकोऽपि तीर्थपतिभिर्गृहवासस्थानप्रभृतिकाऽपेक्षिता देशना निर्मिता यदि च गृहवासो न भेदोऽस्ति किं निमित्तं ते गृहवासे वसंति स्म किमिति भोगांश्च भुक्तवंत इति। सिद्धाशातना तु सिद्धा न संतीत्यादिकथनेन तत्स्वरूपस्य वैपरीत्यप्रकाशनादिना वा। चैत्याशातना तु जघन्या दश भेदा उत्कर्षस्तु चतुरशीतिप्रकारा। तत्र तंबोलभक्षण १ पान २ भोजनविधान ३ गृहवासेवनो ४ पानत्परिभोग ५ निष्ठीव नोत्सर्जन ६ स्वाप ७ प्रस्रवणो ८ चारकरण ९–द्यूतखेलन १० रूपा जघन्याशातना दशविधा विधेया श्रीजिनमंदिरमध्ये श्रीमदर्हत्प्रतिमीतीर्नां पुरतः। उक्तं च श्रीमत्प्रवचनसारोद्धारे 'तंबोल १ पाण २ भोयण ३ पाणह ४ थीभोग ५ सुयण ६ निट्ठवणे ७। मुत्त ८ चारं ९ जूयं, १० वज्जे जिणमंदिरस्संतो ॥ १ ॥' इत्युक्ता जघन्याशातना। अथोत्कर्षचतुरशीतिराशातनाः पूर्वपरिभाषितक्रमेण लिख्यंते यथाहि 'खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५

तंबोल ६ सुग्गालयं ७, गाली ८ कंगुलिया ९ सरीरधुवणं १० केसे ११ नहे १२ लोहियं १३। भत्तोसं १४
तय १५ पित्त १६ वंत १७ दसणे १८, विस्सामणं १९ दामणं, २० दंत २१ त्थी २२ नह २३ गंड २४
नासिअ २५ सिरो २६, सोत २७ च्छवीणं मलं २८ ॥ १ ॥ मंतु २९ म्मीलण ३० लेक्खयं ३१ विभजणं,
३२ भंडार ३३ दुट्ठासण, ३४ छाणी ३५ कप्पड ३६ दालि ३७ पप्पड ३८ वडी ३९ विस्सारणं नासणं ४०।
अक्कंदं ४१ विकहं ४२ सरच्छघडणं ४३, तेरिच्छसंठावणं ४४, अग्गीसेवण ४५ रंधणं ४६ परिक्खणं ४७
निस्सीहिआभंजणं ४८ ॥ २ ॥ छत्तो ४९ वाणह ५० सत्थ ५१ चामर ५२ मणोणेगत्त ५३ मब्भंगणं ५४
सच्चित्ताणमचाय ५५ चायणाजिए ५६, दिट्ठीइ नो अंजली ५७ ॥ साडेगुत्तरसंगभंग ५८ मउडं ५९, मउलिं
६० सिरोसेहरं ६१, हुड्डा ६२ जिंडुहगिड्डियाइरमणं ६३, जोहार ६४ भंडक्कियं ६५ ॥ ३ ॥ रेकारं ६६
धरणं ६७ रणं ६८ विवरणं, वालाण ६९ पल्हत्थिअं ७०, पाओ ७१ पायपसारणं ७२ पुडपडी ७३, पंकं
७४ रओ ७५ मेहुणं ७६। जूआ ७७ जेमण ७८ जुज्झ ७९ विज्ज ८० वणिजं ८१, सेज्जं ८२ जलं ८३ मज्जणं
८४ एमाईयमवज्जकज्जमुज्जुओ वज्जे जिणिंदालए ॥ ४ ॥' अथैतासां विषमपदव्याख्या कला धनुर्वेदादिकाः ४,
कुललयं गंडूषं ५, कगुलियत्ति लघुवृहन्नीतिविधानं ९, भत्तोसं सुखभक्षिका १४, त्वचं व्रणादिसंबंधिनीं १५, पित्तं च
धातुविशेषं भेषजादिना जिनसदने न पातयेत् १६, दामनमजादीनां वर्जयेत् २०, दंताऽक्षिनखनासिकासिरःश्रोत्रछवीनां
मलं जिनालये न त्यजेत् शरीरशेषास्तु तदवयवाः २८, मंत्रं भूतादिनिग्रहलक्षणं राजादिकार्यालोचनं वा २९, मीलनं क्वापि

एवं जघन्यतो दश चोत्कर्षतस्तु
लादौ प्रणालादेस्तद्ग्रहणं वा ८३, मज्जनं स्नान च जिनभवनांतस्त्यजेत् ८४ ॥ मध्यमतस्त्वाशातनाश्चत्वारिंशन्मिता-
चतुरशीतिराशातनाः श्रीजिनभवनांतर्वर्जनीयाः प्रयत्नतः श्रीमदार्हतमतकोविदैः । बृहद्भाष्ये तु पच-
याः शास्त्रांतरे प्रोच्यंते तास्तु प्रायो जघन्योत्कृष्टाशातनास्वेवांतर्भवतीति पृथग् न निगदिताः । दुप्पणिहाणं
प्रमिता एव ता प्रोक्तास्तथाहि–' जिणभवणम्मि अवण्णा, १ पूआइ अणायरो २ तहा भोगो ३ । पडपुडिअ
४ अणुचिअवित्ती ५ आसायणा पंच ॥ १ ॥ तत्थ अवन्नाऽऽसायणं, पल्हठिअदेवपिट्ठिदाणं च । पूआइ
पयपसारणं दुट्ठासणसेवण जिणओ ॥ २ ॥ जारिसतारिसवेसो, जहा तहा जम्मि तम्मि कालम्मि । नाणाइआण
कुणइ सुन्नो, अणायरासायणा एसा ॥ ३ ॥ भोगो तंबोलाई, कीरंतो जिणगिहे कुणइ वस्सं । दुप्पणिहाणं
आयरस, सायणं तो तमइ वज्जे ॥ ४ ॥ रागेण व दोसेण च, मोहेण व दूसिआ मणोवित्ती । गाली
भन्नइ, जिणुवसए तं न कायव्वं ॥ ५ ॥ घरणरणरुअणविगहा, तिरिबंधणरंधणाइं गिहकिरिआ । सर्वदेवा-
विज्जवणिज्जाइ, वेइएवयणुचिअवित्ती ॥ ६ ॥ इत्येताश्चैताशातनाः प्रयत्नतो वर्जनीयाः । सुकृतार्जनकामुकैर्ये देवा,
विरता अत्यंतविषयासक्ता अपि सुपर्वाणः । सर्वथैव परिवर्जयंति चैत्यविषया आसातनाः यदुक्तं ' देवयहरम्मि इत्युक्ता-
विसयविसविमोहिआ वि न य कयावि । अच्छरसाहि पि समं, हासकिड्डाइं पकुणंति ॥ १ ॥ ' घोषहीनता–योग-
श्चैत्याशातनाः । श्रुताशातनास्तु व्याविद्धता–व्यत्याम्रेडितता–हीनाधिकवर्णोच्चरणपदहीनता–विनयहीनता–घोषहीनता–योग-
हीनतादिभिः समवेत् । श्रुताधिक्षेपतो वा स चैव ' काया वयाऽप्यतेच्चिय, ते चेव पमाय अप्पमाया य । मुक्खहि-

पारिमाणं, कोसाओणीहिं किं कज्ज ॥ १ ॥' इति धर्मस्याशातना तु धर्मो नास्तीत्यादिकथनेन तत्स्वरूपविपर्यय प्ररूपणेन तत्फलं विपरीतं च तस्य त इत्यादिभणनेन वा विधेया । साधूनामाशातना नैवं यथाऽमी न परस्परमपि सदैव स्व एते ईर्ष्यावशविरोधिनमेवैवं तदेते यत्र संवरपाऽपविष्टेषु तथा मंदभाग्निनाऽमी तत एवैते बकवृत्तय इत्यादि वचनस्य नाद्यवसेया । आचार्योपाध्यायाशातनास्तु तदविवेकादिना विधेया यद्वक्त । अपाईहिं भवत्त, मासइ पहइ म पाचि उपचाए । अहिओ छिद्दप्पेही, पगासवाई अणुकूलो ॥ १ ॥' इति मयणा पुरोपदृश्यमानस्वरूपाध्ययविरुद्धमिदमेवा वा वास्तद्विषया विधेया निश्चयेवसंघरूपस्य श्रीप्रवचनस्य पुनराशातना दे तु यथा रत्ना अरण्येऽपि संघाधिपत्वकवेदक मुगालादीनां वद् कोऽपि संघः ? इत्येवमविवेकादिनाऽवसेया । श्रीसम्यग्दर्शनाशातना तु शंकाविचाराद्यवलासस्य रूपविपर्ययप्ररूपणादिना वाऽप्यवसेया । इत्येवमर्हदादिसूपि दशसु स्थानेषु यथोक्तस्वरूपाशातनापवर्जनेन आशातनापरिहार रूपः पंचमो विनयो विधेयः । इत्युक्तं दशविधविनयस्वरूपं किंचित् ।

अथ शुद्धित्रयस्वरूपं किंचित् प्ररूप्यते । तथाहि मनो १ वचन २ तनु ३ विशुद्धता संवनीयपदे सम्यक् सम्यग् दर्शनोद्दीपनकरी । तत्र श्रीमज्जिनवचनसंपर्कमवधुपास्या सत्प्रणिधानेन तद्गुणरिद्धसुरूपसमारापनेन चारमाणं कृतकृत्यं मन्यमानः श्रीमदर्हद्प्रवचनव्यतिरेकेण निखिलमपि विश्वमसारतरं स्वमनसि च मन्यते सम्यग्दर्शनी सा मनःशुद्धिः प्रोच्यते । सा च 'जीवाण गईकम्माण-परिणई पुग्गलाण परिणाम । मोत्तूण जिणं अहवा जिण-मयं च को मासिउं तरइ ॥ १ ॥' इत्यादिमननया स्थिरीकार्या १ वचनशुद्धिस्तु यथार्थस्वविचरणवर्णना तद्गुणवर्णनविधिगुणमरिवभी

गुरुसुचरितसमाराधनतश्च यत् कार्यं न संजायते पूर्वकृतवशतस्तत्र नेतरं हरिहरपुरंदरप्रभृतिदेवविशेषमभिलषामि नाऽन्यं चरकपरिव्राजकादिकलौकिकगुरुं तदुदितसुकृतानुष्ठान वा समाराधयामीत्यादिश्रीसम्यग्दर्शनोद्दीपकवचनजल्पनतः समवसेया २, कायशुद्धिस्तु यः कृपाणादिभिच्छिद्यमानः क्रकचशूचिकादिभिर्भिद्यमानोऽपि यवनयन्त्रादिभिः पीड्यमानोऽपि वह्नितप्ततैल-प्रभृतिभिर्दह्यमानोऽप्यस्मिन् वा महासंकटे पात्यमानोऽपि यो जिनवर्जं देवं न नमति तस्य तनुशुद्धिर्विज्ञेया ३। इत्युक्तं शुद्धित्रितयस्वरूपम्।

अथ यैः श्रीसम्यग्दर्शनं दूष्यते तानि शका १ कांक्षा २ विचिकित्सा ३ परपाखंडिप्रशंसा ४ परपाखडिसंस्तव ५ लक्षणानि पंचदूषणानि श्रीसम्यग्दर्शने परिहरणीयानि। तत्र विदलितरागद्वेषमोहे यथास्थितवस्तुवादिनि शमरसनिमग्नदृष्टि-युग्मे ललनासंगविकलोत्सगे शस्त्रसंबंधवन्ध्यपाणिपयोजद्वैतेऽपि श्रीमद्देवाधिदेवे समारातिसुहृति पंचमहाव्रतधरे श्रीगुरौ च तत्त्वे च तत्प्रणीतेऽस्ति न वास्तीत्यारेकाकरणं शका। सा च द्विधा देशतः सर्वतश्च। तत्र देशतस्तुल्येऽपि जीवत्वे कथमेके भव्या अपरे त्वभव्या इत्यादिका। सर्वतस्तु सर्ववस्तुप्ररूपकः प्राकृतभाषानिबद्धः सिद्धांतोऽयं किं केवलिप्रणीत उत कुशल-मतिना केनापि परिकल्पित इत्यादिका। न पुनरेतश्चिंतयति यद् भावा द्विविधा हेतुग्राह्या अहेतुग्राह्याश्च। तत्र हेतुग्राह्या जीवा-स्तित्वप्रभृतयः। अहेतुग्राह्यास्त्वस्मदाद्यपेक्षया भव्यत्वाभव्यत्वप्रभृतयः, विशेषज्ञानविषयतया तद्धेतुयुक्तीनाम्। तथा सिद्धांतस्य प्राकृतभाषाबंधोऽपि बाललनाद्यनुग्रहहेतुकः। यदुक्त 'बालस्त्रीमंदमूर्खाणां, नृणां चारित्रकांक्षिणाम्। अनुग्रहार्थं सर्वज्ञैः, सिद्धांतः प्राकृतः कृतः॥ १॥' अतो हेतोर्नायं परिपलिपतो दृष्टेष्टाविरुद्धत्वात्॥ १॥ आकांक्षा

वचनोपदेशप्रतिबोधितप्रभूतभव्यजनसमाजः सुकृतकथनलब्धिमानव्यवसेयः २, वादी तु प्रमाणग्रंथनिष्णातमतिर्नृपतिमदस्यपि समासादितपरवादिवृंदजयलक्ष्मीकः कीर्त्यते ३, दिव्यौत्पातिकांतरिक्षाभौमांगस्वरव्यंजनलक्षणपरिज्ञानरूपमष्टांगनिमित्तं प्रवचनोन्नतिनिमित्तं यः प्रयुक्ते स नैमित्तिकः कथ्यते ४, तपस्वी तु विकृष्टैरष्टमादिभिः सांवत्सरिकपर्यंततपोभिरुद्भासयति प्रवचनं ५, जापहोमप्रभृतिसिद्धिप्राप्तप्रभूतविद्यामंत्रैः प्रवचनप्रभावना विधायी विद्यावानभिगद्यते ६, संघादिकार्यप्रसाधकचूर्णाजनयोगसिद्धितः सिद्धोऽभिधीयते, तत्र चूर्णानि सुवर्णसिद्धादिजनकानि स्युः, अंजनानि पुनरदृश्यीकरणनिधिप्रदर्शनप्रयोजनानि, योगास्तु सौभाग्यकरगगनगमनादिप्रसाधकपादलेपप्रभृतयः परिज्ञेया ७, सद्भूतार्थसार्थग्रन्थी जिनप्रवचनवेत्ता तु कविः परिकीर्त्यते ८, अथवाऽतिशेषितर्द्धि १ धर्मकथिक २ वाद्याचार्य ३, नैमित्तिक ४, क्षपक ५, विद्याव ६, नृपति ७, गणसम्मत ८, लक्षणा अष्टौ प्रभावका विज्ञेयास्तेष्वऽतिशेषिताः परेभ्यः परमोत्कर्षं प्रापिता ऋद्धयो जंघाचारणावधिमनःपर्यवप्रभृतयो येन स अतिशेषितर्द्धिः । धर्मकथिकवादिक्षपकनैमित्तिकविद्यावंतस्तु पूर्ववद् व्याख्येयाः । आचार्यस्तु षण्णवत्यऽधिकद्वादशशतमितगुणगरिष्ठः । नृपतिस्तु श्रीमदार्हतमतैकांतभक्तिमान् गणसम्मतस्तु नरेंद्राद्यभीष्टो विज्ञेयः । एवं किञ्चित् प्रकारांतरेणाऽष्टौ प्रभावकाः प्रतिपादिताः । एवं च प्रभावनाविधानाऽशक्ततायां श्रीशत्रुंजयादिमहातीर्थयात्रास्नात्रमहापूजादिमहामहनिर्मितश्रीगुरुवंदनाद्यर्थसन्मुखगमनादिना जनमनोरंजनेन प्रभावना विधेया श्रमणोपासकपुंगवैः । यतिभिस्तु श्रीमदर्हदुपदिष्टविशिष्टस्वक्रियानुष्ठानत इत्युक्तं किञ्चित् प्रभावकाष्टकस्वरूपम् ।

अथ भूषणपंचकस्वरूपं प्रोच्यते; तथाहि—कौशल १ तीर्थसेवा २ भक्ति ३ स्थिरता ४ प्रभावना ५ लक्षणानि श्रीमत्स-

म्यग्दर्शनस्य पंचभूषणानि विवेचयामि। तेषु श्रीजिनप्रवचनविचारचक्रमूर्तिश्रीमदर्हदुपदिष्टविविधक्रियाकलापविषये निपुणता कौशलमुच्यते, तेन हि श्रीमत्सम्यक्त्वं भूष्यते। तीर्यते संसारसमुद्रोऽनेनेति तीर्थं, तद् द्रव्यभावभेदाभ्यां द्विविधम्। तत्र द्रव्यतीर्थं जिनजन्मादिस्थानम्। यदुक्तं 'जम्मं दिक्खा नाण, तित्थयराणं महाणुभावाणं। जत्थ य किर निव्वाण, आगाढं दंसणं होइ॥ १॥' भावतीर्थं तु चतुर्विधः श्रीश्रमणसंघः प्रथमगणधरो वा। तयोरुभयोरपि तीर्थयोः सेवा पर्युपास्तिरूपा विधेया। तत्र द्रव्यतीर्थस्य श्रीशत्रुञ्जयश्रीरैवताचलप्रभृतिकस्य यात्राकरणतः सेवा विधेया। यतस्तद् यात्राकरणं हि महते सुकृताय जायतेति। यत उक्तं 'ते धन्याः कृतिनस्त एव च वशी–भूतत्रिलोकश्रियस्तेषामेव तदेव हंत फलितं, पुण्यैः पुरोपार्जितैः। तेषां जन्म च जीवितं च सफलं, तैरर्जिताः कीर्त्तयः, श्रीनिर्वाण सुखमयो जिनपते–र्यात्राविधिर्यैः कृतः॥ १॥' इति। भावतीर्थस्य तु सेवा संविग्नगीतार्थश्रमणप्रभृतिसंगतिकरणतः कर्तव्या। तथैवैनस्त्रिशत्प्रथमश्रीमन्महावीरात्मकनामधेयश्रीमदुत्तराध्ययनोक्तसंवेगनिर्वेदधर्मश्रद्धागुरुसाधर्मिकशुश्रूषालोचना निन्दागर्हासामायिकचतुर्विंशतिस्तवादिसेवनतो विधेया २। भक्तिश्चास्य विनयरूपा यथोचित जिनप्रतिमाप्रतिपूजनादिना विधिवद् विधातव्या ३। स्थिरता तु सुदृढविश्वाससहितमैत्र्यादिभावनारूपा कर्तव्या ४। प्रभावना तु प्रवचनोन्नतिरूपा एकस्नात्रादि महामहोत्सवतः कर्तव्या ५। इत्युक्तं भूषणपंचकम्।

अथ लक्षणपंचकस्वरूपं निरूप्यते। तथाहि–जैनसिद्धान्तेषु श्रीमत्सम्यग्दर्शनरत्नं लक्ष्यते यावदुपशम १, संवेग २, निर्वेद ३, अनुकम्पा ४, आस्तिक्यरूपाणि ५, पंच चिह्नानि। तेषु महत्यपराधे ताडनादिभिस्तस्य प्रत्यागमनरूपेऽपि कोपानु

त्पत्तिरुपशमः प्रोच्यते । तेन हि चित्तांतर्गतमपि श्रीमत्सम्यग्दर्शनरत्नं लक्ष्यते । ननु श्रेणिककृष्णादीनां विषयतृष्णा क्रोधयोधपराभूतचित्तानां कथं कथमिवोपशमः संभाव्यते। सम्यक्त्वं च तेषु नियमतः क्षायिकमेव वेविद्यते । तत् कथमुपशमरूप लिंग विना लिंगिरूप श्रीमत्सम्यग्दर्शनरत्न जाघटीति ? उच्यते लिंगे सति लिंगी स्यादेव न तु लिंगिनि लिंगमिति नियमोऽधूमस्यापि धूमध्वजस्य दर्शनादिति १, संवेगस्तु निसर्गसुखसंसर्गं श्रीमदपवर्गे प्रत्यभिलाषरूपो भवविरागरूपश्च २, निर्वेदस्तु त्वरितसंसारिकारागारत्यागेच्छारूपः ३, अनुकंपा तु पक्षपातरहितत्वेन दुःखिनि निजांगजप्रभृतौ हिंस्रेभ-व्याघ्रादौ प्राणिवर्गे दयारूपा । सा च द्रव्यभावभेदाभ्यां द्विविधा । तत्राद्या शक्तौ सत्यां दुःखिनो दुःखप्रतीकाररूपा । द्वितीया तु तदशक्तौ सार्द्रचित्ततास्वरूपा ४, आस्तिक्यं तु श्रीजिनोक्ततत्त्वैकांतप्रत्ययस्वरूपं परिज्ञेयं ५, इत्युक्तं किञ्चित् श्रीसम्यग्दर्शने लक्षणं पंचकम् ।

अथ षड्विधयतनास्वरूपं, प्ररूप्यते–तथाहि सौगतशैवप्रभृतीनां परतीर्थिकानां च तथागतगिरीशादीनां तथान्यतीर्थिकपरिगृहीताऽर्हत्प्रतिमितीनां यत् षड्विधव्यवहारवर्जनं सा षड्विधा यतना प्रोच्यते । स चायं वंदन १ नमस्करण २ दाना ३ ऽनुप्रदाना ४ लाप ५ संलाप ६ रूपः । तत्र वदनं करयोजनोत्तमांगप्रणामकुसुमादिसमभ्यर्चनरूपं परिहार्यं परतीर्थिकतद्दैवततद्गृहीतार्हत्प्रतिकृतीनां १ । नमस्कारश्च तद्विषयः परिवर्जनो यो वाचिकः, न केवलं वाचिकः किंतु चित्तप्रसत्तिरूपोऽपि २ । दानं च तद्गुणगौरवप्रकटीकारकमिष्टाशनपानखाद्यादीनां तथा शय्यासंस्तारकप्रभृतीनां तेषां न वितरणीयम् ३ । तदेव पुनर्वितीर्यमाणमनुप्रदानं प्रकीर्त्यते तदपि तेषां वर्जनीयम् ४ । आलापस्तु सस्नेहसंभाषणरूपः कुशलं वा युष्माकं स्वागतं

वदापर्यंति कुप्रावचनिकप्रभृतिकं स गुरुनिग्रहः कीर्यते। फलजलादिविकले कांतारे दुर्भिक्षादौ वा बुभुक्षादिना सीदनं वृत्तिकांतारशब्देनोच्यते। एते च राजाभियोगादयः षडाकारा मंदसत्त्वापेक्षया विज्ञेयाः। यतो महासत्त्वाश्छेदनभेदनादिभिः कदर्थ्यमाना अपि न चलत्येव शुद्धधर्ममार्गतः। इतरेषां तु हीनसत्त्वानामुत्सर्गमार्गाचलनेऽपि षड्भिरेतैराकारैः प्रतिज्ञाभगो न भवेदिति हेतोः श्रीसम्यग्दर्शने षडाकाराः प्ररूपिताः श्रीमत्तीर्थपतिभिः। इत्युक्तं किञ्चिदाकारषट्कस्वरूपम्।

अथ भावनाषट्कस्वरूप किमप्युच्यते। तथाहि भावयेत् सम्यक्त्व चारित्रधर्मस्य मूलभूत १ द्वारभूतं २ प्रतिष्ठानभूतं ३ निधानभूत ४ माधारभूत ५ भाजनभूत च ६। एतेषा चैवं भावनां भावयेत्। श्रीसम्यक्त्व धर्मद्रुमस्य मूलभूतम्। यतः श्रीमद्दर्शनमूले दृढे सति वितरति निर्वृतिस्वरूपमप्रतिरूपं फलं श्रीमच्चरितदैवतपादपः १। तथा भावयेत् श्रीमद्दर्शनं द्वारभूतं यतो दर्शनद्वार विना नैव प्रवेशो भवेज्जातुचिदपि श्रीमदर्हदुपदिष्टविशिष्टसुकृतपत्तने २। तथा भावयेच्च श्रीसम्यक्त्वं प्रतिष्ठानभूत यतो दर्शनपीठे निश्चलतमे सति नंदति यतियत्युपासकसुकृतरूपप्रासादः ३। तथा भावयेच्च श्रीमद्दर्शन मूलोत्तरगुणरूपरत्नानामक्षयनिधानभूत तत्र मुनीनां मूलगुणाः मरजनिभोजनविरमणानि पचमहाव्रतानि, उत्तरगुणास्तु पिंडविशुद्धिप्रभृतयः, यदुक्त 'पिंडस्स जा विसोहि, समिईओ भावणा तवो दुविहो। पडिमा अभिग्गहा वि अ, उत्तरगुणिए वियाणाहि ॥ १ ॥' श्रमणोपासकानां तु मूलगुणाः पंचाऽणुव्रतानि उत्तरगुणास्तु गुणव्रतशिक्षाव्रतप्रभृतयः। एतेषां च मूलोत्तरगुणानां श्रीसम्यक्त्वं निधानभूत भावनीयं यतः श्रीमद्दर्शनं विना तेषां कुत्राऽस्थितिः ४। तथा श्रीसम्यक्त्वं सर्वं सदैव चरितजीवलोकस्याधारभूत भावनीय ५। तथा भाजनभूत च यतो द्वादशांगीविद्यारूपश्रुतसर्वसावद्यपरित्याग-

वरणसज्वलनक्रोधमानमायालोभरूपाः षोडश, तेषु यावज्जीवाऽवस्थायिनो निरयगतिनिबंधनभूताः सम्यग्दर्शनघातिनः सानुमद्राजीप्रस्तरस्तंभगुपिलवंशीमूलकृमिरागसमाना अनंतानुबंधिनश्चत्वारः क्रोधादयो विज्ञेयाः। संवत्सरावधिविहि- तावस्थितयस्तिर्यग्गतिगमनहेतुभूता देशविरतिघातिनो मेदिनीभेदास्थिमेंढकशृंगकर्दमसमा अप्रत्याख्यानाश्चत्वारोऽपि कोप- प्रमृतयः समवसेयाः। श्रुति(४)मितमासावधिनिर्मितस्थितयो नरगतिनिदानभूताः सर्वसंयमघातिनो रेणुराजीदारुस्तमगो मूत्रिकाखंजनसन्निभाः प्रत्याख्यानावरणाश्चत्वारोऽपि रोषप्रमुखाः प्रकीर्तिताः श्रीमत्यार्हतसमये। पक्षावधिकृतावस्थानाः सुपर्वगतिनिमित्तभूता यथाख्यातचरितघातिनः पानीयराजीतिनिशलताऽवालखिकाहरिद्रारागसरूपाः संज्वलनाश्चत्वारः क्रोधादयोऽवसेयाः। एवमेते षोडश कषाया हास्यरत्यरतिशोकभयजुगुप्सावेदत्रिकरूपनोकषायनवकेन समं पंचविंशति- संख्या भवेयुः। योगास्तु सत्य १, सत्येतर २, सत्यामृषा ३, ऽसत्यामृषा ४, मनोयोगस्तावन्मितभेदवचनयोगो, वैक्रिया ९, हारकौ १० दारिक ११, वैक्रियमिश्रा १२, हारकमिश्रौ १३, दारिकमिश्र १४, केवलकार्मणयोग १५ रूपाः पचदश विशदविद्भिरुपदिष्टाः। एतेषु सत्यादीनां स्वरूपमिमाभिः श्रीमदागमेयगाथाभिरवसेयं तथाहि 'जणवय १, सम्मय २, ठवणा ३, नामे ४, रूवे ५, पडुच्चसच्चे अ ६। ववहार ७, भाव ८, जोगे ९, दसमे उवम्मण १०, सच्चेय ॥ १ ॥' इति दशधा सत्यम्। एतेषां च किञ्चिद् विवरणम्, कुंकुणादिषु पयः पिच्च नीरमुदकमित्यादि जनपदसत्यं १, कुमुदादीनां सत्यपि पंकजत्वे लोकस्याऽरविंदमेव पंकजमित्यादि सम्मतसत्यं २, लेपोपलमयादिप्रतिमितिष्वऽर्हदादीनां स्थापना स्थापनासत्यं कीर्त्यते ३, कुलमवर्द्धयन्नपि कुलवर्द्धन इत्यादि नामसत्यं ४, लिंगमात्रधार्यपि यद् व्रतीत्युच्यते

ऋजूपसत्य ५, कनीनिकामाश्रित्याऽनामिकाया दीर्घत्वमनामिकामाश्रित्य कनिष्ठाया ह्रस्वत्वमित्यादि प्रतीत्यसत्य ६, तृणादिषु दह्यमानेषु शाखुमान् दह्यते इत्यादि यद् भाष्यते तद् व्यवहारसत्यं ७, सत्यपि वर्णपंचकसंभवे शुक्लवर्णस्योत्कटतया शुक्ला बलाकेति भावसत्य ८, दंडयोगाद्दंडीत्यादि योगसत्य ९, पारावारसदृशं तडाग इत्याद्यौपम्यसत्यम् १०, इत्युक्त दशधा सत्यम्, असत्यमपि दशधैव पूर्वसूरिविरचितगाथयैव लिख्यते। तथाहि 'कोहे, १ माणे, २ माया, ३ लोभे, ४ पिज्जे, ५ तहेव दोसे, ६ य। हासे, ७ भए, ८ अक्खाइय ९ उवघाए, १० निस्सिआ दसहा ॥ १ ॥' इयं च गाथा सुगमप्रायेति न व्याक्रियते इत्युक्तमसत्यं दशधा। सत्यमृषापि दशधा तथाहि 'उप्पन्न १, विगय २, मीसग ३, जीव ४, अजीवे य ५, जीवअजीवे ६। तह मीसगा अणंता ७, परित्त ८, अद्धा ९ य अद्धद्धा १० ॥ १ ॥' तत्र सम्यगविज्ञाय यत्रास्य नगरे दशैव दारकाः संजाता इत्यादिभाषणमुत्पन्नविषया सत्यामृषाभाषा १, एवं दशैव मृता इत्यादिका विगतविषया २, दशजाता दश च मृता इत्यादिका मिश्ररूपा ३, कस्मिंश्चित् कीटिकादिसंकुलाते स्वल्पपरासु मृतकीटकादिमिश्रिते जीवत्प्राया एवैते कीटिकादिसंघात इत्यादिका जीवविषया ४, अल्पतरजीवत् पिपीलिकादिमिश्रित प्रभूतमृते मृता एवैते पिपीलिकादिजीवा इत्यादिकाऽजीवविषया ५, तस्मिन्नेव जीवसमूहे सम्यगविज्ञायापि एतावंत एव जीवन्त एतावंत एव च तस्थिरे इतिप्रभृतिका जीवाऽजीवविषया ६, तथा प्रत्येकपत्रादिमिश्रितमूलकादौ सर्वोऽप्य यमनंतकाय एवेति प्रत्येकमिश्रितोऽनंतकायविषया ७, तस्मिन्नेव च सर्वोऽप्यसौ प्रत्येकवनस्पतिरेवेत्यनंतमिश्रितेऽपि प्रत्येक-विषया ८, तथा परिणतप्राये वासरे रजनी वर्तते इत्यादिकाऽद्धामोचरा ९, तथा सार्द्धप्रहरादिकेऽपि दिवे वासे पामोहेत त

समभूत्यादिकाऽद्धाद्धावैषयिका १०, इति किञ्चिन्निगदिता दश प्रभेदा सत्यामृषा । एषा तु देशतः सत्यतया देशतश्चासत्यतया सत्यामृषेति परिकीर्त्यते । या तु नैवाराधनी तल्लक्षणविकलतया नापि विराधनी विपरीतवस्तुस्वरूपानभिधानात् परपीडाहेतुताऽभावतश्च नाप्याराधनविराधनी एकादश सवादविसंवादाभावात् ' हे साधो । प्रतिक्रमणं विधेहि स्थण्डिलानि प्रत्युपेक्षस्वे 'ति व्यवहारविषयामंत्रिण्यादिद्वादशभेदभिन्नाऽसत्यामृषा तथाहि ' आमंतणि १ आणवणी २ जायणि ३ तह पुच्छणी ४ । अपन्नवणी ५ पच्चक्खाणी ६ नाम, भासा इच्छाणुलोमा य ७ ॥ १ ॥ अणभिग्गहिआ भासा ८, भासा य अभिग्गहम्मि ९ बोधव्वा । संसयकरणी १० भासा, वागड ११ मव्वागडा चेव १२ ॥ २ ॥' एतद्व्याख्या हे देवदत्तेत्यामंत्रणी १, इदमानयेत्यानायनिकी इद कुरु इद च मा कुर्वित्याद्याज्ञापनिकी वा २, इदं मम देहीत्याद्या याचनिकी ३, कथमेतदितिप्रभृतिका प्रच्छनिकी ४ 'पाणिनहा उ निअत्ता हवंति दीहाउआ अरोगा य ' इत्याद्या प्रज्ञापनिकी ५, केनचित् कस्मिन्नपि वस्तुनि प्रार्थिते सति नेदं ददामीति निषेधरूपा प्रत्याख्यानी ६, केनचित् कस्मिन्नपि कार्ये कर्तुमिष्टे पृष्टे सति कर्त्तव्यमेतदित्यादिरूपा इच्छानुलोमा ७, अनभिगृह्यार्थं याच्यते मिच्छडविथशब्दोच्चारणवत् साऽनभिगृहीता ८, अभिगृह्यार्थं च याच्यते घटपटप्रभृतिशब्दवत् साभिगृहीता ९, सैन्धवो वर्त्तते इत्यादिवदनेकार्थवाचका संशयकरणी १०, व्याकृता तु प्रकटाक्षरा ११, अव्याकृता तु बालादीनामिवाप्रकटाक्षरा १२ इति व्याख्याताऽऽतपन (१२)-मितभेदाऽसत्यामृषा । एते च सर्वेऽपि सत्यादिभेदा मनोयोगमाश्रित्य चिंतनविषया विज्ञेयाः भाषणमाश्रित्य तु वचनविषयाः एव सत्यादयश्चत्वारो मनोयोगविषया वाग्योगविषयाश्च । एवमेतेऽष्टौ भवंति वैक्रियाहारकौदारिककाययोगाना मध्ये

औदारिककाययोगो नरतिरश्चामेव । आहारककाययोगस्तु नराणामेव, नरेष्वपि सर्वसंयमभृतामेव, तेष्वपि चतुर्दशपूर्वधराणामेव । स चैकस्मिन् भवे वारद्वयमेव । भवपरिभ्रान्तौ च पुनर्वारचतुष्टयमेवैकजीवमाश्रित्यासंसारमपि वारचतुष्टयमेवाहारककाययोगः । यदुक्तं 'चत्तारि य वाराओ, चउदसपुव्वी करेइ आहारं । संसारम्मि वसंतो, एगभवे दुन्नि वाराओ ॥ १ ॥' इति सर्वचतुर्दशपूर्विणः समाश्रित्याहारकशरीरस्य जघन्यतः समयमेवान्तरमुत्कर्षतस्तु षण्मासाः । एतानि पुनराहारकशरीराण्युत्कर्षतः सहस्रपृथक्त्वमितानि प्राप्यन्ते यदुक्तं 'समओ जहन्नमंतर, उक्कोसेणं तु जाव छम्मासा । आहारसरीराणं, उक्कोसेणं नवसहस्सा ॥ १ ॥" इति एतद्विधानं च तीर्थकरऋद्धिदर्शनार्थमर्थावगाहनार्थं संशयव्यवच्छेदार्थं च भवति । उक्तं च 'तित्थयररिद्धिसंदसणत्थमत्थोवगहणहेउं वा । संसयवुच्छेयत्थं गमणं जिणपायमूलम्मि ॥ १ ॥' इति वैक्रियकाययोगस्तु सुरनैरयिकाणां केषाञ्चित् वैक्रियलब्धिमतां पञ्चेन्द्रियतिरश्चां केषाञ्चित् वायुकायिकानां च यदुक्तं श्रीहरिभद्रसूरिभिरनुयोगद्वारटीकायां 'वाउकाइया चउव्विहा पज्जत्ता सुहुमा पज्जत्ता अपज्जत्ता । बायरा पज्जत्ता अपज्जत्ता । तत्थ तिन्नि रासी पत्तेयं असंखिज्जलोगप्पमाणप्पएसरासिप्पमाणमित्ता । जे पुण बायरा पज्जत्ता ते पयरासंखिज्जभागमित्ता । तत्थ ताव तिण्हं रासीणं वेउव्वियलद्धी चेव नत्थि । बायरपज्जत्ताणंपि असंखिज्जभागमित्ताणं अत्थि । जेसिंपि अत्थि तओवि पलिओवमासंखिज्जभागसमयमित्ता संपयं पुच्छासमए वेउव्वियवत्तिणो' इति वैक्रियमिश्रकाययोगस्त्वौदारिकदेहिनां वैक्रियकरणं विधाय तत्संहरणसमये औदारिककाययोगेन समं मिश्रता समवसेयः । एवमाहारकमिश्रकाययोगोऽपि

औदारिकमिश्रकाययोगस्तु नरतिरश्चामुत्पत्तिकाले औदारिके देहेऽपूर्णे सति तैजसकार्मणयोरपि व्यापारवत्तया
व्याख्येयः। औदारिकमिश्रकाययोगस्तु नरतिरश्चामुत्पत्तिकाले औदारिकस्य तद्वद्भिश्च कार्मणकाययोगस्यापि व्याप्रिय-
विज्ञेयः। केवलिसमुद्घातावस्थायां च द्वितीयषष्ठसप्तमसमये औदारिकस्य तद्वद्भिश्च कार्मणकाययोगस्यापि व्याप्रिय-
माणत्वात्, कार्मणकाययोगस्तु विग्रहगतौ केवलिसमुद्घाते च तृतीयतुरीयपंचमसमयेषु समवसेयोऽनाहारकत्वात्। उक्तं च
'सत्तमछट्ठबिइज्जेसु, होइ ओरालमिस्सो सो; कम्मणसरीरजोई, चउत्थए पंचमे तइज्जे अ। जं होइ अणा-
हारो, सो तम्मि तिगे वि समयाणं ॥ १ ॥' इति एतेषा चौदारिकवैक्रियाहारकतैजसकार्मणरूपाणां पंचानामपि तनूनां
कारण १ प्रदेशसख्या २ स्वामि ३ विषय ४ प्रयोजन ५ प्रमाणा ६ ऽवगाहना ७ स्थित्य ८ ऽल्पबहुत्वकृतो नवधा भेदो-
ऽभिधीयते। तथाहि–कारणकृतो भेदो (व्यक्तः १, प्रदेशसङ्ख्याकृतो भेदो) यथा औदारिकादसंख्येयगुणप्रदेशं वैक्रियं ततो-
ऽप्यसख्येयगुणप्रदेशमाहारकं ततोऽप्यनतगुणप्रदेशं तैजसं ततोऽप्यनंतगुणप्रदेशं कार्मणं २, स्वामिकृतो भेदो यथा औदारिकं
तिर्यङ्मनुष्याणाम्, वैक्रिय सुमनोनैरयिकाणां तिर्यग्नराणां च केषांचिद् वैक्रियलब्धिमताम्, आहारकं तु चतुर्दशपूर्वभृताम्,
तैजसकार्मणे तु सर्वसंसारिणाम् ३, विषयकृतो भेदो यथा औदारिकस्य तिर्यगुत्कृष्टो विषयो विद्याधरानाश्रित्याऽऽनंदीश्वरात्,
जंघाचारणांस्तु प्रतीत्यारुचकपर्वतात्, ऊर्द्ध तूभयान् प्रत्यापांडुककाननात्, वैक्रियस्य पुनरसंख्येया द्वीपसमुद्राः, आहारकस्य
तु महाविदेहाः, तैजसकार्मणयोस्तु सकललोकः ४, प्रयोजननिर्मितो भेदो यथा औदारिकस्य धर्माधर्मसुखदुःखकेवलसचिद-
वाप्त्यादिप्रयोजनम्, वैक्रियस्य तु स्थूलता सूक्ष्मतैकतानेकता गगनक्षित्यंतर्गमनादि, आहारकस्य तु सूक्ष्मार्थविषयसंशयव्यव-
च्छेदादि, तैजसस्य पुनराहारपाकः शापानुग्रहशक्तिश्च, कार्मणस्य तु भवांतरगतिः ५। प्रमाणकृतो भेदो यथा औदारिकमुत्कर्षतः

सातिरेकयोजनलक्षमानम्, वैक्रियं तु सातिरेकलक्षयोजनमानम्, आहारकं तु हस्तमानम्, तैजसकार्मणे तु लोकाकाशप्रमाणे ६, अवगाहनाकृतो भेदो यथा सातिरेकयोजनसहस्रमानमौदारिकं यावत्स्वसंख्येयेषु प्रदेशेष्ववगाढं तेभ्यो बहुतरेष्वसंख्येयेषु प्रदेशेष्ववगाढं योजनलक्षप्रमाणं वैक्रियम्, आहारकं त्वाभ्यामल्पप्रदेशावगाढं हस्तमात्रप्रमाणत्वात्, तैजसकार्मणे तु केवलिसमुद्घातमाश्रित्य सकललोकाकाशप्रदेशावगाढे ७, स्थितिकृतभेदो यथा औदारिकस्य जघन्या स्थितिरन्तर्मुहूर्तम्, उत्कृष्टा तु पल्योपमत्रितयम्, वैक्रियस्य तु भवधारणीयस्य जघन्या दशवर्षसहस्राणि, उत्कृष्टा तु त्रयस्त्रिंशत्सागरोपमाणि, उत्तरवैक्रियस्य तु जघन्याऽन्तर्मुहूर्तम् उत्कृष्टा पुनरेवं जीवाभिगमेऽभिहिता 'अंतोमुहुत्तं नरएसु होइ चत्तारि तिरिय मणुएसु । देवेसु अद्धमासो, उक्कोसं विउव्वणा कालो ॥ १ ॥' जघन्या तु वायोः पंचेंद्रियतिर्यग्नराणां पुनरुत्कर्षेणाऽप्यन्तर्मुहूर्तम्, आहारकस्य तूभयथाऽप्यन्तर्मुहूर्तम्, तैजसकार्मणे तु प्रवाहतः सर्वेषामनादी भव्यानां सपर्यवसाने अभव्यानां त्वपर्यवसाने ८, अल्पबहुत्वविहितो भेदो यथा सर्वस्तोकमाहारकं कादाचित्कत्वात्, यदा च संभवति तदाप्येकं द्वे वा उत्कर्षतस्तु सहस्रपृथक्त्वम्, एतेभ्यो वैक्रियशरीराण्यसंख्येयगुणानि, तेभ्योऽप्यौदारिकशरीराण्यसंख्येयगुणानि, सर्वेषां तिर्यग्नराणां तत्संभवात्, ये च साधारणशरीराः प्राणिनस्तेषामनंतानामप्येकस्य सद्भावात्तैर्यग्योनिकानामानंत्येऽप्यौदारिकशरीराण्यसंख्येयगुणान्येव भवंति वैक्रियशरीरेभ्यः, तैजसकार्मणानि औदारिकेभ्योऽप्यनंतगुणानि सर्वसंसारिजीवानां प्रत्येकं तत्सद्भावात् ९, इति निगदिता पंचानामपि तनूनां नवधा भेदाः । इत्युक्तश्च चत्वारोऽपि मिथ्यात्वाविरतिकषाययोगरूपा बंधहेतवः । तदुक्तौ च समर्थित किंचित् करोति तृतीयस्वामी ३ ।

अथात्मा भोक्तेति तुरीयं स्थानं किंचित् व्याख्यायते । तथाहि भोक्ता च ततः पूर्वोपार्जितशुभेतरकर्मणां यतो नाभुक्तं कर्म कदापि क्षीयते यदुक्त 'नाभुक्तं क्षीयते कर्म, कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाऽशुभम्॥ १॥' स च स्वयं कृतान्येव कर्माणि भुक्ते न परकृतानि तद्भुक्तौ हि अतिप्रसंगः स्याद् देवदत्तभुक्तौ यज्ञदत्ततृप्त्यादिवत् । न चाऽक्षतस्य भोगो वेविद्यते मुक्तावपि तत्प्रसक्तेः। इत्युक्त तुरीय स्थानम् ४। अथास्ति च निर्वाणमिति पचम स्थानमुच्यते। तथाहि अस्ति च जीवस्यैकांतकांततमशर्मसेवधिभूतो महोदयो यत्र प्राप्तानामनंतज्ञानानंतदर्शनानंतवीर्यानंतसुखलक्षणमनंतचतुष्टय संभवेत्, यत्र च न रोगशोकाशंकाजुगुप्सापरस्पराबाधादयो दोषाः कदापि प्रादुर्भवंति, अयं च महोदयो यतो जितरागद्वेषमोहैस्तीर्थपतिभिर्भाषितस्ततो ध्रुवमस्ति स तदुपायसंभवे ५। इत्युक्तं पंचमं स्थानम् । अथ महोदयोपायलक्षणं षष्ठं स्थानमुच्यते । तथाहि अस्ति च तस्योपायभूता सम्यग्ज्ञानदर्शनचरित्रतपःस्वरूपा चतुष्टयी अस्मिन्नेव ग्रंथे वक्ष्यमाणस्वरूपा ततस्तद्विषये विवेकवतां कर्तुं सुचितः स्वशक्त्यनुसारेण प्रयत्नः । इत्युक्तं षष्ठं स्थानम् ६ । तदुक्तौ च प्रपंचितानि श्रद्धानचतुष्कस्य प्राक्तनतरगे प्रपंचितत्वादस्मिस्तरगे लिंगत्रिकादित्रिषष्टिस्थानानि । एतेषां च समासेवनविवर्जने यथास्थानाभाविते । एवं च सप्तषष्टिस्थानयथायोगस्वीकारपरिहारपुरस्सर श्रीमत्सम्यग्दर्शनं समाराधयद्भिर्मिथ्यात्वं विवर्जनीय दूरतः प्रयत्नेन । तच्च चतुर्विधं पंचविधं वावसेयम् ।

तत्र प्रथम तच्चातुर्विध्यमेव भाव्यते । तथाहि लौकिकं देवगतम् १, लौकिकं गुरुगतम् २, लोकोत्तर देवगतम् ३, लोकोत्तर गुरुगतम् ४, एतेषु प्रथमं लौकिकदेवगतमिथ्यात्वस्य सप्तषष्टिर्भेदा दर्श्यंते । तथाहि हरिहरविरचनादीनां प्रासादेषु

मिथ्यादृष्टिगोत्रदेवतासमभ्यर्चनं च २६। आश्विनचैत्रमाससंबधिशुक्लपक्षनवदिनेषु च नागदेवतादिपूजनमुपवासादितपोविधान च २७। बुधाष्टम्यामग्निकारिकाकरणं च २८। स्वर्णरूप्यरगितवस्त्रपरिधानदिने च सौनिणीरूपिणीरगिण्यादिदेवताविशेपानाश्रित्य विशेपपूजाविधानं लमन च २९। माघमासे च घृतकम्बलवितरणम् ३०। भाद्रपदमासस्य सितेतरा कज्जलतृतीया सिता तु हरितालिका तयोश्च कज्जलीदेवतापूजनादि ३१। मृतकार्ये च जलाजलिदान तिलदर्भदानं च ३२। श्रावण मासे च शुक्लचदनषष्ठीविधानम् ३३। गोपुच्छादौ च धात्वादिना हस्तककरणम् ३४। भाद्रपदमासे पुनरर्कषष्ठीकरणम् ३५। माघशुक्लतृतीयायां च गौरीभक्तं यद् योषितो गौरीसमाराधनकृते तस्मिन् दिने षोडशनशानां भोजनं ददति तद् गौरीभक्तम् ३६। सपत्नीपूर्वजपितृणा च प्रतिमानिर्मितिः ३७। उत्तरायणदिने च विशेषतः स्नानादिविधानम् ३८। भूतानां च शरावदानम् ३९। आश्विने च श्वेतगोमयतृतीयाविधानम् ४०। तथा वासुदेवस्य स्वापोत्थानैकादश्योस्तथा फाल्गुनशुक्लपक्षे आमलक्येकादश्यां तथा पाडवैकादश्या सर्वमासेषु चैकादश्यामुपवासादितपोविधानम् ४१। परतीर्थे च यात्रोपयाचितादिकरणम् ४२। श्राद्धमासिकषाण्मासिकसांवत्सरिकादीना च करणम् ४३। प्रपादानं च ४४। पितुर्विवाह सामर्थ्यसपत्तौ सुकृतलिप्सया स्वधनव्ययेन परकीयकन्यायाः पाणिग्रहणकारणम् ४५। पष्ठ्यादितिथिष्वपश्चादितिथिष्वऽकर्त्तनं दध्यविलोडन च ४६। मृतकार्थं च जलघटदानम् ४७। मिथ्यादर्शनिमदनेषु च लंघनकविश्राणनम् ४८। कुमारिकाभोजनदान च ४९। सुकृतकृते चैत्रमासे च चचरीवितरणम् ५०। वैशाखमासे च श्वेततृतीयादिवसेऽकर्त्तनं लमनकादिदानं च यद्यप्यऽस्मिन् दिने श्रीमद्युगादिदेवस्य सांवत्सरिकतपःपारणकमभूत्तथापि पितृतर्पणदिनमेतदिति लौकिकैः परिगृहीततया-

अथ लोकोत्तरमिथ्यादर्शनं निगद्यते । तत्र लोकोत्तरा आर्हतास्तेषु भवं मिथ्यात्वमपि लोकोत्तरम् । तच्च द्विविधं
देवगत गुरुगतं च । तत्र देवगतं तद् यद् वीतरागेऽप्युपयाचितादिना रागाद्यारोपणम् । उक्तं च ' लोगुत्तरदेवम्मि वि,
लोइअदेवाण जाणि लिंगाणि । इच्छापरिग्गहाईणि, तेसिमारोवणं मिच्छा ॥ १ ॥ ' लोकोत्तरगुरुगतं तु
तदवसेय यल्लोकोत्तरलिंगेष्वपि पार्श्वस्थादिषु गुरुत्वबुद्ध्या वंदनादिविधानम् । अथवा लोकोत्तरदेवगतगुरुगतमिथ्यात्वे
इमाभिश्चैत्यवदनकुलकगतगाथाभिर्विज्ञेये तथाहि ' एवं लोइअमिच्छं, देवगयं गुरुगयं च परिहरिउं । लोउत्तरे
विवज्जए, परतित्थिअसंगहिअबिंबे ॥ १ ॥ जत्थ जिणमंदिरम्मि वि, निसिप्पवेसोऽबलाण समणाणं ।
वासो अ नंदिबलिदाणन्हाणतदंपइट्ठा य ॥ २ ॥ ' अबलानां श्राविकाणां प्रवेशः श्रमणानां च वासोऽवस्थानं
' तंबोलाईआसायणाओ, जलकीलदेवयंदोलं । लोइअदेवगिहेसु व, वट्टइ असमंजसं एव ॥ ३ ॥ ' लौकिक-
देवगृहेष्विव ' तत्थवि सम्मद्दिट्ठीणं, सायरं सम्मराकणपराणं । उस्सुत्तवज्जगाणं, कप्पइ सव्वसाण नो
गमणं ॥ ४ ॥ जे लोगुत्तरलिंगा, लिंगिअदेहावि पुप्फतंबोलं । आहाकम्मं सव्वं, जलं फलं चेव सचित्तं ॥५॥
भुंजति थीरासंगं, ववहारं गंधसंगहे भूसं । एगागित्तब्भमणं, सच्छंदं चिट्ठिअं वयणं ॥ ६ ॥ चेइअमढाइ-
वासं, वसहीसु वि निच्चमेव संठाणं । गेअं निअचरणाणच्चावणमवि कणयकुसुमेहिं ॥ ७ ॥ तिविहं तिवि-
हेणेअं, मिच्छत्तं जेहिं वज्जिअं दूरं । निच्छयओ ते सड्ढा, अन्ने उण नामओ चेव ॥ ८ ॥ ' इति एतच्च चतुर्भेदमपि
मिथ्यात्वं यस्त्रिविधं त्रिविधेन विवर्जयति त निष्कलंकमलकरोति श्रीसम्यग्दर्शनरत्नम् । तत्र त्रिविधं करणकारणानुमति-

मेदात्, त्रिविधेन मनोवाक्कायरूपेण करणेन । इह चैवं भावना यथाहि 'एयं अणायरत्तं, मिच्छं मणसा न चिंतइ करेमि । सयमेव सो करेउ, अन्नेण कए न सुंदरयं ॥ १ ॥ एवं वाया न भणइ, करेमि अन्नं च न भणइ करेहि । अन्नकयं न य संसइ न कुणइ सयमेव कायेणं ॥ २ ॥ करसन्नमगुहमेवाइएहिं न य कारवेइ अन्नेण । अन्नकयं न पसंसइ, अन्नेण कयं न सुंदरयं ॥ ३ ॥' इति भावितं सेमवमचतुर्विधत्वं मिथ्यात्वस्य ।

अथ तस्यैव पंचविधत्वं किंचिद् भाष्यते, यथाहि-आभिग्रहिक १ अनाभिग्रहिक २ आभिनिवेशिकं ३ सांशयिक ४ अनाभोगं ५ च । तत्राभिग्रहिकं कुदृष्टीविद्यानामस्मन्मतमेव प्रमाणं नान्यदित्यभिग्रहरूपमवसेयं दीर्घतरसंसारिणाम् १ । अनाभिग्रहिकं तु दर्शनपरीविद्यानां नरतिरश्चामसंप्राप्तसम्यग्दर्शनानां सर्वेऽपि देवगुरवो नमस्याः सर्वोऽपि धर्मः कर्तव्य इत्यनभिग्रहरूपं विज्ञेयम् २ । आभिनिवेशिकं तु संप्राप्तमीमतादिगमानां केनापि यथास्थिते वस्तुतत्त्वे प्ररूपिते मति मत्सरादिना तदन्यथा व्याख्यानस्यावसेयम्; अथवाऽनाभोगेनोत्सूत्रे प्ररूपिते सति यथाख्यातेऽपि वस्तुतत्त्वे स्वमतिकल्पनाभिनिवेशेन समर्थयतो विज्ञेयम्; अथवा जानन् यथार्थवस्तु अन्यथा प्ररूपयति निवारितोऽपि न तिष्ठति तस्याप्याभिनिवेशिकमवसेय मिथ्यादर्शनम् ३ । सांशयिकं तु सर्वेऽर्थे तदुभये वा शंकितः प्ररूपयति न चान्यं पृच्छति यत ईर्ष्यापरिष्वक्तः कथमन्यमहं पृच्छामि यतः पृच्छ्यमाने मारत्वमप परेण नैतद् वस्तुतत्त्वं वेत्सीति; अथवा ये मदग्रहकास्ते मास्मेति पश्चेतत्पार्श्वे गतेन विलोक्यमानेनैवमत्रार्थे पृच्छतोऽप्ययोऽस्मादसौ वरतर इति मन्वाना मां परित्यक्ष्यन्त्यपृष्ठे विचारयतीत्यन्य यत न पृच्छति तस्य सांशयिकं मिथ्यात्वमवसेयम् ४ । अनाभोगं त्वेकेन्द्रियादीनां तथा मुग्धानां यतोऽनाभोगेनाज्ञानरूपेणैकेन्द्रियादय

स्तत्त्वातत्त्वविचाराचतुरतया मिथ्यादर्शनिन एव सर्वकालम्; अयत्ना शुद्धमेव प्ररूपयिष्यामीति चिंतितेऽप्यनुपयोगादशुद्धे प्ररूपिते सत्यनाभोगमिथ्यादर्शनं संभवेदु मिथ्यात्वनिमित्ततया ५।

एवमाभिग्रहिकादिभेदेन मिथ्यादर्शनस्य पंचविधत्वं पूर्वोक्तरीत्या च पंचविधत्वं यदुक्तं तत् स्थूलभावेन परमार्थतस्तु विपर्यास एव मिथ्यादर्शनं, यदुक्त 'एवं पुण पंचविहं मिच्छत्तं थूलभावेण परमत्थओ विवज्जासो। सो पुण एवं न मए मम पुव्वपुरिसेहिं वा कारियं एयं जिणाययणं किं मम इत्थ पूआसक्काराइआयरेणं; अहवा मया एयं जिणबिंबं कारियं मम पुव्वपुरिसेहिं वा इत्थ पूआइयं निव्वत्तेमि किं मम परकीएसु अच्चायरेणं एवं च तस्स न सव्वण्णपच्चयापवित्ती, अण्णहा सव्वेसु बिंबेसु अरिहं चेव वसिज्जइ सो अरहा जइ परकाओ ता पत्थरलेप्पयपित्तलाइयं अप्पणिज्जयं न पुण पत्थराइए वंदिज्जमाणेसु कम्मक्खओ किंतु तित्थयरगुण-पक्खवाएणं अण्णहा संकराइबिंबेसु पाहाणाइसब्भावाओ तेसु वंदिज्जमाणेसु कम्मक्खओ हुज्जा मच्छरेण वा परकारियचेइआलए विग्घमायरंतस्स महामिच्छत्तं न तस्स गंठिभेओ वि संभाविज्जइ जे य पासत्थाइ-कुदेसणाए विमोहिआ सुविहिआणं वाहाकरा भवंति ते वि तहेव जे वा जाइणाइपक्खवाएण साहूणं दाणाइसु पवट्टंति न गुणागुणचिंताए ते वि विवज्जासभायणं जम्हा गुणा पूअणिज्जा ते चेव दाणाइसु पवट्टंतेण निमित्तं कज्जंतु किं जाइनाइपभिइहिं जओ सजाईए निद्धम्मावि अत्थि नाईसु अ ता तेसिं दाणं महाफलं कहं हुज्जा अह तेसिं गुणा अत्थि तहावि ते च्चिअ पवित्तिनिमित्तं दाणाइसु कीरंतु न किंचि

णमुक्कोसं, दयासंजमनिज्जरेति पर्यायांतरैर्वा न तं दधतो व्यंजनाचारः ६, अर्थस्तु श्रीमदागमव्याख्यानरूपस्तस्य यथावस्थितस्य प्ररूपणमर्थाचारः ७, तथा धम्मो मंगलमुक्किट्ठं, अहिंसा गिरिमत्थए। देवा वि तस्स नमस्संति, जस्स धम्मे सया मती ॥ १ ॥ इत्यादिवत् सूत्रार्थोभयस्याऽन्यथाऽविधानं तदुभयाचारः ८, अतएव च वसु(८)मिता आचारा वैपरीत्येन ज्ञानातिचाराः स्युः। एतेष्वय महीयानतिचारो यत् सूत्रार्थयोरुभयोरपि नाशनं यतस्तन्नाशे चारित्रनाशः स्यात्तन्नाशे च निर्वाणाभावस्तदभावे च दीक्षादिवैयर्थ्यं स्यादिति। अकालस्वाध्यायिकादिस्वरूप तु श्रीमदावश्यकनिर्युक्तेर वसेयं बहुविस्तरत्वेन ग्रंथगौरवभयादत्र तस्याप्रपंचनादित्युक्ता अष्टौ सविपक्षा ज्ञानाचाराः।

अथ दर्शनाचारस्वरूपं किंचित् प्ररूप्यते। तथा निशंकितत्वनिराकांक्षत्वप्रभृतयोऽष्टौ भवेयुराचाराः श्रीमत्सम्यग्दर्शने। तेषु देशसर्वभेदायाः शंकायाः परिहरणं निश्शंकितत्वाचारः, तत्र देशशंका त्वियं यत्तुल्येऽपि जीवत्वे एके भव्या अपरे पुनरभव्या इत्येतत् कथं जाघटीत्यादिका सर्वतस्तु प्राकृतभाषानिबद्धोऽयं सिद्धांतः किं सर्वज्ञप्रणीत उत केनापि निपुणमतिना नरांतरेण परिकल्पित इत्यादिका परिज्ञेया १, देशसर्वभेदाया आकांक्षाया विवर्जनं निराकांक्षत्वाचारः, तत्र देशतस्त्वाकांक्षैकस्य कस्यचित् कुतीर्थिकमतस्य दयादिगुणलेशदर्शनादाकाक्षणेन विज्ञेया सर्वतस्तु सर्वेषां सुगतसांख्यादिदर्शनानामाकांक्षणतः २, तथा श्रीमदर्हदुपदिष्टानुष्ठानफलं प्रति निस्सशयत्वं स्वरूपस्तृतीयो निर्विचिकित्सत्वस्वरूप आचारः, अथवा विदक् ज्ञाने विद् विदंतीति क्विपि तल्लोपे विदः साधवास्तेषां मलाविलदेहादिजुगुप्साविवर्जनतो निर्विजुगुप्सात्वस्वरूपो वाऽत्रसेयः ३, तथा मूढदृष्टित्व द्विधा देशतः सर्वतश्च तत्र देशतः परतीर्थिकानां बालतपो विद्यामंत्राद्यतिशयान् नृपत्वादिनिर्मितां तत्-

पूजां वा विभवस्य प्रभावात् वा निशम्य स्वोन्मतिव्यामोहात् मूढा समाचाचलिता दृष्टिः सम्यग्दर्शनलक्षणा यस्य स
देवमूढदृष्टिस्तद्भावो देवमूढदृष्टित्वं सर्वतस्तु सर्वथा मूढा समाचाचलिता दृष्टिः सम्यग्दर्शनलक्षणा यस्य सर्वमूढदृष्टि
स्तद्भावः सर्वमूढदृष्टित्वम्, तथापि मूढदृष्टित्वस्य विवर्जनममूढदृष्टित्वाचारः ४, तथोपबृंहणा प्रशंसा सा च द्विविधविधा
प्रशस्ताऽप्रशस्ता च तत्र ज्ञानदर्शनतपःसंयमप्रमुखगुणानां समानधर्मिकाणां साध्वादीनां तद्गुणप्रशंसनेन तदुत्साहवर्द्धने
निपतनं प्रशस्ता यदुक्तं 'खमणे वेयावच्चे, विणए सज्झायमाइसु । उज्जुत्तं जाणं पसंसए सेसा उववू
हणा विणओ ॥ १ ॥' मिथ्यात्विनां तु पाखण्डप्रमुखीनामप्रशस्ता अनयोश्च प्रशस्ताऽप्रशस्तयोः प्रशंसयोः करणमकरण
योपबृंहणाचारः ५, तथा स्थिरीकरणं तु द्विविधं प्रशस्तमप्रशस्तं च तत्र प्रशस्तसंयमतपोवैयावृत्यादिषु सीदतां समानधर्मिक-
साध्वादीनां यथायोग्यमदानेन स्थिरताहेतु, अप्रशस्तं स्वसंयमविषयं तदपसेयम्, अनयोश्च प्रशस्ताऽप्रशस्तयोः स्थिरीकरणयोः
करणमकरणं च स्थिरीकरणाचारः ६, वात्सल्यं तु द्विप्रकारं प्रशस्तमप्रशस्तं च तत्र प्रशस्तमाचार्यग्लानप्राघुर्णकतपस्विबाल-
वृद्धबालादीनां भक्तपानोपष्टम्भादिसंपादनेन समाधिविधानरूपं यदुक्तं 'साहम्मियवच्छल्लं, आहाराईसु होइ
सव्वत्थ । आएसगुरुगिलाणे, तवस्सि बालाइसु विसेसो ॥ १ ॥' अप्रशस्तं तु पार्श्वस्थगृहस्थादिपक्षपातरूपं परिहेयम्,
अनयोश्च प्रशस्ताऽप्रशस्तयोर्वात्सल्ययोर्विधानमविधानं वात्सल्याचारः ७, प्रभाव्यते प्रकाश्यते प्रवचनमनयेति प्रभावना,
तत्र यद्यपि प्रवचनं सनातनत्वेन तीर्थंकरप्रणीतत्वेन सुरासुरनमस्कृतत्वेन स्वयमेव दीप्यते तथापि दर्शनविशुद्धिमभीप्सवो येन
गुणेन समधिकः स्यात् स तेन गुणेन श्रीमदर्हच्छासनं प्रभावयति प्रभावकत्वमस्यास्त्यादिवत् । यदुक्तं 'कामं सभावसिद्धं

विप्रप्रभृतयो वसंति । अन्यदा तत्तस्करोपप्लवादेकेन नृपेण पल्लीं गृहीत्वा केचिच्चोरा विनाशिताः केचिच्च तदा नष्टाः । निरपराधा वयमिति वदतश्च तदा वणिक्प्रभृतयोऽपि निगृहीताः । अत्र दृष्टांतदार्ष्टांतिकमीलनम् । नृपनिमानि कर्माणि । पल्लीतुल्या तु वसतिः । चौरप्रतिरूपास्तु कार्मिकाशिनः । वणिगादिकल्पास्तु तद्भोजिसंवासिनः । निग्रहनिभं तु दुर्गतिगमनमिति । अथाऽनुमोदना व्याख्यायते, तथाहि—कार्मिकभोजिनां प्रशंसाऽनुमोदना कीर्त्यते । सा च धन्याः सुंदरभोजिनो भवंत इत्यादिकाऽवसेया । अत्र कथानकम् । एको वणिक्कुमारः स्वरूपो युवतिलंपटो नृपांतःपुरीभिरीक्षांचक्रे । ततश्च परस्परानुरागयोगतो व्यवहृतिमिषेण स ताः सिषेवे । एवं गच्छति समये दुःखपर्यवसानतया दुष्कर्मणामन्यदा कदाचिदवगतः स नृपतिना तत्तादृशदुःकर्मनिर्मितकर्मठः विज्ञाय महाव्यथोत्पादनपुरस्सरं मारयित्वा स नृपतिना निजभटैः क्षेप्तो राजमार्गे । तदनु च स कैश्चिद्धन्यः कृतपुण्यश्चायं यदसावन्येषां दृग्भ्यामप्यदृश्यान् भागसौभाग्यसेवधिभूतान्नरपतिदाराश्रिषेव्यावश्यं भाविनां दीर्घनिद्रामवापेत्यादिवचनप्रकारैः प्रशंसितः । कैश्चित्तु पापीयानयं यतः सर्वथैवान्ययोषितोऽनभिलपणीयाः, किं पुनर्निजनृपत्यतःपुर्यः । अनेन च दुरात्मना जनापवादं लोकद्वयमप्यवगणय्य ता अपि विगोपिता इत्यादिवचोयुक्तिभिर्निंदितः । अथ च नृपतिप्राग्नियुक्तचरैस्तत्र प्रशंसका विनाशितास्तन्निंदकाश्च पूजिता इति । अत्र चोपनयः । अंतःपुरप्रतिरूपमाधाकर्म वणिक्तनयतुल्यास्तु तद्भोजिनस्तत्र प्रशंसकसदृशास्तु कार्मिकभोजिश्रमणपाशानुमोदकाः नृपनिभानि तु कर्माणि । रणसमं संसृतिपरिभ्रमणम् । इत्युक्तं प्रतिसेवनादिभेदचतुष्केनाधाकर्मस्वरूपम् ।

अथ तद्‌योगे विधेयमुच्यते । यतो हेतोश्चतुर्विधमप्याधाकर्म कर्मबंधनिबंधनं ततो हेतोः कार्मिकभोजिनो मुनीन् कर्म च

त्रिविधत्रिविधेन विवर्जयेत् । इत्युक्तं स्वरूपमिति द्वारम् ३ । अथ तुरीयं कीदृशं तदिति द्वारं व्याख्यायते । तथाहि—शालोदनादि मदिरामांसवद् वमनवेनाधाकर्मविस्मृतमपि पात्रं करीषकमोमयेनोन्मृष्टं सत्तु वारत्रयं धौतं सत् कल्पते नान्यथा । अत्र सुराप्रसङ्गे विद्यापेक्षया अन्यथा चांडालीगृहे मद्यभाजीनां मद्यपानविस्फुरतो चांडालनिवत् सर्वथैवेदं वर्जनीयं यतिभिः । अत्रार्थे निदर्शनं-यथा कश्चिद् क्षत्रियो भिल्लनाथसहोदरकृते निजभगिनीतया मांसमर्पयामास । तच्च गृहम्यापारम्यागतापास्वसा मातरिव भगिनी । तत्समानेन च स्वपक्षममीता सारमेयमान्यं मृतकमांसं समीक्ष्य तदेव संस्कृत्य तयोः परिवेषयामास, तौ च भक्षयित्वा तद् योतं विज्ञाय तौ च निर्मत्सर्य नवीनं तदानीव चक्रतुः । केषनाद्य सा केनाप्यपीसारेण अनुत्सृष्टं मांसं संस्कृतवती । तत्र तासबोन शिरच्छं स्वयेत्तर योऽन्यसेवयायाकर्मीति । इत्युक्तं तुरीयं कीदृशमिति द्वारम् ४ । अथ के च दोषास्तत् परिभोगे इति पञ्चमं द्वारमुच्यते । तथाहि आधाकर्मिकाहारस्य अतिक्रम १ व्यतिक्रमा २ अतीचारा ३ अनाचार ४ रूपाश्चत्वारो दोषा भवेयुस्तत्रायाधार्पणादत्यसमसारा । तत्राधाकर्मीयमन्त्रेऽनिषिध्यमाने सत्यतिक्रमो मनाक्चारित्रोल्लंघनरूपो भवेत् १ तदा दानकृते यावत्तो विधीयमाने इदंमादपिश्चपरायणो व्यतिक्रमः स्यात् २ विहिते च तस्मिन् व्यतिक्रमादपि गृहीतेऽतिचारः संपद्यते ३ । भक्षिते च तस्मिंस्तवीचारस्यापि व्यतीतोऽनाचाररूपस्तुरीयो दोषः संजायते ४ । आज्ञाभङ्गादयश्चितमे दोषा आज्ञाभङ्गो १ अनवस्था २ मिथ्यात्वं ३ विराधना ४ । तत्राज्ञाभङ्गः श्रीसर्वज्ञवचनातिक्रमात् १ । अनवस्था स्तोकेन गृहीतेन एकस्मिन्नोऽपि तद् समाचरेत् तं निरीक्ष्य पुनरन्य एवं संजायते, अथवा येनैकवारस्तत् समाचरितं स रसलोलुपत्वात् पुनः पुनस्तत् समाचरेत् इति २ । तथा मिथ्यात्वं च यथोक्ताऽकरणता, उक्तं च ' जो जहवायं न कुणइ मिच्छदिट्ठी तओ हु

को अन्नो । वुड्ढइ अ मिच्छत्तं, परस्स संकं जणेमाणो ॥ ५०४ ॥' ३ । विराधना स्वात्मसंयमप्रवचनविराधनाभेदेन त्रिधा । तत्र गौरवात् प्रायः संभवत्याधाकर्म तच्च प्रायः स्निग्धमधुरं भवेत्, स्निग्धमधुरे च प्रभूते भक्षिते ज्वरविशुचिकादयो रोगाः संभवेयुरित्यात्मविराधना । ज्वरादौ च समुत्पन्ने सूत्रार्थपौरुष्यकरणतः सूत्रार्थहानेर्ज्ञाननाशः स्यात्, आमये च समुत्पन्ने देहविह्वलतया चारित्रादिश्रद्धानत्रुटेर्दर्शनस्य विनाशः । प्रत्युपेक्षाद्यकरणे चिकित्सायां वा क्रियमाणायां पृथिव्यादि-षट्कायविराधनासंभवाच्च चारित्रस्य नाशः स्यात् । एवं रत्नत्रयरूपस्य सर्वसंयमस्य विराधना संभवेदाधाकर्मिकाहाराभ्यवहारे । आधाकर्मके च प्रभूते भक्षिते जठरादिव्यथायां समुत्पन्नायां विलापादिविधाने जनैस्तदाकर्णनाद् बहुमक्षमानयन्निजजठरमा-नमप्येतैर्न विज्ञायते इति जने निंदासमुत्पत्तेः प्रवचनविराधना स्यात् ४ । अथ कथंचिदेतद् भुक्त्वा यो नालोचयति तस्य को दोषः ? उच्यते यो द्रव्ययतिरश्नाति जिननिषिद्धं कार्मिकमशनादि भुक्त्वा च तदतिक्रमेऽघमोचनपुरस्सरं प्रायश्चित्तमप्रति-पत्त्या सकलत्रिकालविदाज्ञाभंगविधायिनस्तस्य भवत्यनंतसंसारकांतारपरिभ्रमणरूपो महादंडः । यतो ग्रामाधिपतेरप्याज्ञाभंगे प्राप्यन्ते बंधवधादीन्यनेकविधानि दुःखानि किं पुनः त्रिभुवनपतेराज्ञातिक्रमे । इत्युक्तं तदशने के दोषा इति पंचमद्वारं ५ ।

अथ के च दोषास्तद्दाने इति षष्ठं द्वारमुच्यते । तथाहि—आधाकर्मिकाशनादिदाने यतेश्चरितविघातः संजायते । ततः कारणाद् विवेकिभिरेतदुत्सर्गतो न देयम् । अपवादपदे तु क्वाप्यनिर्वाहादौ पात्रविशेषे वा तद्वितरणं भवेन्नेतरथा । यतः शुद्धान्नादिलाभनिर्वाहे सति द्वयोरपि दायकग्राहकयोस्तदहितं संसृतिहेतुत्वात्, तदेव च दुर्भिक्षग्लानाद्यवस्थास्वनिर्वाहे सति हितमातुरनिदर्शनेन । यथा हि रोगिणोऽवस्थाविशेषतः पथ्यमपथ्यं च स्यादन्नादि । एवमेतदपि । अथ पात्रविशेष-

कथनविषये शिक्षितचन्द्राजिबालिका समागते सति स्वसदनं तस्मिन् क्षपके सघृतगुडं समुत्पाद्य क्षैरेयीभाजनमस्तक-परिवेषणच्छद्मना समुत्थिता। अथ च तेषु शिशुषु प्राग्दत्तशिक्षावशात्तदगृह्णत्सु तया स यतिर्जल्पितो 'भो महात्मन्! यद्येतदीदृशं तव रोचते तदा त्वं गृहाणे'ति तयोक्ते स समयोक्तपरीक्षया शुद्धमवधार्य तदशुद्धमपि शुद्धधिया विहृत्य भुंजानोऽमूर्च्छितया शुद्धतयाध्यवसायतस्तद्भोजनान्ते पंचमावबोधमवाप। एवमशुद्धाशनपरोऽपि शुद्धगवेषणपरोऽध्यवसाय विशुद्धितः शुद्ध्यति यतिरित्युक्तं शुद्धाख्यं नवमद्वारं ॥ ९ ॥

अथ चालना ननु मुनिना यन्न कृतं न च कारितं न चानुमोदितं किंतु स्वयमेव यतिभक्त्या गृहस्थेन विहितं तच्चाधा-कर्मदोषदुष्टमशनादि भुंजानस्य मनोवचनतनुशुद्धस्य साधोः को दोष? उच्यते चेदेवं तथापि ज्ञात्वाऽऽधाकर्मदोषदुष्टमाहारं गृह्णन् वर्द्धयति नित्याधाकर्मकरणलक्षणं प्रसंगं तस्य गृहस्थस्य, स्वयं च तदनु निःशूकतया न मुंचत्यप्राशुकमिति तस्माच्च-

देयमस्मै किं वा नेति तेनादिष्टा सति प्रत्यवोचत् 'यत् संघाय कृत तत्तु सर्वे दत्तं, यत्तु युष्मदर्थं कृतं तद् विद्यते' इति तयोक्ते तत्पतिः कथयांबभूव 'तर्हि मदीयभक्तादपि देही'त्युक्ते तया प्रतिलाभितयथेप्सितमिष्टान्नः स द्रव्ययतिः संघभक्तधिया शुद्धमप्यशुद्धधिया भुंजानः श्लिष्यते दुष्कर्मणा। शुद्धगवेषणप्रवणस्तु भुंजानस्तज्जनितकर्मणाऽशुद्धपरिणामतो बद्धः। एवं शुद्धमप्यशुद्धधिया भुंजानः श्लिष्यते दुष्कर्मणा। शुद्धगवेषणप्रवणस्तु शुद्धत्याधाकर्माऽपि भुंजानः क्षपकवत्। तत्कथा चैवं, यथा कस्मिंश्चिद्गच्छे साधुरेको निरीहस्तपस्वी मासक्षमणप्रांतेऽनेषणीय-परिहरणानिमित्तं पारणककृते गतवान् ग्रामांतरम्। अथ च तत्रैका श्राविकाऽवगततत्पारणका वितरणश्रद्धया सद्यः सपादितपरमान्ना सज्जीकृतघृतगुडा तद्दोषाछादनकृते बहिःक्षिप्तपायसोपलिप्तपत्रपुटका प्रतिदिनमेतदेव न रोचतेऽस्माकमिति कथनविषये शिक्षिततच्चद्भोजिबालका समागते सति स्वसदने तस्मिन् क्षपके सघृतगुडं समुत्पाद्य क्षीरपूरितभाजनमस्तक-परिवेषणच्छद्मना समुत्थिता। अथ च तेषु शिशुषु प्राग्दत्तशिक्षावशात्तदगृह्णत्सु तया स यतिर्जल्पितो 'भो महात्मन्! यद्येतदीदृश तव रोचते तदा त्वं गृहाणे'ति तयोक्ते स समयोक्तपरीक्षया शुद्धमवधार्य तदशुद्धमपि शुद्धधिया विहृत्य भुंजानोऽमूर्च्छितया शुद्धतयाध्यवसायतस्तद्भोजनांते पंचमावबोधमवाप। एवमशुद्धाशनपरोऽपि शुद्धगवेषणपरोऽध्यवसाय विशुद्धितः शुद्ध्यति यतिरित्युक्तं शुद्धाख्यं नवमद्वारं ॥ ९ ॥

अथ चालना ननु मुनिना यन्न कृतं न च कारितं न चानुमोदितं किंतु स्वयमेव यतिभक्त्या गृहस्थेन विहितं तच्चाधा-कर्मदोषदुष्टमशनादि भुंजानस्य मनोवचनतनुशुद्धस्य साधोः को दोष? उच्यते चेदेवं तथापि ज्ञात्वाऽऽधाकर्मदोषदुष्टमाहारं गृह्णन् वर्द्धयति नित्याधाकर्मकरणलक्षणं प्रसंगं तस्य गृहस्थस्य, स्वयं च तदनु निःशूकतया न मुंचत्यप्राशुकमिति तस्माच्च-

दध्यादिव्यंजनेन मिश्रितं सच्चतुर्विधं कृताख्यं कीर्त्यते ८। तदेव पुनरग्नितप्तं मत् प्राग्व-
प्रागुक्तानां चतुर्णां कृते दध्यादिव्यंजनेन मिश्रितं सच्चतुर्विधं कृताख्यं कीर्त्यते ८। तदेव पुनरग्नितप्तं मत् प्राग्व- त्रयोदशभेदमौद्देशिकं स्यात्। इति
चतुर्दा कर्माख्यया समाख्यायते १२। एवमोघत एकविध विभागतस्तु द्वादशविधमिति त्रयोदशभेदमौद्देशिकं स्यात्। इति
किंचिन्निगदितमौद्देशिकस्वरूपम् ॥ २ ॥

अथ तृतीयपूतिकर्मदोपस्वरूपं किंचित् प्ररूप्यते। तथाहि आधाकर्मौ१द्देशिकांत्यत्रितय४मिश्राद्ध्यवपूरकांत्यद्वितया
८ द्वारपूति ९ बादरप्राभृतिका १० रूपाविशोधिकोटशुद्गतदोपदशकाऽन्यवमात्रेणापि युतं शुद्धमपि भक्तप्रभृति पूति भवेत्
सधृतसितं परमान्नमिवाऽशु विषलेशेन। तच्च द्विविधं सूक्ष्म १ बादरं च २। तत्र सूक्ष्मं कार्मिकगंधाऽग्निधूमबाष्पैः स्यात्।
इहोत्तरत्र च कार्मिकग्रहणेन सर्वेषामविशुद्धिकोटिदोषाणां ग्रहाद् दृश्यः। अत्राग्निग्रहणात्तदवयवास्तापादिरूपा अंशा ग्राह्याः।
अयं भावः कार्मिकभक्तप्रभृति गंधाद्यैः संमिलितं शुद्धमप्यशनादि सूक्ष्मपूति भवेत्। ननु यद्येवं तर्हि पूतिदोषरहितं किमपि
विद्यते, यतो वह्नेस्तापादिरूपा अंशा धूमः कार्मिकाशनादिगंधबाष्पौ चेत्येते चत्वारोऽपि विशीर्यमाणाः सर्वमपि विश्वं
व्याप्नुवंति, ततस्तैः स्पृष्ट शुद्धमप्यशनादि जगत् मध्यस्थितं सर्वमपि सूक्ष्मपूति भवेत्? सत्यं परमेतददुष्टमाचीर्णत्वादशक्य-
परिहारत्वाच्च। ननु यद्येतददुष्टं तर्हि किमर्थमेतदुपन्यासः कृतः? उच्यते भेदमात्रप्ररूपणार्थमेव। यथा सूक्ष्मबादरपल्योपम-
विचारे बादरस्य तस्य प्ररूपणमित्युक्तं सूक्ष्मपूति ॥ १ ॥

अथ तद् बादरं प्ररूप्यते तथाहि बादरं पूति द्विविधमुपकरणविषयं भक्तपानविषयं च। तत्राधाकार्मिकचुल्लीस्थालीदर्व्या-
द्युपकरणस्थितं शुद्धमप्यशनाद्युपकरणपूति भवेत्। गृहस्थैः स्वार्थमेव ततोऽन्यत्र स्थापितं तु शुद्धम्। अथ भक्तपानविषयं

परंपर २ मेदात्। चिरे १ त्वर २ मेदाद् वा। तत्र चुल्लुपादिस्वस्थानम् १ । परस्थानं तु ततः संहृत्यान्यत्र यत्र कुत्र-
चित् स्थाप्यते तदवसेयम् २ । अनंतरं तु घृतादि १ । परंपरं तु क्षीरादिकमवसेयम् २ । यावंतं समयं द्रव्यमवतिष्ठति
तावंतं समयं यतिनिमित्तं तत्स्थापने चिरस्थापना १ । अथाचिरस्थापना प्रोच्यते । यत् पंक्तिस्थितेषु बहुषु गृहेष्वेकस्मिन्
सदने सम्यगुपयोगेन भिक्षा परिभावयत्येको यतिरपरस्तु द्वयोः पार्श्वस्थयोस्तयोर्दायकहस्तगतों भिक्षां परिभावयति । एवं गृह-
त्रयात् परतो गृहांतरे साधुनिमित्ता या दायकहस्तगता भिक्षा सा इत्वरस्थापना प्रोच्यते, तत्रोपयोगाभावात् । अत्र निदर्शनं
यथा केनचित् श्रमणेन कस्याश्चिदगार्याः सन्निधे दुग्धं प्रार्थितं तदा तयोक्तं 'क्षणांतरे दास्ये'। अथ च गोचरचर्यागतेन
तेन तदन्यत्र सदने प्राप्तम्। क्षणांतरे च तया स प्रोक्तो 'भो यते! गृहाणैतद् दुग्धम्' तदा च स प्रोचिवान् 'अद्य तन् मया-
ऽन्यत्रासादितम् । तेन प्रयोजने समुत्पन्ने तदापि तदादास्ये' इति तेनोक्ते तया ऋणभीतया तद्दधि विधाय स्थापितम् । श्वो
दास्ये इति बुद्ध्या । तस्याप्यनादाने तया तावत् स्थापितं यावद् घृतं जातम् । एवं प्रभूतमपि समयं यावत् स्थापनादोषः
संभवेत् । इत्युक्तं किंचित् स्थापनादोषस्वरूपम् ॥ ५ ॥

अथ प्राभृतिकादोषस्वरूपं किंचिदुच्यते । तथाहि प्राभृतिका द्विधा सूक्ष्मबादरभेदात् । तत्र गुर्वाद्यागमनं विज्ञाय
कोऽप्युपासको विवाहादिमहस्योपसर्पणमपसर्पणं यावत् करोति सा बादरा प्राभृतिका १ । यत्तु सुतादौ भोजनं याचमाने
सति 'यदा यतयः समायास्यंति तदा तद्दाननिमित्तमुत्थिता सती तदापि तद्दास्यामी'ति दात्री ब्रूते सा सूक्ष्मा प्राभृतिका
२ । इत्युक्ता प्राभृतिका ॥ ६ ॥

तदुच्यते तथाहि कार्मिकोसनेन स्वस्वरूपाविष्कारविशेषरूपेण पूमितं सत् पूति स्यादथमादि । अथवा कार्मिकादिगुरुवर्गादीनां सदमकारौ संस्कारार्थं मवेषवस्तदपसेव हिंगुलद्रव्यस्य पतिनिमित्त तपिचोदकेन प्रकीकरणता परिक्षेयमाणाकार्मिकत्वं सदन स्व तु पूर्वीकरणाग्नितापमाश्रिस्कारैः कार्मिकता भावनीया । तथा कार्मिकोपसिक्तस्थालादिषु राद्ध स्थापितं वा भक्तपानं पूति भवेत् । तथा कार्मिकोपसिक्तस्थालादिस्पृष्टमप्यशनादि पूति स्यात् । इत्युक्तं पूति यानविषयम् । अत्रैव विशेषः प्रोच्यते तथाहि यत्र कार्मिकमशनादि कृतं तद् गृहं प्रथमदिने तदोषदुष्टत्वाद् वर्जनीयं तदनु तत् सदनं दिनत्रयं यावत् पूति प्रोच्यते मक्तपानमाश्रित्य । यदा तु कश्चिद् गृही कतिचिद्दिनातिक्रमे संखडीं करिष्यामि संघं वा भोजयिष्यामीति बुध्या मोदकादीना- माकर्मिकान् विधाय स्थापयति तदा यावंति दिनानि ते मोदकास्तिष्ठंति तावंति दिनानि तद् गृहं पूति प्रोच्यते । तेषु दत्तेषु सर्वेष्वपि यथादिनत्रयावधि तद्गृहस्य भवमपि भक्तादि तत्स्पर्शभावात् पूति स्यादेवं तु बहून्यपि दिनानि पूतिदोषः संभवेत् । यत्र तु भाजने कार्मिकं भक्तादि कृतं स्यात्तु भाजनमकृतत्रिकल्पस्य स्वार्थे वारत्रयं भक्तादिरंधनेन शुद्ध्यति । कल्पत्रयकृतौ तु भयत्रयेण शुद्धयति । यत्र तु पात्रे कार्मिकमशनादि गृहीतं स्यात्तु पात्रं प्रथमसंगुलीमोक्षनकरीषोद्घर्षनादि क्रियां विधाय तदनु कल्पत्रयकृतिना शुद्धं विधेयम् । इत्युक्तं पूतिकर्म ॥ ३ ॥

अथ तृतीयमिश्रजाताख्यदोषस्वरूपं किंचित् प्ररूप्यते, तथाहि यद् प्रथमत एव यावदर्थिक १ समस्तपाखंडि २ निर्ग्रंथ ३ मिश्रितमारभ्य ४ कृतं च कृतं पचनादिना तन्मिश्रजातं त्रिविधतया कीर्त्यते । इत्युक्तं मिश्रजातम् ॥ ४ ॥

अथ स्थापनादोषस्वरूपं किंचिदुच्यते । तथाहि स्थापना द्विधा स्वस्थान १ परस्थान २ भेदात् । अथवाऽनंतर १

परमावक्रीतम्

तत् परद्रव्यक्रीतम् ३ । तथा परेण निजविज्ञानदर्शनादिना कंचनजनमावर्ज्य तेन साधोर्यदन्नादि दाप्यते तत् परमावक्रीतम्
४ । इत्युक्तं चतुर्द्धा क्रीतम् ॥८॥

अथ प्रामित्यमुच्यते । तथाहि प्रामित्यं द्विधा लौकिकं १ लोकोत्तरं च २ । तत्र यदुद्धारकेण गृहीत्वाऽशनादि साधुभ्यो
ददाति तल्लौकिकप्रामित्यम् । एतच्च साधुभगिन्युद्धारकगृहीततैलवद् दुष्टत्वाद् वर्जनीयम् । तथाहि कयाचिद् यतिभ-
गिन्या स्वसोदरेऽनगारे प्राप्ते सति तत्सत्यापनाय दुस्थतया तैलमुद्धारकेण गृहीत्वा तस्य विश्राणितम् । अथ चातीव
दुर्विधतया तद्वर्द्धमान दातुमक्षमा सा तद्गृहे दासी जाता । एतच्च जनोदंतेन मुनिना समाकर्णित ममाकर्ण्य च तस्मिन्
ग्रामे समेत्य तत्सदनसमीपे स यतिस्तस्थौ वर्षाकल्पम् । तत्र स्थितेन च तेन स सागारिकः कुटुंबः प्रतिबोधितः श्रीमदार्हत-
सुकृतदेशनया प्रतिबोध्य च तस्य सम्यग्दर्शनव्रतारोपण विधायेमं नियम ग्राहितो यद् व्रतार्थी न कश्चिन्निषेध्य इति । अथ
च गृहीतनियमस्य तस्य सुतो व्रतं जग्राह । साऽपि यतिस्वसा व्रतार्थिनी दासत्वात् मुक्ता प्रव्रजिता । इत्युक्तं लौकिकप्रामि
त्यम् १ । लोकोत्तर तु यदा साधुरेव साध्वंतरपार्श्वात् किमप्युद्धारकेण गृह्णात्यशनादि तदा विज्ञेयम् २ । इत्युक्तं प्रामित्यम् ॥९॥

अथ परावर्त्तित कीर्त्यते । तथाहि परावर्त्तित द्विधा लौकिकं १ लोकोत्तरं च । एकैकं च द्विविध तद्द्रव्यविषयम् १,
अन्यद्रव्यविषयं च २ । तत्र यद् गृही यतिनिमित्तं स्वीयदुरभिगधि घृतादिद्रव्यमन्यस्यचित् पार्श्वे सुगंधिघृतादिद्रव्येण
परावर्त्य ददाति तत्तद्द्रव्यविषयम् १ । यत्तु कोद्रवकुरादि द्रव्यं शालिकुरादिद्रव्येण परावर्त्य ददाति तत् परद्रव्यविषयम्
२ । एतत्तु वणिग्द्वयभगिनीनिदर्शनेन दुष्टत्वाद् वर्जनीयम् । तच्चेदं वसंतपुरे द्वौ व्यवहारिणौ देवदत्तधनदत्तनामानौ ।

तव् परद्रव्यक्रीतम् ३ । तथा परेण निजविज्ञानदर्शनादिना कंचनजनमावर्ज्य तेन साधोर्यदन्नादि दाप्यते तत् परभावक्रीतम्
४ । इत्युक्तं चतुर्द्धा क्रीतम् ॥ ८ ॥

अथ प्रामित्यमुच्यते । तथाहि प्रामित्यं द्विधा लौकिकं १ लोकोत्तरं च २ । तत्र यदुद्धारकेण गृहीत्वाऽशनादि साधुभ्यो ददाति तल्लौकिकप्रामित्यम् । एतच्च साधुभगिन्युद्धारकगृहीततैलवद् दुष्टत्वाद् वर्जनीयम् । तथाहि कयाचिद् यतिभगिन्या स्वसोदरेऽनगारे ग्रामे सति तत्सत्यापनाय दुःस्थतया तैलमुद्धारकेण गृहीत्वा तस्य विश्राणितम् । अथ चातीव दुर्विधतया तद्वर्द्धमान दातुमक्षमा सा तद्गृहे दासी जाता । एतच्च जनोदंतेन मुनिना समाकर्णितं समाकर्ण्य च तस्मिन् ग्रामे समेत्य तत्सदनसमीपे स यतिस्तस्थौ वर्षाकल्पम् । तत्र स्थितेन च तेन स सागारिकः कुटुंबः प्रतिबोधितः श्रीमदार्हतसुकृतदेशनया प्रतिबोध्य च तस्य सम्यग्दर्शनव्रतारोपणं विधायेमं नियमं ग्राहितो यद् व्रतार्थी न कश्चिन्निषेध्य इति । अथ च गृहीतनियमस्य तस्य सुतो व्रतं जग्राह । साऽपि यतिस्वसा व्रतार्थिनी दासत्वात् मुक्ता प्रव्रजिता । इत्युक्तं लौकिकप्रामित्यम् १ । लोकोत्तर तु यदा साधुरेव साध्वतरपार्श्वात् किमप्युद्धारकेण गृह्णात्यशनादि तदा निज्ञेयम् २ । इत्युक्तं प्रामित्यम् ॥९॥

अथ परावर्त्तित कीर्त्यते । तथाहि परावर्त्तितं द्विधा लौकिकं १ लोकोत्तरं च । एकैकं च द्विविधं तद्द्रव्यविषयम् १, अन्यद्रव्यविषयं च २ । तत्र यद् गृही यतिनिमित्तं स्वीयदुरभिगंधि घृतादिद्रव्यमन्यस्यचित् पार्श्वे सुगंधिघृतादिद्रव्येण परावर्त्य ददाति तत्तद्द्रव्यविषयम् १ । यत्तु कोद्रवकूरादि द्रव्यं शालिकूरादिद्रव्येण परावर्त्य ददाति तत् परद्रव्यविषयम् २ । एतत्तु वणिग्द्वयभगिनीनिदर्शनेन दुष्टत्वाद् वर्जनीयम् । तच्चेदं वसंतपुरे द्वौ व्यवहारिणौ देवदत्तधनदत्तनामानौ ।

यते तद्दर्दरोद्भिन्नम् २। यत्तु पिहितं कपाटमुद्भिद्य दीयते तत् पिहितोद्भिन्नम् ३। एतेषु जतुलिप्ते उद्भिद्यमाने पुनर्लिप्यमाने
च तेजस्कायविराधनादयो दोषा भवेयुर्यच्छगणमृत्तिकादिलिप्ते तद्भिद्यमाने पुनर्लिप्यमाने च पृथ्व्यप्कायविराधनादयो दोषाः
समवेयुस्तथा व्यापारेण क्रयविक्रयप्रभृतयोऽपि तथोद्भिन्ने सति घटकोष्ठिकादिमुखे ये मूषकादयो जीवास्तत्र निपतंति तद्वि-
राधनादयोऽपि दोषा अत्र विज्ञेयाः। एव दर्दरोद्भिनेऽपि यथासंभवं दोषा वाच्याः। अव्यापार्यमाणकपाटोद्भिन्ने तूपर्यधो वा
कृताऽवस्थितीनां लूतापुटग्रहगोधातदंडकादित्रसजतूना विराधनाऽन्येऽपि च पूर्वोक्ता दोषाः संभवेयुः। यश्च दर्दर उन्मुद्रितग्रंथिः
परिभुज्यमानो भवति यच्च कपाट नित्यं परिवहति तत्र त्रसादिजीवविराधनाऽसंभवे गृह्यतेऽदुष्टत्वादित्युक्तं किंचिदुद्भिन्नम् ॥१२॥
अथ मालाऽपहृतमुच्यते तथाहि मालापहृतं जघन्यमध्यमोत्कृष्टभेदात्त्रिविधम्। तत्र क्षितिनिहितचरणाग्राभ्यामुत्पाटित-
पार्ष्णिभ्यां चरणाभ्यामत्यूर्ध्वसिक्ककादिस्थं चक्षुगोचरं दात्र्या यद् वितीर्यते तज्जघन्यमालापहृतम् १। मंचकादिकं
वाऽऽरुह्य यद्दीयते तन् मध्यमम्। निश्रेण्यादिकं त्वारुह्य यद्दीयते तदुत्कृष्टम् ३। अथवा तच्चतुर्विधं तथाहि सिक्ककसदनोपरितन-
भूभागस्थितमूर्ध्वस्थितम् १। भूमिगृहादिस्थमधःस्थितम् २। कोष्टिकादिगतं तूभयस्थितं पार्ष्ण्युत्पाटनादधो उत्क्षेपाच्च
३। धरण्यामेव स्थितं तु यत्करादुपादेयं तत्तिर्यक्स्थितम् ४। एतच्च त्रिविधं चतुर्विधं वा मालोपहृतं दुष्टत्वाद् वर्जनीयम्।
अत्र निदर्शनं यथा कोऽपि यतिः कस्यचिद् गृहे विहर्तुमगात्, तदा च तद्गृहवनिता चक्षुरगोचरसिक्कस्थितमोदकवित-
रणाय समुत्थिता, ता च तथाविधां वीक्ष्य स साधुस्तदनादाय निर्गतः। अथ च कोऽपि पार्श्वस्थस्तस्मिन्निर्गते तत्र
समागात्, तदा च तद्गृहपतिना स पृष्टः 'किमिति प्राक् समागतसाधुना न गृहीता मोदका ?' इत्युक्ते स प्रोक्तवान्

तेन सद्भावे प्रोक्तेऽपि सा कलहान्न व्युपरमति । तदा च दुग्धाप्राप्त्या तड्डिम्भान्यपि रोदयावभूवुः । एवं चाऽसमंजसे संजाते
सति निजगृहस्वरूपे समुत्पन्नमन्युः स गोपः साधु गवेषयामास वधकृते । अथ च साधुना स गोपो दृष्टो लक्षितश्च तद्भावः
विज्ञाय च तद्भावं तेन साधुना स गोपः प्रोक्त–' स्तदा मया ग्रामेशनिर्बंधाद् दुग्धं गृहीतं तदनु तत्प्रत्यर्पणकृते त्वदन्वे-
षणं विदधता मया त्वं दृष्टोऽसि । तेन त्वमेतद् ग्रहाण मुक्त्वा मयि कोप' मिति मुनिनोक्ते शांतमन्युना गोपेन स प्रोक्तो–
'ऽद्य त्वं मुक्तोऽसि, मैवं पुनः कार्षी–'रिति एवमन्ययोरप्याछेद्ययोर्दृष्टांतभावना विधेया इत्युक्तमाच्छेद्यम् ॥ १४ ॥

अथानिसृष्टमुच्यते । तथाहि अनिसृष्टशब्देनादत्तमुच्यते । तावद् बहूनां सत्कं तैरदत्तमननुमतं वा यदेकः कश्चिद्ददाति
तद् विज्ञेयम् । तच्च त्रिधा साधारण १ चोल्लक २ जड्डा ३ ऽनिसृष्टभेदात् । तत्र साधारणतयाराद्धं तैः सर्वैरननुज्ञात-
मेकस्य कस्यचिद्ददतः साधारणाऽनिसृष्टं स्यात् १ । चोल्लकानिसृष्ट चैवं विज्ञेयं यत्स्वामिना कुत्रापि स्वसेवकानां
भोजननिमित्तमशनादिकारितं भवति । तत्र च तैरननुमतमेव यदा सूपकृद्ददाति यतये तदा तद् भवति २ । जड्डशब्देन तु
हस्ती प्रोच्यते तन्निश्रया कृतमशनादि नृपेन द्विपेन वाऽननुमतमेव यद्ददाति हस्तिपकप्रभृतिकस्तज्जड्डानि-
सृष्टमुच्यते । एतेषु च गृह्यमाणेष्वदत्तादानाप्रीतिर्नृपतिपिंडप्रभृतयो दोषा भवेयुः । तथाहि कस्मिंश्चिद् ग्रामे मोदकादि-
द्रव्यमादाय द्वात्रिंशत् पुरुषा उद्यानिकार्थमुद्याने गताः । ते च कस्मिंश्चिज्जलाशये स्नानकृते प्राप्ताः, कंचन नरं मोदकचिंतन-
कृते स्थापयित्वा । अथ च तत्रास्थाने समायातः कोऽपि यतिलिंगधारी । तेन च स मोदकचिंतकः प्रोक्तः 'भो देहि मह्यमेकं
मोदक'मिति तेनोक्ते सति स नरः कथयामास 'परकीया एते मोदकाः, कथं मया दातुं शक्यंते ?' इति तेनोदिते स

आहारपूति ७ बादरप्राभृतिकाऽध्यवपूरात्यद्वितय १० मित्येते दशोद्गमदोषा अविशोधिकोटितया कीर्त्यन्ते । अनया चाऽवि-
शोधिकोट्या स्पृष्टमशनाद्यशुचिलवेन स्पृष्टमिवानास्वाद्यं भवति । अतस्तया युतं पात्रमपि पूर्वं करीषनिश्शोधितं तदनु कृत-
त्रिकल्पं कल्पते नान्यथा यतस्तदऽवयवोऽपि विपलव इव भक्तादिसहस्राणि विनाशयति । शेषा उद्धरितोद्गमदोषा उत्पादनादि
दोषाश्च विशोधिकोटितया कीर्त्यंते । तदवयवश्च यो यत्र यदा पतितः स तस्मात्तदैवोद्धरणीयः । अत्र चतुर्भंगी शुष्के शुष्कं
पतितम् १, शुष्के आर्द्रे पतितम् २, आर्द्रे शुष्क पतितम् ३, आर्द्रे आर्द्रे पतितम् ४ । एतेषु प्रथमभंगे सुखमुद्धर्त्तुं, द्वितीयभंगे तु
पात्राग्रतः कर दत्वाऽन्यद्द्रव क्षिप्त्वा तद् शुद्धं द्रवं गालयेत्, तृतीयभगे त्वशुद्धद्रवमध्यपतितमोदनादि हस्तं क्षिप्त्वा बहिः
कर्षयेत् शुद्धद्रवे त्वशुद्धद्रवे पतिते तावन्मात्रं त्यजनीयम् । निर्वाहे तु सर्वमपि वर्जनीयम् । अनिर्वाहे त्वियं चतुर्भंगी विज्ञेया,
अस्यां त्वशठः शुद्ध्यति शठस्तु बद्ध्यते तत्कर्मणा । उक्तं च श्रीपिंडनिर्युक्तौ 'सुक्के सुक्कं पडिअं, विगिंचिउं होइ
तं सुहं पढमो । बीयम्मि दवं छोडुं, गालेति दवं करं दाउं ॥ १ ॥ तइअम्मि कर छोडुं, उल्लिचइ ओयणाइ
जं तरइ । दुल्लहदव्वं चरिमे, तत्तिअमित्तं विगिंचंति ॥२॥ सथरे सव्वमुज्झंति, चउभंगो असंथरे ।
असढो सुज्झई जेसुं, मायावी जेसु बज्झती ॥ ३ ॥' इत्युक्ताः षोड़शोद्गमदोषाः ।

अथ षोडशोत्पादना दोषा निगद्यंते तथाहि, धात्री १ दूतीकर्म २ निमित्ता ३ जीव ४ वनीपक ५ चिकित्सा ६ क्रोध
७ मान ८ माया ९ लोभ १० पूर्वपश्चात्संस्तव ११ विद्या १२ मंत्र १३ चूर्ण १४ योगपिंड १५ मूलकर्म १६ नामानः
षोडशोत्पादना दोषा भवति ।

तेषु बालविषयं क्षीर १ मज्जन २ मंडन ३ क्रीडापना ४ अङ्क ५ रूपं पंचप्रकारं धात्रीत्वं विधाय वस्त्रनादि समवाप्ते द्रव्यपतिः स धात्रीपिंडो विज्ञेयः। अत्र निदर्शनं यथा–कोल्लरनाम्नि नगरे श्रीवज्रस्वामिपट्टालङ्काराः श्रीसंगमनामानः स्थविराः दुर्भिक्षे समग्रगच्छं विसर्ज्य गमनागमनतपस्विनः। अन्यदा च तेषां शिष्यो दत्तनामा श्रीगुरुवन्दनाय समाजगाम तत्र स्थाने। स च तदागतः श्रीगुरुं तथैव च स्थितं मार्गे स्थितं निरीक्ष्य गुरोर्भ्रष्टाचारत्वमा-शंक्य तस्थौ परिहासमनाः। अथ च स मध्याह्ने गुरुणा सह भिक्षार्थं गतोऽज्ञातोञ्छगवेषणे च संक्लेशमाप्तः समभूत्। तदा च विशालधनिकाभ्यन्तरे श्रीगुरुभिः क्रन्दनोन्मत्तस्य बालस्य व्यन्तरत्वं त्रिवृद्धं च चुटिकाप्रदानेन सज्जीकृत्य तत्प्रभाववशीभूतमाता तेभ्यः स्वयमेव विशिष्टं पिंडं दत्तवती। अथ च प्रतिक्रमण-काले सं'धात्रीपिंडमालोचय'इति श्रीगुरुणा प्रोक्तः स प्रत्युक्तवान् 'सूक्ष्मपरिहारेण बहुदोषमपि दत्तेन, यतः स सूक्ष्मपरिहारेण पिंडो न तु मया' इति तेनोक्ते सति देवतया तद्विशिष्टे घोरान्धकारं वात्या कर्करशर्करादिविकुर्वणं कृतं, तदा च स भीतिभीतः सम्प्रार्थयाम श्रीगुरुम्। तदा च श्रीगुरुभिर्निष्ठयूतेन सिक्ता प्रदीपवत् ज्योतमाना निजाङ्गुली तत्कालनिकरविस्मर-कांगुली तस्य प्रदर्शिता। तां च समालोक्य स चेतसि चिन्तयामास अहो! गुरुसमीपे दीपोऽपि दिव्यते। इति तेन चिन्तिते सति तं च देवतया शिक्षितः श्रीगुरुपार्श्वे निपत्य सौवापराधं क्षामितवान्। यथाऽनेन धात्रीपिंडो दूषितस्तथाऽन्येनापीति। इत्युक्तं धात्रीपिंडस्वरूपम्॥ १७॥

अथ दूतीपिंडस्वरूपं प्ररूप्यते, तथाहि–दूती संदेशार्पणप्रक्रिया, तत्कर्मणा समासादितः पिंडो दूतीपिंड इति कीर्त्यते।

तच्च दूतीत्वं स्वग्रामपरग्रामप्रच्छन्नप्रकटत्वभेदाच्चतुर्विधम् । एतच्च चतुर्विधमपि दूतीत्वं सावद्यव्यापारप्रवृत्तिनिमित्तत्वेन दुष्टत्वाद् वर्जनीयम् । अत्र निदर्शनं यथा–द्वयोर्ग्रामयोर्वैरे सत्येकस्मिन् ग्रामे कोऽपि कस्याश्चिद्देहिन्या गृहे स्थितः साधुलिंगधारी । अन्यदा च स तस्मिन् विरुद्धग्रामे व्रजन् शय्यातर्या प्रोक्तो 'यन्मम तत्र ग्रामे दुहिता समस्ति, तस्याश्चैवं वाच्यं यदस्मत् प्रभुर्युष्मद्ग्रामोपरि समागच्छन्नस्ति तेन भवद्भिः सावधानतया स्थेयम्' । तेनापि स संदेशकस्तस्याः प्रोक्तस्तया च पतेः, तेन च ग्रामजनस्य । तदनु च तत्पतिप्रभृतिकः सकलोऽपि ग्रामलोकः सज्जीभूतः कलये । अथ च शय्यातर्याः पतिपुत्रौ समेतौ ग्रामजनेन सम तत्र युद्धाय । एवं चोभयोर्ग्रामलोकयोर्मिथः कलहे बहुजनक्षये जायमाने सति शय्यातर्याः पतिपुत्र-जामातरः परासुतां प्रापुः विदिततद्वृत्तांतया च शोकातुरया तया शय्यातर्या स सौवोपाश्रयान्निष्कासितः उड्डाहश्च जने समभूत् । इत्युक्तं किंचिद्दूतीपिंडस्वरूपम् ॥ १८ ॥

अथ निमित्तपिंडस्वरूपं किंचित् प्रोच्यते । तथाहि–यत् त्रिकालविषयलाभालाभसुखदुःखजीवितमरणादिरूपं निमित्तं जनपुरतः प्रकाश्य पिंडो गृह्यते स निमित्तपिंडः । अयमपि महादोषनिबंधनं, तथाहि–कस्मिन्नपि ग्रामे कापि युवती स्वपतौ ग्रामांतरं गते सति तद्विरहार्दिता पप्रच्छ कंचन यतिं लिंगधारिणं 'यन्मम दयितः कदा समेष्यति ग्रामे ?' इति तया पृष्टे सति स प्रोक्तवान् 'प्रातरेष्यति' इति तेनोदिते सति स तया प्रोक्तः 'किमत्राभिज्ञानं ?' तेनोक्तं 'येनात्राभिज्ञानेन भवत्या गुह्यप्रदेशे मशकः प्रवर्त्तते । तेनाभिज्ञानेनैतन्मदुक्तं पतिसमागमनं श्रद्धेयं भवत्या' इति तेनोक्ते संजातप्रत्यया समानंदितचित्ता सा तं मिष्टान्नेन मोदकादिना प्रत्यलाभयत् । अथ च प्रातःसमये सा परिजनं संमील्य गता पतिसंमुखम् ।

अथ च सोऽपि स्वगृहपरिवारमेवमनुशास्य एकदा समागच्छंस्तं निजपरिजनं संमुखमागतं निरीक्ष्य प्रोचिवान् ' कथमद्यमत्र मत्प्रियैवागमनम्? ' इति तेन प्रश्ने कृते सति तन्मातृप्रिया प्रोक्तवती यत् ' पतिकथनात्। ' तदा च तथा पश्यते सर्वः स्वाभिज्ञानकथनादिवार्ताः कथिता, तमाकर्ण्य च स घातुकस्तं मुनिमाकार्य पृष्टवान् ' यद् त्वया कथमेतदवगतम्? ' तेनोक्तं ' शास्त्रबलेन ' चेदेवं तदा कथय ' किमेतस्या वडवाया गर्भे ' तदा तेनोक्तं ' पंचपुंड्रः किशोरकोऽस्ति ' इति मुनिनोक्ते तेन प्रत्ययार्थं तस्या वडवाया उदरं विदारितं निर्गतश्च पंचपुंड्रः किशोरको गर्भः। तं च निरीक्ष्य संजातप्रत्ययेन तेनोक्तं ' चेदेतदेवं नाऽभविष्यत्तदा यत् वडवायाः कृतं तन्मयाऽपि कृतमभविष्यत्। संप्रति मुक्तोऽसि मम समा चिना(?) ' एवं निमित्तपिंडो महादोषत्वोपनिर्बन्धनमयाऽपि। इत्युक्तं किंचिन्निमित्तपिंडस्वरूपम् ॥ १९ ॥

अथाजीवनापिंडस्वरूपं किमपि प्ररूप्यते तथाहि–आजीवनापिंडः पंचप्रकारो जाति १ कुल २ गण ३ कर्म ४ शिल्प ५ भेदतः। तत्र मातृपक्षोद्भूता जातिर्विप्रक्षत्रियादिरूपा वा १ कुलं च पितृपक्षोद्भूतमुग्रभोगादिरूपं वाऽन्यदेवं २ गणस्तु मल्लसारस्वतादिसमूहरूपः ३ कृष्यादिस्यादिकं च कर्म ४ चित्रकर्मसीवनादिरूपं च शिल्पम् ५। एभिर्जात्यादिभिः पञ्चभिः प्रकारैस्तत्पुरस्ताद्‌गृहस्थनिवर्तितोत्कर्षाणां(?) पुरतस्तुल्यमात्मानं निवेद्य भक्तपानादिसमादानं स आजीवनापिंडो यस्यापि भेदतः पंच प्रकारोऽपि परिहार्यः। इत्युक्तं किंचिदाजीवनापिंडस्वरूपम् ॥ २   ॥

अथ वनीपकपिंडस्वरूपं किमप्युच्यते। तथाहि वनीपको भिक्षाचरस्तद्वत् श्रमणब्राह्मणकृपणातिथिश्वानादिभक्तानामात्मानं तद्भक्तं दर्शयित्वा भक्तपानादि समादानं स वनीपकपिंडः। तत्र श्रमणाः पंचप्रकारा निर्ग्रन्थशाक्यतापसगैरिकाजीवि

कमेदतः । ब्राह्मणास्तु प्रसिद्धाः । कृपणास्तु दारिद्र्यांधछिन्नांगादयः । श्वानादीत्यत्रादिशब्दात् काकशुकगवादयोऽपि विज्ञेयाः । अत्र च श्रमणादिभक्ततामकटन श्रीपिंडनिर्युक्तिगाथाभिर्भावनीयं तथाहि–'भुंजंति चित्तकम्मं ठिया व कारुणिअ-दाणरुइणो वा । अवि कामगद्दहेसु वि नस्सई किं पुण जईसु ॥ १ ॥ लोयाणुग्गहकारिसु भूमीदेवेसु बहुफलं दाणं । अवि णाम बंभबंधुसु किं पुण छक्कम्मनिरएसु ॥ २ ॥ किवणेसु दुम्मणेसु अ अबंधवायं-कजुंगिअंगेसु । पूयाहिज्जे लोए दाणपडागं हरइ दिंतो ॥ ३ ॥ पाएण देइ लोओ उवगारिसु परिचिएसु ऽज्झुसिए वा । जो पुण अद्धाखिन्नं अतिहिं पूएइ तं दाणं ॥ ४ ॥ अवि णाम हुज्ज सुलहो, गोणाइणं तणाइ-आहारो । छिच्छिक्कारहयाणं न हु सुलहो होइ सुणगाणं ॥५॥ केलासभवणा एए, आगया गुज्झगा महिं । चरंति जक्खरूवेणं, पूयाऽपूया हिआऽहिआ ॥ ६ ॥ इति एवं च श्रमणब्राह्मणादीनां गुणोत्सर्पणाकरणे मिथ्यात्व-स्थिरीकरणादयो दोषा भवेयुः । यदुक्तं श्रीपिंडनिर्युक्तौ 'मिच्छत्तथिरीकरणं उग्गमदोसा य तेसु वा गच्छे । चडु-कारदिन्नदाणा पच्चत्थिग मा पुणो इंतु ॥ १ ॥' तस्मात् श्रमणेन भक्तादिनिमित्तं नैव विधेया तेषां प्रशंसा इत्युक्तं वनीपकपिंडस्वरूपं ॥ २१ ॥

अथ चिकित्साऽपि प्रोच्यते । तथाहि–चिकित्सा द्विविधा सूक्ष्मा १ बादरा २ । तत्रौषधवैद्ययोः सूचने सूक्ष्मा चिकित्सा १ । बादरा तु वैद्यवदौषधादिकारापणेन पित्ताद्युपशामनवमनविरेचनादिक्रियाकारापणतोऽवसेया २ । आभ्यां सूक्ष्मबादराभ्यां चिकित्साभ्यां यदशनादिग्रहणं सा चिकित्सापिंडः । अयमपि व्याघ्रनिदर्शनेन महादोषपोषनिबंधनत्वाद् वर्जनीयः । तच्चेदं

यथा केनापि भिषग्वरेण काननमध्ये गच्छता चक्षुरामयविपीडिताक्षो व्याघ्रो दृष्टः । स च तारुण्येऽपि चक्षुः संजातकरुणया निजयोगेन तेन सज्जीकृतः स केनचिदौषधेन । ततस्तु तेन बुभुक्षाकोपेन भक्षितः प्रथमतया स एव वैद्यवरः । पश्चात्तु प्रभूत प्राणिप्राणापहारी विचचार वनोदरे । यथैवं व्याघ्रचिकित्सा कर्तुर्वैद्यस्य च प्राणिनां परिणामसुंदरा न समजनि तथा सदारम्भप्रवृत्तानां गृहस्थानामपि चिकित्सा न कस्मैचित् सुखाय संजायते संयतस्य । तस्माच्चिकित्सापिण्डः सर्वथैव वर्जनीयः सर्वसाधुभिः । इत्युक्तं चिकित्सापिण्डस्वरूपम् ॥ १२ ॥

अथ क्रोधपिण्डस्वरूपं प्ररूप्यते । तथाहि—विद्यामन्त्रादिप्रभावसामर्थ्यादिकं तपःप्रभावं तु शापदानादिकं तथा नृपादिप्रियत्वं वल्लभत्वं वा क्रोधफलं वा निरीक्ष्य परस्माद् यानाशनादिकं स क्रोधपिण्डो निगद्यते । अत्र च घृतपूरक्षपक निदर्शनम् । तथाहि—हस्तिकल्पे नगरे एको मासक्षपकः मृतकभक्ते द्विजगृहप्रान्ते भिक्षार्थं गतोऽभूत् । तदा च वेदमर्मज्ञ यथोक्ते घृतपूरेषु दीयमानेषु चिरात्प्रतीक्षमाणस्य क्षोभात्कोपादन्यस्मिन् पुनर्दास्यन्तीत्युक्त्वा स निर्गतो । अथ च दैवयोगात् तत्सदने द्वितीयोऽपि मनुष्यः पञ्चत्वमाप । साधुरपि तथैव तन्मासिके आगाम तदा च तथैव तोस्वदयनपरानिरीक्ष्य चिरेणाप्यनासादितघृतपूरादिपिण्डः कृपा प्रागुक्तमेव प्रोक्त्वा तथैव पश्चाद् वलितः । पुनरपि तदीयमन्दिरे तृतीयोऽपि मनुष्यो मृतः । तन्मासिकेऽपि मुनिस्तथैवोक्त्वा पश्चाद् वलमानो द्वारपालेन निरीक्षितस्तेन च तदभिप्रायं गृहस्वामिने निवेदितम् । तेनापि सहसैव सम्भ्रमेण निवारयितुं क्षमयित्वा स साधुः प्रतिलाभितो घृतपूरैर्यथेष्टम् । यथाऽनेन साधुना क्रोधफलं दर्शयित्वा पिण्डग्रहणं तथाऽन्यैर्न कर्तव्यम् । इत्युक्तं क्रोधपिण्डस्वरूपम् ॥ २१ ॥

अथ मानपिंडस्वरूपं प्रोच्यते । तथाहि लब्धिप्रशंसाभ्यां गर्वितो यदा परेण साध्वादिना त्वमेवास्य कार्यस्य क्षम इत्यादिवचनैरुत्साहं नीतो यद्वा त्वया न किंचित् सिद्ध्यतीत्यादिवचनैः केनापि यतिनापमानितो यद्वा गृहिणोऽभिमानवर्द्धनं कुर्वन् यद् गवेषयति यतिः पिंडं स मानपिंडो निगद्यते । अत्र च सेवतिकाक्षुल्लो निदर्शनम् । तथाहि—कोशलादेशे गिरिपुष्पिते नगरे सेवतिकापर्वणि तरुणश्रमणानां परस्परमुल्लापे सत्येकेनोक्तम् 'अद्य भूयस्योऽपि सेवतिका लभ्यंते, परं यः श्वोऽप्येताः समानयति स लब्धिमान्' एवमेकेनोक्तेऽपरेणोक्तं 'किमेताभिर्घृतगुडरहिताभिः स्तोकाभि'श्चेत्येवमालापे प्रवर्त्तमाने समुत्पन्नाभिमानेनैकेन क्षुल्लकेनोक्तं सप्रतिज्ञं 'यदहमीदृशः श्वः समानयिष्यामि' । अथ च द्वितीयदिने स तदर्थी पर्यटन् कस्यापि महेभ्यस्य सदने तास्तादृशः समालोक्य तद्गेहिनीं ता विविधोक्तिभिः प्रार्थितवान् । तथापि यदा सा न ददाति तदा तेन प्रतिज्ञा कृता यद् यथा तथैता मया समादातव्यास्तदा तथापि संजाताभिमानया तया प्रोक्तं यद्येवं तर्हि मम नासा घर्षणीया । अथ च क्षुल्लकस्तदादानकृते तत्पतिः पर्षत्समासीन कुतोऽपि ज्ञात्वा तत्सविधे गत्वा प्रोचिवान् 'को भवत्सु देवदत्तः ?' इति तेन पृष्टे सति ते पार्षद्याः प्रोचुः 'किं तेन कार्यं' स प्राह 'किंचित् प्रार्थयिष्ये' इति तेनोक्तास्ते पार्षद्याः प्रोचुः 'भो महात्मन्नेतत् शून्यागारे स्वकुमारिकामार्गणम्' एवं च स देवदत्तस्तद्विहित स्वोपहासं समाकर्ण्य संजातामर्षः सन् क्षुल्लकं प्रति प्रोक्तवान् 'भो वद यत् कार्यं तव, सोऽहं देवदत्तोऽस्मि' इति तदुक्तिसमनतरं क्षुल्लकेनोक्तं 'कथयामि कार्यं यदि षण्णां सप्तमस्त्वं न भवसि' इति तेनोक्ते सति संजातकुतुकास्ते सदस्यास्तं प्रति प्रोचुः 'के ते षट् ?' तेनोक्तं 'शृणुत सावधानाः,

श्वेतांगुलि-र्बकोड्डायी, तीर्थस्नाता च किंकरः । हदनो गृधावरिंखी च, षडेते गृहिणीवशाः ॥ १ ॥

एषां चैतत् स्वरूपम् ।

च तेषां षण्णां गृहिणीवशवर्तिनां स्वरूप समाकर्ण्य पार्षद्यैरुक्तं एतैः षड्भिरप्येक एवाऽय देवदत्तः । ' एवं च स देवदत्तः
स्वोपहासमसहमानः क्षुल्लक प्रति प्रोक्तवान् 'किममीषां वचोभिर्याचय यते ! मनोऽभिमतम् ।' तदा च क्षुल्लकेनोक्तं ' यद्येव
तर्हि त्वदीयसदनाद्देहि मह्य साज्यगुडाः प्रभूताः सेवतिकाः ' । अथ चोत्थाय तद्दानार्थमसौ सौवसदनं व्रजत् क्षुल्लेन ज्ञापितो
यथाभूतं तत्प्रियावृत्तांतम् । सोऽपि तं विज्ञाय क्षुल्लं द्वारे स्थापयित्वा गतोऽतर्निकेतनं, गत्वा च कस्यचित् कार्यस्य मिषेण
प्रियां सौधोपर्यारोहयित्वा तेन निश्रेणी दूरीकृता क्षुल्लश्च मध्ये समाकारितः । दत्ताश्च सघृतगुडास्तस्य यथेष्टं सेवतिकाः
क्षुल्लेनापि च पूर्वंकृतनासाघर्षणसंकेतस्मारणकृते स्वनक्रोपर्यङ्गुलीं चालयता गृहीतास्ताः । यथाऽनेन क्षुल्लेन मानपिंडो
गृहीतस्तथाऽन्यैः श्रमणसत्तमैर्न ग्राह्य इत्युक्तं मानपिंडस्वरूपम् ॥ २४ ॥

अथ मायापिंडस्वरूप प्ररूप्यते । तथाहि मायया परवंचनाकया विविधप्रकारं स्वकीयरूपं विधाय यत्समादत्ते यतिः पिंडं
स मायापिंडः । अत्र चाषाढभूतेरुदाहरणम् । तथाहि–राजगृहनगरे सिंहरथो नृपतिः पालयति नीतिमार्गेण साम्राज्यम् ।
अन्यदा च तत्र धर्मरुचिनामानः समाजग्मुः सपरिकराः । तेषां च विनेयो विविधलब्धिनिधानमाषाढभूतिनामा विहरन् नटगेहे
जगाम । तत्र च तेनैको मोदकः समासादितस्तदनु स चिंतयामास अयमाचार्याणां भविष्यति । तदनु काणरूपं कृत्वा
द्वितीयवार गतः तदाऽप्येको मोदकः प्राप्तः, अयमुपाध्यायानाम् । तदनु कुब्जरूपेण तृतीयवारमपि तं जग्राह, अयं च सांघाटि-
कयतेः । अथ च कुष्ठिरूपेण तुरीयवारमपि स तं जग्राह । एतच्च वातायनस्थितेन नटेन निरीक्ष्य चिंतितं यदयं तिष्ठत्य-
स्मदावासे तदा नाट्येन बहुद्रव्यमुपार्जयतीति । तमाकार्य यथेष्टं मोदकान् वितीर्य स तेन भणितो यत्त्वया सर्वदैव समागन्त-

रयोच्छुः कस्मिंश्चिदुत्सवदिने विहरणार्थं गतस्तदलाभात्संजाततदभिलापातिरेकस्तानेव मनसि धारयन् धर्मलाभस्थाने सिंहकेसरा
इत्येव भणन् बभ्राम यामद्वयं यामिन्याः। अथ चार्द्धरात्रेऽपि स तथैव पर्यटन् विज्ञाततदाशयेनविज्ञशिरोमणिना केनचित्
श्रमणोपासकेन सिंहकेसरमोदकैः स्थाल परिपूर्य तैः प्रतिलाभितः। तदनु स्वस्थीभूतं तं स श्राद्धः प्रश्नयामास 'भगवन्!
पूर्वार्द्धप्रत्याख्यानं किं पूर्णं न वे?'ति तदनु दत्तोपयोगेन यतिना ऊर्ध्वमालोकने निशाकरं प्रस्फुरत्करं निरीक्ष्यार्द्धरात्रवेलां
विज्ञाय त प्रति प्रोक्त 'महानुभाग! भव्यं कृतं भवता, यदनाचारप्रवृत्तोऽहं युक्त्या प्रतिबोधितोऽस्मी'ति तत्पुरतः
प्रजल्पन् नगराद् वहिः स निर्जगाम। तत्र च प्रासुकस्थंडिले विधिना तत्परिष्ठापनं कुर्वन् विशुद्धतमाध्यवसायतः पंचमाव-
बोधमवाप। यथाऽनेन मुनिसत्तमेन लोभपिंडो विहृतस्तथाऽन्यैर्यतिभिर्न विहार्यः। इत्युक्तं लोभपिंडस्वरूपम् ॥ २६ ॥
अथ पूर्वपश्चात्संस्तवदोपस्वरूपं उच्यते। तथाहि संस्तवो द्विविधो दायकगुणस्तवरूपः स्वाजन्यप्रकटनरूपश्च। प्रत्येक-
मेकैकोऽपि द्विप्रभेदः पूर्वसंस्तवपश्चात्संस्तवभेदतः। तत्र च दातुर्दानात् प्रथमं गुणस्तवने पूर्वसंस्तवः। स चैवं 'एसो सो
जस्स गुणा वियरंति अवारिया दस दिसासु। इहरा कहासु सुणिमो पच्चक्खं अज्ज दिट्ठोसि ॥ १ ॥'
दानानंतरं तु गुणोत्कीर्त्तने पश्चात्संस्तवः। स चायं विमलीकयम्ह चक्खू जहत्थया वियरिआ गुणा तुब्भं। आसि
पुरा मे संका संपय निस्संकियं जायं ॥ १ ॥' संबंधप्रकटनरूपसंस्तवोऽपि द्विविधः पूर्वपश्चाद्भेदतः। तत्रात्मीयं परकीयं
च वयःस्वरूपं विज्ञाय यादृशी भवती तादृग्विधैव मम माता स्वसा पुत्री वा सममवदित्यादिभणने पूर्वसंस्तवः। पश्चात्-
संस्तवस्तु दायकश्वश्रूश्वसुरादिप्रतिरूपता भणने विज्ञेयः। इत्युक्तं किंचित् पूर्वपश्चात्संस्तवदोपस्वरूपम् ॥ २७ ॥

अथ विद्यामन्त्रादिपिण्डानां स्वरूपं प्ररूप्यते । तत्र जापहोमादिसाध्यस्त्रीदेवताधिष्ठिता वाऽक्षरपङ्क्तिर्विद्या । एतद्विपर्यये तु मन्त्रो विज्ञेयः । चूर्णरूपेण पुनस्तिरोधानवशीकरणादिकार्यसाधका नेत्राञ्जनपादलेपतिलकादयोऽवक्षेपाः । योगास्तु सौभाग्यदौर्भाग्यकराः धीवन्धनधूपादिद्रव्यविशेषरूपाः, अथवा जलस्तंभनयोगगमनादिसाधकाः पादप्रलेपप्रमुखाः । एते च पिण्डार्थं प्रयुज्यमाना महादोषपोषणनिबन्धनम् । अथ विद्यापिण्डे निदर्शनम् । तथाहि—कस्मिंश्चिन्नगरे द्रव्यलिङ्गिनां परस्परालापे तन्मध्यादेकेन केनेदमुक्तं "यदि भगवदाज्ञा भवति तदाऽहमुपासकादानयामि भवतां घृतगुडवसनानि । अथ च तैरनुज्ञातः स गतस्तत्सदने । परन्तु तद्विद्यया वासिताशयेन तेन गृहिणा प्रोक्तं 'किं विलोक्यते भगवन् ?' तेनोक्तं 'घृतगुडवसनादि मह्यं देहि' इति तेनोक्तः स गृही तस्मै ददौ यथेप्सितम् । परन्तु यथास्थितेन तेन तस्यां विद्यायामपहृतायां स गृही एवमूचे केनाऽपि चौरेण हृतो हृतोऽस्मीति । अस्मिंश्च विद्यापिण्डे गृह्यमाणे अवर्णवादप्रवचनापभ्राजनात्मसंयमविराधनादयः प्रभूता दोषाः संभवेयुः । एवं मन्त्रादिपिण्डेष्वपि दोषभावना विधेया ॥ २८ ॥

अथ मन्त्रपिण्डे पादलिप्ताचार्योदाहरणम् । तेन हि मन्त्रध्यानपुरस्सरं स्वजानूपरि प्रदेशे प्रदेशिनीं भ्रामयता मुरुंडनृपतेः शिरोऽर्तिप्रशमं नीता, तदनु तेन तत्सदनासनादि समासादितं । यदुक्तं श्रीपिण्डनिर्युक्तौ 'जह जह पएसिणिं जाणुगम्मि पालित्तओ भमाडेइ । तह तह सीसे वियणा पणस्सइ मुरुंडरायस्स ॥ २९ ॥

अथ चूर्णपिण्डे क्षुल्लककथा । तथाहि—पाटलीपुरनगरे केचिदाचार्याः श्रीमद्वाचका दुर्भिक्षे स्वगच्छमन्यत्र विहार्य तस्थिवांसः । क्षुल्लकद्वयं च विहार्यमाणमपि तेषां पार्श्वे स्थितम् । अथ च दुर्भिक्षे भक्ष्याहाराप्राप्त्या तन्नृपतेश्चन्द्रगुप्तस्य भोजना

वसरे स्थालपार्श्वयोरुपविश्य तन्मध्यतः प्रतिदिनमाहारग्रहणं कुर्वंतस्तौ चूर्णांजनांजितनयनतयाऽदृश्यरूपौ । अतश्च चंद्रगुप्ते-
नरपतेरवमौदर्येण देहदौर्बल्य समालोक्य निरामयकायतायामपि चतुर्बुद्धिनिधिश्चणकात्मजश्चिंतयामास । नूनं कोऽपि
भोजनावसरेऽजनसिद्धः क्षमापालस्थालगता रसवतीं भुजन्नस्ति, तेनावमौदर्यतो महीपतितनुकृशता जायमानाऽस्तीति विचिंत्य;
तत्परिज्ञानकृते नृपतिजेमनसमये सौधद्वारं पिधाय धूमस्तेन कारितः । ततश्च तौ क्षुल्लौ नयनाऽञ्जनगलनात् साक्षान्निरीक्षितौ
तेन सचिवपुंगवेन। निरीक्ष्य च तयोर्विधाय रोप तदनु तेन श्रीगुरव उपालब्धाः । एव चूर्णपिंडो महादोपपोपहेतुः ॥ २० ॥
अथ योगपिंडे दृष्टांतस्तथाहि–नद्युपकंठे ब्रह्मद्वीपे पचशती तापसानां परिवसति स्म। ते च तापमाः पारणकदिने कुलपति-
कारितपादलेपाः स्रोतस्विना समुत्तीर्य सलिलोपरि चलनेन समायांति । तदा जने एवं प्रघोपोऽभूत् यदेते तपसो माहात्म्येन
जलोपरि चलंतोऽपि न निमज्जति एवं जने तेपां प्रशंसा, जैनेपु च न कोऽपि तपोलब्धिविशेप इत्यार्हतमतनिंदा च समभूत् ।
एतच्च श्राद्धैः श्रीआर्यसमिताचार्याणां निवेदितम्। गुरुभिरुक्तं यदेते युष्माभिश्चलनधावनपूर्वं भोजनीया यथैपां पादलेपोऽपैति,
तदनु चलनक्षालनपुरस्सर भोजयित्वा नागरिकजनैः सममनिच्छंतोऽपि तटीकूल यावत्ते संप्रेपिताः । तदनु ते चिंतातुरा जात-
स्य यद्भवत्विति विचिंत्य सरिद्वारिणि प्रविष्टास्तत्र निमज्जंतो नद्यां योगचूर्णं निक्षिप्य रक्षिताः श्रीआर्यसमिताचार्य्यैस्तदनु
गुरुमाहात्म्य निरीक्ष्य प्रतिबुद्धाः प्रव्रजितास्तद्गुरूणां समीपे जने जिनमतप्रभावना च समभूत् । यथा एभिस्तापसैः पादलेपं
विधाय जने स्वप्रभावनां कृत्वा पिंडो गृहीतस्तथा साधुभिर्न ग्राह्यः । अर्हत्मतप्रभावना कृते तु एते विद्यामंत्रादयो यतनया
श्रीआर्यखपुटाचार्यादिभिरिव प्रयोक्तव्या दर्शनोद्दीपकत्वात् ॥ २१ ॥ इत्युक्तं विद्यापिंडादिस्वरूपम् ।

तयोः क्षालने पश्चात्कर्म, ईषल्लक्ष्यमाणजलस्नेहं तु स्निग्धं, स्पष्टं प्रतीयमाननीरार्द्रं तूदकार्द्रम् । वनस्पतिकायम्रक्षितं तु प्रत्ये-
कानंतवनस्पतिम्रक्षितमेदाद् द्विविधम् । अचित्तम्रक्षितं तु गर्हितेतरसंसक्ताचित्तम्रक्षितरूप, तत्र संसजंति लगंति सलेपत्वा-
त्कीटिकामक्षिकादयः प्राणिनो येषु तानि संसक्तानि घृतगुडतैलप्रभृतिकानि । अथवा संसजंति उत्पद्यंते जंतवो येषु तानि
ससक्तानि दिनद्वयातीतदधिप्रभृतीनि । उक्तं च श्रीपिंडनिर्युक्तौ संसज्जिमेहिं वज्जं, अगरहिएहिं पि गोरसदवेहिं ।
महुघयतेल्लगुडेहिं य, मा मच्छिपिपीलियाघाओ ॥ १ ॥ एव त्रिविधसचित्तगर्हितेतरसंसक्ताचितम्रक्षितहस्तभाजनाभ्यां
दीयमानमशनादि वर्जनीय यतिसत्तमैः । इत्युक्तं म्रक्षितदोषस्वरूपम् ॥ ३४ ॥

अथ निक्षिप्तदोषस्वरूपं किंचित् प्रपञ्च्यते । तथाहि निक्षिप्तं पृथिवीदकपावकपवनप्रत्येकानंतवनस्पतिकायेषु सचित्तेषु
मिश्रेषु वा तथा द्वींद्रियादिषु त्रसेष्वनतरतया परम्परतयाऽवस्थापितमित्यनंतरपरंपरामेदाद् द्विप्रकारमपि निक्षिप्तंप रिहार्यम् ।
इत्युक्तं निक्षिप्तस्वरूपम् ॥ ३५ ॥

अथ पिहितस्वरूपं किमप्युच्यते तथाहि–पिहितशब्देन देयमशनादि केनाप्यपरवस्तुना छादितमुच्यते । अत्र च चतु-
र्भंगी सचित्तेन सचित्तम् १ अचित्तेन सचित्तं २ सचित्तेनाचित्तम् ३ अचित्तेनाऽचित्तम् ४ । एतेषु चतुर्षु भंगेषु प्रथमभगत्रयम-
शुद्धम्, अंत्यभंगस्तु शुद्धः । तत्रापि गुरुलघुपदाभ्यां प्राग् चतुर्भंगी भवति । तेषु द्वितीयतुरीयभंगौ शुद्धौ निरपायत्वात् ।
शेषौ द्वौ पुनरशुद्धौ सापायत्वात् । इत्युक्तः पिहितदोषः ॥ ३६ ॥

अथ संहृतदोषस्वरूपं प्ररूप्यते । तथाहि–येन हस्तेन भाजने वा कृत्वा दात्री यतेरशनादि विश्राणितुं वांछति तत्रा-

परं किमप्यदेयमस्ति सचित्तमचित्तं मिश्रं वा तदन्यत्र पृथिव्यादौ भाजनादौ वा सचित्तेऽचित्ते मिश्रे वा क्षिप्त्वा तेन रिक्तेन भाजनेन वा दत्त्वा यदा दत्ते साधोः तदा संहृतदोषो भवेत्। अत्र सचित्ताऽचित्तमिश्रभेदैस्त्रिसप्तचतुर्भंग्यो भवंति। तथाहि– प्रथमा चतुर्भंगी सचित्तमिश्रपदाभ्यां, द्वितीया सचित्ताचित्तपदाभ्यां, तृतीया मिश्राचित्तपदाभ्याम्। तत्र सचित्ते सचित्तं संहृतं १ मिश्रे सचित्तं २ सचित्ते मिश्रं ३ मिश्रे मिश्रं ४ चेति प्रथमा। अचित्ते सचित्तं १ सचित्ते सचित्तं २ सचित्ते अचित्तम् ३ अचित्ते अचित्त ४ मिति द्वितीया। तथा मिश्रे मिश्रम् १ अचित्ते मिश्रं २ मिश्रे अचित्तम् ३ अचित्ते अचित्तमिति ४ तृतीया। अत्र प्रथमचतुर्भंग्यां सर्वेष्वपि भंगेषु न कल्पते। द्वयोस्तु प्रथमेषु त्रिषु भंगेषु प्रतिषेधश्चरमे पुनर्भजना। अत्र च षड्जीवनिकायानपेक्ष्य स्वस्थानपरस्थानविषया भेदतश्चैव पारंपर्येण च बहूनि भंगशतानि भवंति। एतेषां च भंगानां मध्ये यत् सचित्तमिश्रसंहृतदोषस्तत्र न कल्पते। शेषेषु पुनर्भंगेषु कल्पते। तथापि स्तोके स्तोकं १ स्तोके बहुकं २ बहुके स्तोकं ३ बहुके बहुकम् ४। एवं स्तोकबहुपदाभ्यां चतुर्भंगी भवति। तत्रापि प्रथमतृतीयभंगावाचीर्णौ द्वौ त्वनाचीर्णौ। अत्रापि पेरस्समारं भाजनदातृत्वस्य स्थितिः तदा ग्राह्य नेतरथा भाजनभंगषट्कायवधादिदोषसंभवात्। उक्तं च श्रीपिंडनिर्युक्तौ 'अत्थ उ थोवे थोवं, छुवे उल्लं च सुहरं तं गहणं (तेम्मं)। जइ तं तु समुक्खेउ, थोवाहारं पयइ भज ॥१॥ इत्युक्तः संहृतदोषः १०।

अथ दायकदोषस्वरूपं किंचिदुच्यते। तथाहि—स्थविरअप्रभुपंडकवेपमानज्वरितांधाव्यक्तमत्तोन्मत्तछिन्नकरचरणगलत्कुष्ठ-निगडबद्धपादुकारूढखंडनादिभिर्दायकैर्दीयमानस्य समादाने दायकदोषः स्यात्। तत्र स्थविरः षष्टिवर्षोपरिवर्ती वयस्येव चि

गृह्यमाणे आहारे भाजनाहारनिपतनषड्जीवनिकायविराधनादयो दोषाः संभवेयुः । स्थविरोऽपि चेद् दृढसंहननोऽहीनपंचेंद्रि-
यश्च स्यात्तदा तत्करविहरणेऽपि न दोषः १ । तथाऽप्रभुर्वितीर्यमाणाशनादेरस्वामी भृतकादिस्तेन दीयमाने प्रभोरप्रीतिः स्यात्
२ । तथा पडको नपुंसकस्तेन हि वितीर्यमाणे जनापवादशंकादयो दोषा भवेयुः ३ । तथा वेपमानः कंपमानस्तेन दीयमाने
भाजनबहिरशनादिपतनपरिशाटनभाजनभंगादयो दोषाः ४ । तथा ज्वरितो ज्वररोगपीडितस्तत्पाणिना विहरणे हि ज्वर-
सक्रमणजनापवादप्रभृतयो दोषाः ५ । तथाऽधेन दीयमाने षड्जीवनिकायवधसंचलनपतनभाजनबहिरशनादिप्रक्षेपणजन-
गर्हादयो दोषाः ६ । तथाऽव्यक्तो बालो जन्मतो वर्षाऽष्टकांतर्वर्ती, तदन्नभाजनं हस्तात् पातयति देयं वा पात्राद् बहिः
क्षिपति अधिकं वा विश्राणयति, ततश्च तज्जननीप्रद्वेषपट्कायवधादयो दोषाः ७ । तथा मत्तः मदिरापानोत्थमदविकलस्तेन
दीयमाने आलिङ्गनाहननपात्रभङ्गगालीप्रदानप्रवचनखिंसाद्या दोषाः ८ । तथोन्मत्तस्तत्र पीतमद्यवद्दोषा वाच्याः ९ । तथा
छिन्नकरचरणसकाशाद् भिक्षादाने हि जनापवादादयो दोषाः १० । गलत्कुष्ठसकाशाद् भिक्षाग्रहणे हि तद्रोगसंक्रमादयो
दोषाः ११ । तथा निगडितो लोहमयबंधनेन बद्धः, अंदुकितश्च दारुमयहस्तबंधनेन बद्धः । एताभ्यां सकाशे भिक्षासमादाने
तद्बाधासंभवादयो दोषाः १२ । १३ । तथा पादुकारूढः काष्ठमयोपानत्समारूढः, तत्सकाशादाहारग्रहणे हि जीवविरा-
धनादयो दोषाः । पादुकारूढादिभिरित्यत्रादिशब्दात् कंडयंत्यादयो दायकभेदाः संगृहीताः । तत्र मुशलघातैरुदूखलप्रक्षि-
प्तानि शाल्यादिबीजानि श्लक्ष्णयंती कंडयती प्रोच्यते । तया च दीयमानेऽशनादिके बीजसंघट्टादयो दोषाः १५ ॥ तथा
या स्त्री जीरकलवणादि शिलाया पिनष्टि मृद्नाति तयाऽपि दीयमाने पूर्वोक्त एव दोषः १६ । तथा या भृज्जति स्फोटयति

शिशोर्मार्जारादिभ्यो विनाशसंभवः । निक्षिप्यमाणस्योत्क्षिप्यमाणस्य च शिशोरतिसौकुमार्येण परितापनादयो दोषाः ३० । तथा षट्कायान् हस्ते गृह्णन्त्या अथवा तानेवाऽनतरं परम्परं वा घट्टयंत्याः षट्कायारंभं कुर्वत्या वा तथा श्रमणमागतं निरीक्ष्य षट्कायान् भूमौ निक्षिपन्त्या वा हस्तेन गृह्यमाणे षट्कायविराधनादयो दोषाः ३१ । ३२ । ३३ । ३४ । तथा या साधारणं बह्वायत्त दत्ते तत्राऽनिसृष्टवद्दोषा वाच्याः ३५ । तथा या चौर्यं कृत्वा दत्ते तत्र तु दोषाः प्रतीता एव ३६ । तथा या परकीयमिदमित्युक्त्वा वितरति तत्र स्वामिनाऽननुज्ञातेऽदत्तादानादयो दोषाः ३७ । तथा या पदार्थं परनिमित्तं कार्पटिकादिदाननिमित्त कल्पितं दत्ते तत्रान्तरायकरणादयो दोषाः ३८ । अत्र च कंडयंतीत्यादिषु प्रायः स्त्रीणामेव मुख्यत्वात्तद्विशेषणकरणम्, एभिः स्थविरादिभिर्दायकैर्दीयमानमुत्सर्गतो वर्जनीयम् । अपवादपदे तु पूर्वोक्ततथाविधदोषासंभवे विहार्यमपि इत्युक्तं किंचिद्दायकदोषस्वरूपम् ॥ ३८ ॥

अथोन्मिश्रदोषस्वरूपं किंचिदुच्यते । तथाहि अनाभोगादौत्सुक्यात् स्तोकत्वात् प्रत्यनीकत्वाद् वा साधूनां दानविषये योग्यमयोग्य च द्रव्यमेकीकृत्य यद्दीयते तदुन्मिश्रमुच्यते । अत्र च मिश्रसचित्ताचित्तपदैः संहृतवच्चतुर्भंग्यो वाच्याः । तत्र च मिश्रसचित्तमिश्रितमकल्प्यम्, अचित्तमिश्रिते तु स्तोकबहुपदाभ्यां संहृतवच्चतुर्भंगी भवति । तत्र प्रथमतृतीयभंगौ शुद्धौ द्वौ त्वशुद्धौ । इत्युक्तं किंचिदुन्मिश्रदोषस्वरूपम् ॥ ३९ ॥

अथाऽपरिणतदोषस्वरूपं प्ररूप्यते । तथाहि अपरिणतं द्विविध द्रव्यापरिणतं भावापरिणतं च । तत्र यद्दातव्यमेवाप्रासुकं स्यात्तद् द्रव्यापरिणतम् १ । भावस्त्वध्यवसायः, स च देयवस्तुस्वामिनोर्द्वयोर्मध्यादेकस्य परिणतो दानविषये इतरस्य तु

तादृग्विधा न शक्तिः, किंतु कस्यचिदेव भवेत्तेन तथा नोपदिष्टं श्रीमदार्हतसमये । पुनराह विनेयः ननु महाराष्ट्राः सदैव सौवीरकूरमात्रभोजिनस्तेऽपि च सेवार्त्तसंहनिनः, एवं च तेऽपि चेद् यापयति यावज्जीवं तेन भोजनेन तर्हि यतयस्तु मोक्षार्थिनस्तेन तेषां विशेषत एव युक्त पूर्वोक्तयुक्त्या यापयितुं यावज्जीवम्, अत्रोत्तर साधूनां हि ग्रीष्मसमयेऽप्याहार उपधिः शय्या च एतत्त्रितय शीत स्यात् । तत्राहारस्य शीतता गोचरचर्यायां गतस्य यतेः स्तोकस्तोकाहारग्रहणेन प्रभूतस्य वेलाविलंबस्य संभवात् । उपधेस्तु प्रावृट्कालप्रारंभ एव प्रक्षालनेन मलिनतया । शय्यायास्तु वह्निप्रत्यासन्नताऽभावादिहेतुभिः तेन शीतत्रितययोगाद् बहिरतश्च शीततया जठराग्नेरुपघातः स्यात्ततश्च क्षुन्मंदताऽजीर्णतादयो दोषाः संभवेर्युस्तेन तक्रादिसमादानमनुज्ञातं भगवद्भिर्यतीनां यतस्तक्रादिनापि जठरपिठरस्थितोऽग्निः प्रदीप्तः स्यात्तक्रादेरपि तथा स्वभाववत्त्वात् । वटिकोन्मिश्रतीमनसर्पिःप्रभृतीनां तु भजना । ग्लानत्वादिप्रयोजनोत्पत्तावेव तदादानस्य समनुज्ञातत्वात् । यतस्तानि प्रभूतलेपानि रसगृद्धिजनकानि च । गृहस्थाना पुनराहारोपधिशय्यारूपत्रितय शीतत्वविप्युष्णं भवेत्तेन तेषां तक्रादिसमादानं विनापि बाह्याऽभ्यंतरतापयोगादाहारो जीर्यते । तत्र बाह्यः शय्योपधियोगात्ताप आभ्यंतरस्त्वाहारयोगात्, तिय सीयं समणाणं तिय उण्ह गिहीण तेणणुन्नायं । तक्काईणं गहणं कट्टरमाईसु भइयव्वं ॥ १ ॥ इति श्रीपिंडनिर्युक्तिवचनात् । इति प्रासंगिकमुक्त्वा प्रस्तुतं प्रस्तूयते । तथाहि अत्र च लिप्तदोषे संसृष्टासंसृष्टहस्तभाजनसावशेषनिरवशेषद्रव्यैः कृत्वाऽष्टौ भंगा भवेयुः । तथाहि संसृष्टः पाणिः संसृष्टं भाजनं सावशेषं द्रव्यम् ॥ १ ॥ हस्तभाजने संसृष्टे द्रव्यं तु निरवशेषम् ॥ २ ॥ संसृष्टः करो भाजनं त्वऽसंसृष्टं द्रव्यं च सावशेषम् ॥ ३ ॥ संसृष्टः पाणिरसंसृष्टं भाजनं द्रव्यं तु निरवशेषम् ॥ ४ ॥ असंसृष्टो हस्तः

संसृष्टं भाजनं द्रव्यं तु सावशेषम् ॥ ५ ॥ असंसृष्टः करः संसृष्टं भाजनं द्रव्यं तु निरवशेषम् ॥ ६ ॥ असंसृष्टः पाणिरसंसृष्टं भाजनं द्रव्यं तु सावशेषम् ॥ ७ ॥ हस्तभाजने असंसृष्टे द्रव्यं तु निरवशेषम् ॥ ८ ॥ एतेषां भङ्गानां मध्ये प्रथमतृतीयपंचमसप्तमभंगेषु कल्पते सावशेषे द्रव्ये सति पश्चात्कर्मासंभवात् । समभंगेषु तु न कल्पते द्रव्यस्य निरवशेषतया पश्चात्कर्मादिदोषसंभवात् । इत्युक्तं लिप्तदोषस्वरूपम् ॥ ४१ ॥

अथ छर्दितदोषस्वरूपं किमपि कथ्यते । दध्यादि परिवेषणादि दीयमानं किंचिद् भूमौ निपतति तच्छर्दितमिति कीर्त्यते । तथोष्णस्य ग्रहणे दायके ग्राहके पृथ्वीकायादयो वा दह्यन्ते यथा । शीतग्रहणेऽपि च तेषां विराधना । उक्तं च श्रीपिंडनिर्युक्तौ उसिणस्स छड्डणे देंतओ व, डज्झेज्ज कायदाहो वा । सीयपडणम्मि काया, पडिए महुबिंदुआहरणं ॥ १ ॥ अत्र च मधुबिन्दुना निदर्शनं तथाहि—वंपायां पुरि धर्मघोषनामाऽमात्यः । तस्य च प्रियंगुनाम्नी प्राणप्रिया । स चान्यदा विषयविरक्तो गृहीतचारित्रः । कालेन श्रीगुरुचरणनलिनसंभ्रमतया गृहीतैकादशाङ्गश्रुत एकाकिविहारप्रतिमां प्रपन्नो विहरन् वारत्तकपुरेऽभयसेननृपमन्त्रिसदने भिक्षार्थं गतः । तत्र च दीयमानघृतपायसतो मधुबिन्दुं भूमौ निपतन्तं निरीक्ष्य भिक्षामनादायैव स निर्गतः । अथ वातायनस्थितो मिथो तस्मिन्निर्गते गवाक्षस्थो मन्त्री तस्मिन्ननादायभिक्षत्वात् कुपितः सन् यावत् किंचिद्विचिन्तयति तावत्तत्र मधुबिन्दौ मक्षिका समुपविष्टा, तां च समालोक्य तत्र गृहगोधा समेता, तां प्रति सरटस्य प्रति मार्जारस्तं प्रत्यासन्नग्रामगतराजपुत्रसारमेयस्तं प्रति वास्तव्यश्वा तयोश्च मिथो युद्धे तत् स्वामिनोरपि युद्धमजनि । एतच्च सर्वं गवाक्षस्थो मन्त्री निरीक्ष्य तत उत्तीर्य निवारयामास सारमेययुद्धम् पुनः प्रवृत्तौ, चिन्तयामास च चेतसि यदनेनैव

निमित्तेन मुनिना भिक्षा न जगृहे । तदयं धन्य इत्यादि भावयन् स समुत्पन्नजातिस्मरणः प्रव्रज्यामादाय क्रमेण विहरन्
सुसुमारपुरे प्रासनान् । तत्र च स तस्थौ प्रतिमया देवकुले । तत्र च धुंधुमारनामा नृपतिस्तत्तनया चाप्रतिरूपरूपाऽंगारवती
नामधेया । ता च याचितवाँश्चंडप्रद्योतः । स च न दत्तवाँस्ताम्, तन्निमित्तं च चंडप्रद्योतेन तत्पुरं परितो वेष्टितं कियत्यपि
समये व्यतीते नृपपृष्टो नैमित्तिक उपश्रुतिं विलोकयन् यामिन्यां भापयामास डिंमान् । तदा च ते भीताः प्रतिमास्थितं
वारत्तकमुनिं शरण प्रपन्नाः । मुनिनाऽपि सहसा ते न भेतव्यं भवद्भिरित्युक्ताः, तदा च तन्मुनिवचनं निशम्य प्रमुदितमनो
नैमित्तिको नृपतिं विज्ञपयामास 'स्वामिंस्तव मुन्युक्तशकुनबलाद् विजयो भावी' इति तेनोक्ते तेन नृपेण युद्धं विधाय चंड-
प्रद्योतनृपतिर्बद्धः । पुनः कियताऽपि कालेन तं विमुच्य सत्कारपुरस्सर सौशांगोद्भवां स विवाहितः । कियति च दिनानि स
पुरे स्थापितः । अन्यदा च चंडप्रद्योतेन सा पृष्टा 'तव पित्रा स्वल्पबलेनाप्यहं कथं बद्धः ?' तयोक्तं 'वारत्तकयत्युक्त-
शकुनबला'दिति तयोक्ते तेन स मुनिर्नैमित्तिकयते ! तुभ्यं नमो भवत्विति हसितः । तदा च स यतिः प्रव्रज्यादिवसादारभ्य
तमतीचारमपश्यँस्तं शिशुव्यतिकरं सस्मार । स्मृत्वा च तमतीचारं प्रतिक्रम्य केवलश्रियमवाप्य स ययौ महोदयम् ॥ ४२ ॥
इत्युक्ता यतिगृहस्थोभयसंभवा दशग्रहणैषणादोषाः ।

अथ परिभोगैषणादोषपंचकस्वरूपं किंचित्प्रपंच्यते । तथाहि संयोजनाऽप्रमाणाङ्गारधूमकारणस्वरूपाः पंचपरिभोगैषणा
दोषा भवति । तत्र रसगृद्ध्याऽन्योन्यद्रव्यसंयोजन संयोजना । सा च द्विधा द्रव्यतो भावतश्च । तत्र द्रव्यतो द्विविधा उपा-
श्रयाद् बहिरंतश्च भिक्षामादत्ते च यद् रसनिमित्तं क्षीरखंडादि द्रव्याणां संयोगं जनयति सा बहिः संयोजना । वसतेरंतस्तु

संसृष्टं मात्रकं द्रव्यं तु सावशेषम् ॥ ५ ॥ असंसृष्टः करः संसृष्टं मात्रकं द्रव्यं तु निरवशेषम् ॥ ६ ॥ असंसृष्टः पाणिरसंसृष्टं मात्रकं द्रव्यं तु सावशेषम् ॥ ७ ॥ हस्तमात्रके असंसृष्टे द्रव्यं तु निरवशेषम् ॥ ८ ॥ एतेषां भङ्गानां मध्ये प्रथमतृतीयपञ्चम सप्तमभङ्गेषु कल्पते सावशेषे द्रव्ये सति पश्चात्कर्मासंभवात् । समभङ्गेषु तु न कल्पते द्रव्यस्य निरवशेषतया पश्चात्कर्मादि दोषसंभवात् । इत्युक्तं लिप्तदोषस्वरूपम् ॥ ९१ ॥

अथ छर्दितदोषस्वरूपं किमपि कथ्यते । तथाहि यदशनादि दीयमानं किञ्चिद् भूमौ निपतति तच्छर्दितमिति कीर्त्यते । तत्रोष्णस्य छर्दने दायकं दहति पृथ्वीकायादयो वा दह्यन्ते कायाः । शीतपतनेऽपि च तेषां विराधना । उक्तं च श्रीपिंडनिर्युक्तौ उसिणस्स छड्डणे देंतओ व, डज्झेज्ज कायदाहो वा । सीयपडणम्मि काया, पडिए महुबिंदुआहरणं ॥ १ ॥ अत्र च मधुबिन्दुना निदर्शनं तथाहि—चंपायां पुरि धर्मघोषनामाऽमात्यः । तस्य च प्रियङ्गुनाम्नी प्राणप्रिया । स चान्यदा विषयविरक्तो गृहीतचारित्रः । क्रमेण श्रीगुरुवचनजनितमुत्तमगीतार्थतादिगुण एकाकिविहारप्रतिमां प्रपन्नो विहरन् वारत्तकपुरेऽभयसेनमन्त्रिसदने भिक्षार्थं गतः । तत्र च दीयमानपायसमधुपायसान्मधुबिन्दुमवनौ निपतन्तं निरीक्ष्य भिक्षामनादायैव स निर्गतः । अथ पानादानमिषे भिक्षौ तस्मिन्निर्गते गवाक्षस्थो मंत्री तस्मिन्ननादानविषयत्वाद् व्यथितः सन् यावत् किंचिद्विचिन्तयति तावत्तत्र मधुबिन्दौ मक्षिका समुपविष्टा, तां च समालोक्य तत्र गृहगोधा समेता, तां प्रति सरटस्य प्रति मार्जारस्तं ग्रस्याभ्यागमममपामतः अमुष्मात्सारमेयस्य प्रतिवास्तव्यः या तयोश्च मिथो युद्धे तत् स्वामिनोरपि युद्धमभूत् । एतच्च सर्वं गवाक्षस्थो मन्त्री निरीक्ष्य तत् स्ववीर्यं निवारयामास सारमेययुग्मम् युद्ध्यमानौ चिंतयामास च चेतसि यद्यनेनैव

भक्तपानाभ्यां पष्ठ-
धीरा जायामायं च उमं च ॥ १ ॥ तथा साधुना तथाऽऽहारो ग्राह्यो यथोदरस्य पंचभागाः पूर्यंते भक्तपानाभ्यां पष्ठ-
स्तु रिक्तोऽवतिष्ठति । तत्रापि साधारणकाले त्रयः सव्यजनस्याशनस्य द्वौ च पानस्य । शीतकाले पुनरेको द्वौ वा पानस्य
शेषा भक्तस्य । उष्णकाले तु द्वौ त्रयो वा भागाः पानस्य शेषा भक्तस्य समादेयाः । उक्तं च तत्रैव अद्धमसणस्स सव्वं-
जणस्स कुज्जा दवस्स दो भागे। वाऊपवियारणट्ठा छब्भायं ऊणयं कुज्जा ॥ १ ॥ सीओ उसिणो साहारणो अ
कालो तिहा मुणेयव्वो । साहारणम्मि काले तत्थाहारे इमा मत्ता ॥ २ ॥ सीए दवस्स एगो भत्ते चत्तारि
अहव दो पाणे । उसिणे दवस्स दोण्णि अ तिण्णि व सेसा उ भत्तस्स ॥ ३ ॥ एवमुक्तप्रमाणमाहारं गृह्णन् साधुर्न
लिप्यते । यदुक्तं श्रीपिंडनिर्युक्तौ पगामं च निगामं च पनीयं भत्तपाणमाहारे । अइबहुयं अइबहुसो पमाण
दोसो मुणेयव्वो ॥ १ ॥ बत्तीसाइ परेणं पगम जिचं तमेव उ निकामं । जं पुण गलंतनेहं पणीयमिति तं
वुहा बेंति ॥ २ ॥ अइबहुअं अइबहुसो अइप्पमाणेण भोयणं भोत्तुं । हाएज्ज व वामिज्ज व मारिज्ज व तं
अजीरंतं ॥ ३ ॥ बहुयातीयमइयहुं अइबहुसो तिन्नि तिन्नि व परेणं । तं चिअ अइप्पमाणं भुंजइ जं वा
अतिप्पंतो ॥ ४ ॥ प्रमाणातिक्रमदोपदुष्टाहारग्रहणे च वमनविरेचनमरणकामोद्दीपनादयः प्रभूताः प्रादुर्भवंति दोपाः ।
प्रमाणोपेताहाराभ्यवहारे च ते न संभवेयुः । यदुक्तं अप्पाहारस्स न इंदियाइं विसएसु संपयट्टंति । नेव
किलम्मइ तवसा रसेसु न वि मुज्झए आवि ॥ १ ॥ तथाहि आहारानि आहारा ॥ १ ॥ तस्मात् प्रमाणोपेत
एवाहारो ग्राह्यः । इत्युक्तप्रमाणदोषस्वरूपं ॥ २ ॥

शेषा पात्रे कवले वदने च। तत्र यद् द्रव्यं यस्य द्रव्यस्य रसविशेषापादि तस्य तेन सह पात्रे संयोजने पात्रविषया संयोजना, यथा दुग्धशर्करादेः पात्रान्तः संयोजनम् १। यदा तु कवलवपोत्पाटितं पूपिकादि गुडादिमिश्रितं करोति तदा कवलविषया संयोजना २। यदा च मुखे कवलं प्रक्षिप्य वस्तु शाकं मुखे प्रक्षिपति यद्वा तत्र मंडकादि मुखे प्रक्षिप्य वस्तु गुडादिकं प्रक्षिपति तदा मुखविषया संयोजना ३। एनां तु त्रिविधां द्रव्यतः संयोजनां कुर्वन् रसगृद्धः सन् यदा स्वात्मं संयोजयति ज्ञानावरणीयादकर्मभिः सम सा भावतः संयोजना। उक्तं च श्रीपिंडनिर्युक्तौ संजोयणा उ भावे, संजोएऊण ताणि दव्वाइं। संजोयइ कम्मेणं कम्मेण भव तओ दुक्खं ॥ १ ॥ विविधिविहारदिण्डुग्धपृष्ठादि निर्गमभावे स्वनुज्ञाता मा भवगम्भीर्यवस्य परिहाणे हि श्रीटिकादियदुमसोपयावसंभवेन महद् प्रायश्चित्त समेति। उक्तं च तत्रैव पत्तेय पउरभत्ते, सुत्तुव्वरिए य सेसगमणट्ठा। दिट्ठो संजोगो खलु, अहवमो तस्सिमो होइ ॥ १ ॥ पतो रसोत्पत्तकः एव संयोगो निषिद्धस्तयो स्वामाथमं कप्पते। उक्तं च तत्रैव रसहेउं पडिसिद्धो, संजोगो कप्पए गिलाणट्ठा। जस्स च अमत्तछंदो, सुहोचिओऽभाविओ जो य ॥ १ ॥ इत्युक्तः संयोजनादोषः १।

अथ प्रमाणातिक्रमदोषस्वरूपं प्ररूप्यते। तथाऽशीतककवलप्रमाणा द्वात्रिंशत् कवलाः साधूनामाहारमानमुच्यते साध्वीनां च तेऽष्टाविंशतिः। यदुक्तं श्रीपिंडनिर्युक्तौ बत्तीसं किर कवला, आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥ १ ॥ द्वात्रिंशत्कवलानां मध्ये एकेनापि कवलेन न्यूनमाहारं गृह्णन् मायुर्यान्नाभाव्योऽवमोदरिकत्वं च प्रोच्यते। यदुक्तं तत्रैव एत्तो किणाइ हीणं, अद्धं अवड्ढं च आहारं। साहुस्स बिंति

पूर्यते भक्तपानाभ्यां षष्ठ-
धीरा जायामायं च उमं च ॥ १ ॥ तथा साधुना तथाऽऽहारो ग्राह्यो यथोदरस्य पंचभागाः पूर्यते भक्तपानाभ्यां षष्ठ-
स्तु रिक्तोऽवतिष्ठति । तत्रापि साधारणकाले त्रयः सव्यजनस्याशनस्य द्वौ च पानस्य । शीतकाले पुनरेको द्वौ वा पानस्य
शेषा भक्तस्य । उष्णकाले तु द्वौ त्रयो वा भागाः पानस्य शेषा भक्तस्य समादेयाः । उक्तं च तत्रैव अद्धमसणस्स सव्वं-
जणस्स कुज्जा दवस्स दो भागे। वाऊपवियारणट्ठा छब्भायं ऊणयं कुज्जा ॥ १ ॥ सीओ उसिणो साहारणो अ
कालो तिहा मुणेयव्वो । साहारणम्मि काले तत्थाहारे इमा मत्ता ॥ २ ॥ सीए दवस्स एगो भत्ते चत्तारि
अहव दो पाणे। उसिणे दवस्स दोण्णि अ तिण्णि व सेसा उ भत्तस्स ॥ ३ ॥ एवमुक्तप्रमाणमाहार गृह्णन् साधुर्न
लिप्यते। यदुक्तं श्रीपिंडनिर्युक्तौ पगामं च निगामं च पनीयं भत्तपाणमाहारे । अइबहुयं अइबहुसो पमाण
दोसो मुणेयव्वो ॥ १ ॥ बत्तीसाइ परेणं पगम जिव्वं तमेव उ निकामं । जं पुण गलंतनेहं पणीयमिति तं
बुहा बेंति ॥ २ ॥ अइबहुअं अइबहुसो अइप्पमाणेण भोयणं भोत्तुं । हाएज्ज व वामिज्ज व मारिज्ज व तं
अजीरंतं ॥ ३ ॥ बहुयातीयमइबहुं अइबहुसो तिन्नि तिन्नि व परेणं । तं चिअ अइप्पमाणं भुंजइ जं वा
अतिप्पंतो ॥ ४ ॥ प्रमाणातिक्रमदोषदुष्टाहारग्रहणे च वमनविरेचनमरणकामोद्दीपनादयः प्रभूताः प्रादुर्भवंति दोषाः ।
प्रमाणोपेताहाराभ्यवहारे च ते न संभवेयुः । यदुक्तं अप्पाहारस्स न इंदियाइं विसएसु संपयट्टंति । नेव
किलम्मइ तवसा रसेसु न वि मुज्झए आवि ॥ १ ॥ तथाहि आहारानि आहारा ॥ १ ॥ तस्मात् प्रमाणोपेत
एवाहारो ग्राह्यः । इत्युक्तमप्रमाणदोषस्वरूपं ॥ २ ॥

अथांगारदोषस्वरूपं किंचिदुच्यते । यथाहि यथांगारकत्वेन विमतधूममग्निना दग्धमंगारत्वप्राप्तमिमनमुच्यते । यदुक्त भोगिणनिर्मुक्को अंगारत्ति पवुचाइ त पिय पद्दं गय धूमे ॥ तसाच्च चारित्रं करोति प्रासुकमप्याहारं प्रशस्तगंधरसं रागमूर्च्छितः सन् समानः । यदुक्तं तत्रैव रागग्गिसंपलित्तो, भुजंतो फासुयंपि आहारं । निद्दड्डगालनिभं, करेइ चरणिंधणं खिप्पं ॥ १ ॥ इत्युक्तमंगारदोषस्वरूपम् ।

अथ धूमदोषस्वरूपं किमप्युच्यते । यथांगारस्यमर्धप्राप्त्यकाभामभिधनं सधूममित्युच्यते । यदुक्तं तत्रैव अंगारत्तम पत्तं जलमाणं इंधणं सधूमं त तद्वत्स्य चरणं विरमाति यतिर्विरूपमपरसाहारे मनसा वचसा कायेन वा द्वेषपोषं प्रभुर्भोजयन् । तत्र मनसाऽसो अप्रियमपक्कं पितदं दुर्भाचं चेति चिंतयन्, वचसा तु तन्निंदां विदधानः, कायेन तु मुख मोटनादि कुर्वाणः । तस्मात् सरसविरसाहारस्यो रागद्वेषपरिहारं कृत्वा यतिसंयमेन ध्यानाध्ययनादिनिमित्तमाहारो ग्राह्यः । यदुक्तं च तत्रैव आहारंति तवस्सी, विगइंगालं च विगयधूमं च । झाणज्झयणनिमित्तं, एसुवएसो पवयणस्स ॥ १ ॥ इत्युक्तं धूमदोषस्वरूपं ॥ ३ ॥

अथ कारणदोषस्वरूपं किंचिदुच्यते । तत्र कारणे आहारमगृह्णन् कारणाभावे चाहारं गृह्णन् मुनिः संयुज्यते कारण दोषमलिनकर्मणा । तत्र साधूनां वेदनाशमनवैयावृत्त्यविधानेर्यापथसंयमप्राणधारणधर्मध्यानानुसंधानलक्षणानि षडाहारग्रहणकारणानि भवंति । तत्र 'क्षुधा समा वेदना नास्ति' इति वचनात् क्षुधासमा वेदना नास्ति, तत्प्रशमार्थं भक्षितव्यमिति १ । तथा क्षुधितो वैयावृत्त्यं कर्तुं न शक्नोतीति तदर्थं च २ । तथा क्षुधार्तो लोचनाभ्यामगतवेर्यां शोधयितुं न

तथा सयमः प्रत्युपेक्षाप्रमार्जनादिलक्षणस्तदर्थं च ४। तथा प्राणधारणार्थं च ५। तथा
शक्नुयादिति तन्निमित्तं च ३। तथा सयमः प्रत्युपेक्षाप्रमार्जनादिलक्षणस्तदर्थं च ४। तथा प्राणधारणार्थं च ५। तथा
सूत्रार्थानुस्मरणादिनिमित्तं च ६। एतदर्थसंवादिनी च श्रीपिंडनिर्युक्तिगाथा तथाहि वेअण वेआवच्चे, इरिअट्ठाए अ
संजमट्ठाए। तह पाणवत्तिआए, छट्ठं पुण धम्मचिंताए ॥ १ ॥ तथा षड्भिः कारणैः'साधुर्नाश्नीयात्। तथाहि–
आतंको १पसर्ग२ब्रह्मगुप्तितितिक्षा३प्राणिदया४तपः५शरीरव्युत्सर्ग६लक्षणानि षड् निमित्तानि भवत्यभोजने। तत्रातंको
ज्वरादिरूपस्तदुपशमार्थं मुनिर्नाश्नीत १। तथा नृपस्वजनाद्युपसर्गनिवारणार्थं च २। तथा ब्रह्मगुप्तयोऽन्यथा सोढुं न
शक्यंते तेन तदर्थं च ३। तथा जलदवृष्टिमहिकानिपातादौ प्राणिदयार्थं च ४। तथा चतुर्थादिषण्मासोपवासांततपो-
निमित्तं च ५। तथा विनेयव्युत्पादनादिसकलकृत्यकरणानंतरं पाश्चात्ये वयसि संलेखनां विधाय कायव्यवच्छेदार्थं च
६। अत्र च पिंडनिर्युक्तिगाथे तथाहि आयंको जरमाई, रायासन्नायगाइ उवसग्गो। बंभवयपालणट्ठा, पाणिदया
वासमहियाई॥ १ ॥ तवहेउ चउत्थाई, जाव उ छम्मासिओ तवो होइ। छट्ठं सरीरवोच्छे–यणट्ठया होअणा-
हारो ॥ २ ॥ एव षड्भिः कारणैराहारं गृह्णन् षड्भिश्च कारणैराहारमगृह्णन्' लिप्यते कारणदोषोत्थकर्मणा ५। इत्युक्ताः
पचपरिभोगैषणा दोषाः। एव सप्तचत्वारिंशद्दोषविरहितमाहारमाददानो मुनिरेषणासमित उच्यते अन्यथा त्वाजीवीति।
उक्त च श्रीउपदेशमालायां बायालमेसणाओ, भोअणदोसे अ पंच सोहेइ सो। एसणाइसमिओ, आजीवी
अन्नहा होइ ॥ १ ॥ तस्मादाहारविषयमूर्च्छारहितेन यतिसत्तमेनैते सप्तचत्वारिंशद्दोषाः सर्वप्रयत्नेन वर्जनीयाः।
अथैतेषु किंचिद् गुरुलघुविशेषो भाण्यते तथाहि–सर्वगुरु मूलकर्म, तस्माद् यथाक्रममाधाकर्मकर्मौद्देशिकचरमत्रिकं

मनागशुद्धमपि पिंडमाददानो यतेत पंचकहान्याम् । अथ पंचकहानिरि-
लंवनसद्भावाभावविद् द्रव्यक्षेत्रकालभावानपेक्ष्य मनागशुद्धमपि पिंडमाददानो यतेत पंचकहान्याम् । कोऽर्थः मदोपाहार-
त्यस्य वाक्यस्य कोऽर्थः ? उच्यते पंचकशब्देन सूत्रोक्तस्वपोनिशेषस्तेन या हानिः स्वतपसो व्ययः स्यात्तथा तेन यतेत
ग्रहणात्तदपराधशुद्धये यथा पंचकेन पंचकेन प्रायश्चित्तेन नृपापराधदीयमानदंडद्रव्यवत् स्वतपसो व्ययः स्यात्तथा तेन यतेत
इत्थमशठतया सूत्रोक्तयुक्त्या यतना कुर्वतो यतेर्या काचित् स्वानुष्ठानखंडनरूपा विराधना स्यात् सा निर्जराकारणमेव ।
यदुक्तं श्रीपिंडनिर्युक्तौ जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्झत्थ
विसोहिजुत्तस्स ॥ ११ ॥ इत्युक्तं गवेषणैषणाग्रहणैषणापरिभोगैषणादोषस्वरूपम् ।

एवं च यथैषणात्रयमाश्रित्य सप्तचत्वारिंशद्दोषाः परिहरणीयाः श्रमणैस्तथा शय्यातरपिंडराजपिंडावपि । तत्र प्रथमं
शय्यातरपिंडस्वरूपं पूर्वाचार्यकृतगाथाभ्यामेवोच्यते । तथाहि सागारिओत्ति १ को पुण २ काहेत्ति ३ कइविहो वा
सपिंडो ४ । असिज्जायरो व काहे परिहरिअव्वो अ सो कस्स ६ ॥ १ ॥ दोसा वा के तस्स उ ७, कारणजाए
व कप्पए कम्मि ८ । जयणाए वा काए ९ सगमणेगेसु घित्तव्वो १० ॥ २ ॥ (व्याख्या) सागार एव सागारिकः
शय्यातरः शय्या तद्गतयतीन् वा रक्ष्यतदुवितरणेन वा संसारं तरतीति शय्यातरः ॥ १ ॥ कोऽयमुपाश्रयस्य प्रभुस्त-
त्संदिष्टो वा तेषु पुनः प्रभृतेपूत्सर्गतः सर्वेऽपि वर्जनीयाः । अनिर्वाहे तु क्रमादेकैकः । यदात्तूपाश्रयसंकीर्णतया पृथक्-
पृथगुपाश्रयेषु तिष्ठंति यतयस्तदा निर्वाहे सर्वेऽपि परिहार्याः । अनिर्वाहे त्वाचार्योपाश्रयशय्यातरो वर्जनीय एव ॥ २ ॥
काहेत्ति—कदा कुतः कालात् प्रभृति भवेत् शय्यातरः ? उच्यते आगराद्यस्के त्रिहिते स्वाणे वा कृते, यदुक्तं जइ जग्गंति

पिंडो उ ॥ १ ॥ यस्यैव कृतकर्म तस्यैवैकस्य न कल्पते शेषाणां तु कल्पते । इत्येवं लेशतो मध्यमद्वाविंशतितीर्थपतिभिर्महाविदेहजिनवरैश्च कार्मिकमप्यशनाद्यनुज्ञात स्वयतीनां न तु शय्यातरपिंडग्रहणम् १ । कुतो हेतोरित्याह अज्ञातस्य नृपादिप्रव्रजितत्वेनाविदितस्य यद् भैक्षं तदज्ञातमित्युच्यते साधुना च प्रायस्तदेवादेयं अन्नाये उंछं चरई विसुद्धमिति वचनात्, तच्चासन्ननिवासादिपरिचयेन ज्ञातस्वरूपस्य यतेः शय्यातरगृहे पिंडमाददानस्य स्यादिति २ । तथा उद्गमः कल्पनीयभक्तादिभवनमपि चेति समुच्चये सोऽपि न शुद्ध्यति । कथं बाहुल्ला गच्छस्स उ पढमालिअपाणगाइकज्जेसु । सज्झायकरणआउट्टिआइ करेइ उग्गमेगयरं ॥ १ ॥ तथाऽविमुक्तिर्लौलुपतया तत्कुलामोचन यदुक्तं भावे उक्कोसपणीयगेहिओ तं कुलेन वड्ढेइ । नाणाई कज्जेसु अ गओवि दूरं पुणो एइ ॥ १ ॥ तथा न लाघवं लघुता यस्य तद्भावोऽलाघवता । तत्र विशिष्टाहारलाभेनोपचितत्वाद्देहस्य तेन समं संस्तवेन प्रभूतोपधिलाभाच्च गुरुत्वम् । अत्र दृष्टांतः कस्यचिन्मुनेः शय्यातरेण कंबलादि वितीर्णं तत्प्रणयाच्च तत्तनयादिभिरपि तदनु स तद्भारेण विहारं न करोति । अन्यदा च दुर्भिक्षे शय्यातरेण चिंतितं यद् बुभुक्षुया वय मरिष्यामः, अस्माभिश्च सममयमपि मरिष्यतीति तदेनं सुभिक्षे प्रेषयामीति विचिंत्य तस्मिन् बहिर्भूमौ गते तत्संबंधि सर्वमुपकरणं बहिर्निष्कास्य संगोप्य चोपाश्रयो ज्वालितः । समागते च तस्मिन शेष दग्धमित्युक्त्वा पात्राणि समर्पितानि, सुभिक्षे पुनरागम्यमित्युक्त्वा विहार च कारितः । अथ च सुभिक्षे तस्मिन् पुनरागते सद्भावमुक्त्वा सर्वं समर्पितमित्यलाघवता भवेत् ५ । तथा दुर्लभा च शय्या कृता स्यात्, येन शय्या देया तेनाऽशनाद्यपीति गृहिणां भीतेः । अत्र निदर्शनं कस्यापि गृहिणो गृहे पंचशतमितयतियुताः सूरयस्तस्थिवांसः । तन्मध्यादेकः संघाटकः

निमंतणे दव्वदुल्लहे असिवे । ओमोअरि अ पउसे भए अ गहणं अणुन्नायं ॥ १ ॥ ८ ॥
निमंतणे दव्वदुल्लहे असिवे । ओमोअरि अ पउसे भए अ गहणं अणुन्नायं ॥ १ ॥ ८ ॥ कारणे

कया च यतनया ग्राह्यः ? उच्यते त्रिःकृत्वश्चतुर्षु दिक्षु गवेपयित्वा गीतार्थो द्रव्यदुर्लभतया शय्यातरपिंडमादत्ते

समुत्पन्ने । यदुक्त तिक्खुत्तो सरिकत्ते चउदिसिं मग्गिऊण गीयत्थो । दव्वम्मि दुल्लहम्मि सिज्जायरसंतिए

गहणं ॥ १ ॥ एवमेकमाश्रित्य प्रोक्तं, यत्रापि नैकेऽपि तु पुत्रादयः शय्यातराः स्युस्तत्रापि यावंतस्तत्स्वामिनस्तत्संदिष्टा

वा ते सर्वेणानुज्ञाप्य तेषां मध्ये च योऽनुल्लंघनीयवाक्यस्तस्यैव पिंडः परिहार्यः भद्रकप्रांतादिविशेषमाश्रित्य शेषाणामपि ९ ।

इत्युक्तो लेशतः शय्यातरपिंडः ।

अथ राजपिंडस्वरूपं किंचिदुच्यते । तथाहि यो मूर्द्धाभिषिक्तो नृपतिस्तस्याशनादिचतुष्कवस्त्रपात्रकंबलपादपुंछनरूपोऽष्टविधः पिंडः परिवर्जनीयो व्याघातादिनिमित्तैः । तत्रेश्वरतलवरादिभिः प्रवेशनिर्गमपरैः साधोः प्रवेशनिर्गमविषयस्खलनारूपो व्याघातो भवेत् । अत एव भिक्षास्वाध्यायादेरपि अमंगलबुध्या हननरूपो वा अतिसम्मर्दात् पात्रभंगरूपो वा आदिशब्दात् प्रचुरान्नादिप्राप्तौ लोभः स्यात्ततश्चैपणाप्रेरणम् । तथा उदारदेहाना करितुरगराजदारादीनां दर्शनेनाभिष्वंगो भवेत् ततश्च संयमात्मविराधनादयो दोषा निदानादिविधानाचारिकचौरादिशंकया नृपप्रभृतिभिस्तस्य विनाशनात् । तथा नृपादिकोपात् कुलगणसंघाद्युपघातोऽपि, तथाऽहो निंद्यमपि राजप्रतिग्रहमेते गृह्णंतीति जने गर्हा च स्यात् । अतो हेतोः प्रथमचरमजिनपतितीर्थवर्त्तिभिर्यतिभिः सर्वथैव वर्जनीयो राजपिंडः ।

नन्वेते दोषा मध्यजिनमुनीनामपि समाना एव, तत् किं ते तं न वर्जयंति ? उच्यते अप्रमादितया ऋजुप्रज्ञतया च

कुद्याकरणं २ उक्कवणं दंडकोपरि ओलवणं ३ थापणं दर्भादिना छादन ४ लेवणं चिक्खल्लेन कुड्यलिपनं ५ दुवारत्ति
द्वारबाहुल्यस्यान्यस्य वा द्वारस्य करण ६ भूमीयत्ति भूमेर्विषमायाः समीकरणं ७ एभिः सप्तभिः साधुमाधाय विनिर्मितैर-
न्विता वसतिर्मूलोत्तरगुणाविशुद्धा । तद्विपरीता तु तैर्विशुद्धा । एते चतुर्दशाप्यऽविशोधिकोटिभूताः पृष्ठिवंशादयः । अथोत्तरो-
त्तरगुणा विशुद्धा वसतिः कथ्यते । तथाहि दूमिअ १ धूमिअ २ वासिअ ३ उज्जोविअ ४ वलिकडा ५ अवत्ता ६ य ।
सित्ता ७ सम्मट्ठा ८ वि अ विसोहिकोडिंगया वसही ॥ १ ॥ दूमिअत्ति सेटिकादिभिर्धवलिता १ धूमिअत्ति-
अगर्वादिभिर्दुर्गंधा सती सुगंधा कृता २ वासिअत्ति पटवासादिभिरपनीतदुर्गंधभावा ३ उद्योतिता मणिदीपादिभिः प्रकाशिता
४ बलिकृता कृतकूरादिबलिविधाना ५ अवत्ता छगणमृज्जलैरुपलिप्तक्षितितला ६ सित्ता केवलसलिलार्द्रीकृता ७ संमृष्टा
प्रमार्जिता यतिनिमित्तमिति सर्वत्र विज्ञेय ८ । एते उत्तरोत्तरा विशोधिकोटिभूता वसत्युपघातकाः एतैरशुद्धा उत्तरोत्तर-
गुणाविशुद्धा । तदविपरीता तु तैः शुद्धा । एवं चतुःशालाद्युपाश्रयेषु मूलोत्तरगुणभावना विधेया । उक्तं च चउसालाईए-
वि हु वन्निओ एवमेव चउविभागो । इह मूलाइगुणाणं संकखा पुण सुण न जं भणिओ ॥ १ ॥ विहरंताणं
पायं समत्तं कज्जाण ज्बेण गामेसु । वासो तेसु अ वसही पयइ जुआ तओ तासिं,॥ २ ॥ यतो विहारं कुर्वता
यतीना प्रायो ग्रामेष्ववस्थितिर्भवेत् तेषु च प्रायः पृष्टिवंशादियुता एव वसतयस्ततस्तासा मणनं साक्षादकारितं तु चतुःशाला-
दिवसतीनामिति । तथा वसतिर्नवधा प्रोच्यते । तन्मध्यादष्टविधा सा वर्जनीया । नवमी तु वसतिर्विविक्ता स्वीकार्या । तत्र
प्रथमा कालातिक्राता १ द्वितीया उपस्थाना २ तृतीयाऽभिक्रांता ३ तुर्याऽनभिक्रांता ४ पंचमी वर्ज्या ५ षष्ठी महावर्ज्या ६

ता वि अ तेसिं न पिच्छंति ॥ १ ॥ तत्र प्रथमं स्थानमुच्यते । तथाहि ठाणं चिट्ठंति जहिं, मिहोकहाईहिं नवर-
मित्थीओ । ठाणे नियमा रूवं, सिय सद्दो तेण तो वज्जं ॥ १ ॥ स्यात् कदाचित् अवर्जने च ब्रह्मव्रतागुप्तिलज्जानाश-
प्रीतिवृद्धिप्रभृतयो दोषा भवेयुः ! यदुक्तं बंभव्वयस्स अगुत्ती, लज्जानासो अ पीइवुड्ढी अ । साहुतवोवणवासो,
निवारणं तित्थहाणी अ ॥ १ ॥ ब्रह्मव्रतागुप्तिः स्त्रीसंसक्तवसतिनिवासात् पुनःपुनर्दर्शनेन च लज्जानाशप्रीतिवृद्धी साधु-
रतपोवननिवसनमिति भजने गर्हा तथा वसतेरन्यद्रव्याणां वा निवारणं निषेधः तथा तीर्थहानिश्च साधुषु जनाऽनादरात्
तथा स्त्रीरूपे तु यतेरियं दोषोत्पत्तिस्तथाहि वनितानां चंक्रमणोर्ध्वस्थानरमितमविलासाऽवलोकननानाविधशृंगारादीन्निरीक्ष्य
भुक्तभोगस्यानगारस्य पूर्वभुक्तस्मृतिरभुक्तभोगस्य तु भोगविषयविस्मयोत्पत्तिश्च भावः ॥ ३ ॥ उक्तं च चंकमियं ठिय
मोदियं च, विप्पेरिकयं च सविलासं । सिंगारे य बहुविहे, दट्ठुं भुत्तेयरे दोसा ॥ १ ॥ मोट्टियकिलिकिंचितं रमि-
तमित्यर्थः भुक्तभोगाऽभुक्तभोगयोः स्मृतिकुतूहलोत्पत्तिप्रभृतयो दोषाः । स्त्रीणां पुनर्मुनिजनरूपविषयविस्मयेन कामोत्प-
त्त्यादयो दोषाः । यदुक्तं जल्लमलपंकियाण वि, लावन्नसिरीउ जहसि देहाणं । सामन्ने वि सुरूवा, सयगुणिआ
आसि गिहवासे ॥ १ ॥ तथा स्त्रीशब्दे त्वमी गायाणि य पढियाणि व, हसियाणि य मंजुले । अउल्लावे भूसण-
सद्दे, राहस्सिए अ सोउण जे दोसा ॥ १ ॥ तथा यथा स्त्रीससक्ता वसतिस्त्याज्या तथा पशुपंडकसंसक्ताऽपि ।
पसुपंडगेसु वि इहं, मोहानलदीविआण जं होइ । पायमसुहा पवित्ती, पुव्वभवब्भासओ तह य ॥ १ ॥
तस्मादल्पक्रियाऽपि वसतिः स्त्रीपशुपंडकरहितैव सेवनीया इति भावितं किंचिद् वसतिविशुद्धिस्वरूपं ॥ २ ॥

| | | |
|---|---|---|
| दे | आ | दे |
| मा | रा | मा |
| दे | आ | दे |

ये तु निष्पन्ने पञ्जणं सोउण्णं उप्पुमणं धावनादयश्च विधाय ते विशुद्धं तद्विपरीतं तु मूलगुणविशुद्धम् । यदा च वामः ममादीयते गृहस्थांतिके यतिकृते तैरुत्तरगुणाविशुद्धं विपर्यये तु तैर्विशुद्धमवसेयं वस्त्रम् । तदा तस्य नव भागाः करणीयास्तत्र चत्वारो देवभागाः, द्वौ च मानुषौ, द्वौ पुनरासुरौ, मध्यमभागश्च रक्षःसंबंधी । एतेषु चांजनखंजनकर्दमलिप्तमूषकभक्षितादिकं निलोक्यम् । तत्र देवतभागेषु वस्त्रस्यैवं-विधत्वे उत्तमो लाभः, मानुषयोस्तु भागयोर्मध्यमः, आसुरयोस्तु ग्लानता, रक्षोभागे तु मरणम् । उक्तं च नवभाग-कप्पणाए, पढमं वत्थं करित्तु जोयंति । नाऊण फलविसेसं, गिण्हंति अहव वज्जंति ॥ १ ॥ चत्तारिदेवया भागा, दुवे भागा य माणुसा । आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥ २ ॥ अंजण खंजण कद्दमलित्ते, मूसगभक्खिय अग्गिविदड्ढे । चुण्णियकुट्टिय कुट्टिय, पज्जवलीढे होइ वियागु सुहो ॥ ३ ॥ असुहो वा इमो लाभो, माणुसेसु अ मज्झिमो । आसुरेसु अ गिलन्नं, मज्झे मरणमाइसे ॥ ४ ॥ इत्युक्तं किंचित् सिंचयविशुद्धिस्वरूपम् ॥ ३ ॥

विशेषः पुनरेष एकें-

अथ पात्रशुद्धिस्वरूप किंचिदुच्यते । तथाहि—पात्रमपि पिंडवदाधाकर्मादिदोपरहितमेव ग्राह्यम् । द्रियविकलेंद्रियपंचेंद्रियावयवत्वभेदात् पात्रमपि त्रेधा । तत्रैककरणशरीरनिष्पन्नं तुंबकादि १ । द्विकरणांगनिष्पन्नं तु संख-शुक्त्यादिमयम् २ । पंचाक्षांगनिष्पन्नं तु कुतुपशृंगपात्रादि ३ । एतेष्वाद्यत आद्यमेव ग्राह्यम्, तदप्यलाबुदारुमृन्मयत्व-

भेदाश्चिविधम्, एतदपि प्रत्येकं जघन्यमध्यमोत्कृष्टभेदेन। तत्र जघन्यमोलकचारि १। मध्यमपादकच्च २। उत्कृष्टं तु चतुष्टय ३। इदमपि प्रत्येकं त्रिप्रकारं यथाछत १ मलपरिकर्म २ बहुपरिकर्म ३। पूर्वपूर्वाभावे चोत्तरमादेयम्। एतदपि उदिष्ट १ पेद २ संमत ३ वर्जित ४ मध्यपि समयोक्तेपणा चतुष्कक्रमेण ग्राह्यम्। तत्रैषणात्रयं पूर्ववत् व्याख्येयम्। तृतीया त्वेवं संगतयं वा वेजयय वा (एतद् व्याख्या) कस्यापि पुरस्तस्य पात्रमेवं भवेत्, स चैकस्मिन् दिने एकैकं पारणेन व्यापारयति। तत्र यद् पात्रपति तद् त्यौषिकम्, यत् विष्ठति तद् रैक्षपिकम्। इदं च भोऽन्यमित्रविशेषात् प्रनिर्षोषव इति। पात्रविषये त्वोपग्रहविशुद्धिस्तु सूत्रचरणं मूलगुणा, पापमिच्छोरणं च इयरेठरति प्रतोष्ठ विभिन्ना विशेषा। इत्युक्तं किञ्चित् पात्रविशुद्धिस्वरूपम् ॥ ४ ॥

अथ चेत्मासमितौ पिडविषये नैरिशेषबहुनिदर्शनं यथा। तेन मासक्षपणपारणकेऽपि पुरमापासापुषैषाशुस्मस्ते व्यवहतं न एवीत तथान्यैरपि इतिषिद्धसमाचार परिहार्यः सर्वदैव। इत्थं च निदर्शने पिंडविषयं दर्शितम्, एवं वस्त्रविषयन-पात्रविषयेऽपि यथायोग्यमा विधेया समयानुसारेण। इत्युक्तं किंचिदेषणासमितिस्वरूपम् ३।

अथाऽऽदाननिक्षेपणासमितिस्वरूपं किंचिदुच्यते। तत्राऽऽदानेन सह निक्षेपणाऽऽदाननिक्षेपणा, तद्विषया समितिः आदाननिक्षेपणासमितिः। सा च रजोहरणमुखवस्त्रिकादिकस्योपकरणस्य दंडकप्रभृतिकस्य उपग्राहिकोपकरणस्य प्रथमं चक्षुषा प्रत्युपेक्षण तदनु रजोहरणादिप्रमार्जना च विधाय ग्रहणनिक्षेपणे कुर्वता यतिवरेण समाराधिता भवति। अस्यां च समितौ प्रसंगतः सर्वेऽपि प्रतिलेखनाविधिरवसेयः। सा च प्रतिलेखना द्विविधा उपकरणसंबंधिनी वसतिसत्का च। एष द्विविधापि

केवलिनां संसक्ताऽसंसक्तविषया च छद्मस्थानाम्। तत्राप्रत्यु-
द्रव्यभावाभ्यां द्विविधा। तत्र संसक्तोपधिविषया प्रतिलेखना केवलिनां संसक्ताऽसंसक्तविषया च छद्मस्थानाम्। अथ प्रत्युपेक्षितोऽप्युपधिरूपभोगकाले चेत्
पेक्षित एव प्राणिभिः संसज्यते तेन पूर्वमेव तं प्रत्युपेक्षयति पंचभावबोधिनः। अथ तेषामेव भावप्रतिलेखना प्रोच्यते
ससज्यते तदा संसक्तमेव केवलिनः प्रत्युपेक्षंते। इत्युक्ता केवलिनां द्रव्यप्रतिलेखना। अथ तेषामेव भावप्रतिलेखना प्रोच्यते
तथाहि–वेदनीयं कर्मातिबहु ज्ञात्वा निजायुःकर्म चाल्पतरं विज्ञाय कर्मप्रतिलेखनाकृते कुर्वंति केवलिनः समुद्‌घातम्। अत्र
च भावः कर्मोदयरूपोऽवसेयः। इत्युक्ता केवलिनां भावप्रतिलेखना। अथ छद्मस्थानां द्रव्यप्रतिलेखना निगद्यते तथाहि–
संसक्ताऽसंसक्तद्रव्यविषया च प्रतिलेखना छद्मस्थानाम्। यथा कस्मिंश्चिन्नगरे निशि तस्करगवेषणार्थं हिंडने प्रमत्ता आरक्षका
विनाशिता नृपतिना तद्‌विपरीतास्तु सन्मानिताः। एवमुपकरणादि संसक्तं भवतु मा वा तथापि ये प्रतिलेखना–प्रमार्जना-
विधौ प्रमाद्यंति यतयस्तेषां भवभ्रमणलक्षणो दंडः समापतति। ये तु तत्र न प्रमाद्यंति तेषां तु न। अत्र दृष्टांतदार्ष्टांतिक-
योजना त्वेवं नृपतिस्थानीया तीर्थपतयः। आरक्षकास्तु साधवः। भांडकं च पुरम्। स्तेनस्थानीयास्तु प्राणाः। तस्करापहर-
णाय रत्नस्थानीयं तु ज्ञानादित्रिकम्। दंडस्थानीयं तु संसारारण्यपरिभ्रमणम्। भावप्रतिलेखना तु किं कृतं किं च कृतशेषं
किं च बाह्याभ्यंतररूपं तपः कर्तुं शक्यमपि कुर्वन्नाऽस्मि एवं पूर्वरात्रेऽपररात्रे च यच्चिंतनं तद्रूपाऽवसेया। उक्तार्थ–संवादिन्य-
श्चेमाः श्रीमदोघनिर्युक्तिगाथास्तथाहि–दुविहा खलु पडिलेहा, छउमत्थाणं च केवलीणं च। अब्भिंतरबाहिरिया,
दुविहा दव्वे य भावे य॥ १॥ पाणेहि उ संसत्ता, पडिलेहो होइ केवलीणं तु। संसत्तमसंसत्ता, छउमत्थाणं
तु पडिलेहा॥ २॥ संसज्जइ धुवमेयं, अपेहियं तेण पुव्वपडिलेहे। पडिलेहियं पि संसज्ज–इत्ति संसत्तमेव

तत्रोत्सर्गतः प्रमाणोपेतैव ग्राह्या, यतो विस्तीर्णायां तस्यां भौतकार्पटिकादयः शयनाय समायांति । तैः सह संवासे च संयमात् विराधनादयो दोषाः । सकटाया तु वसतौ प्रवेशनिर्गमयोः प्रस्खलनपतनप्रभृतयो दोषाः । अपवादपदे तु त्रिविधाऽपि ग्राह्या । तत्र सूरेः सस्तारककृते भूमित्रय विलोकनीय निर्वाता प्रवाता निर्वातप्रवाता च । शेपसाधूनां पुनरेकैका, तत्र विस्तीर्णायां वसतौ पुष्पप्रकरवद् चिकीर्णाः संस्तारकाः क्षेपणीयाः यथा सागारिकावकाशो न भवेत् । लघ्व्यां तु पात्रकाणि मध्ये विधाय मंडल्याः पार्श्वतः संस्तारकाः कार्याः । प्रमाणोपेतायां तु तस्यामेकैकस्य साधोः संस्तारककृते हस्तत्रयमिता भूमिर्भवति । सा चैवमूर्णामये संस्तारके साधुः स्वापं विधत्ते स च हस्तप्रमाणा क्षोणीं रुणद्धि । संस्तारकाच्च विंशत्यंगुलानि विहाय हस्तमिते पादपुछने पात्राणि स्थाप्यंते । तत्र पात्रमष्टांगुलानि रुणद्धि पात्राच्च विंशत्यंगुलानि मुक्त्वा परतोऽपरोऽनगारः स्वपिति स्थापना २४ । २० । ८ । २० । एवं च कृते साधोः साधोश्च द्वौ द्वौ हस्तावन्तरं भवेत् । एवं च कृते भुक्तभोगाऽभुक्तभोगयतिकृता दोषाः परिहृता भवेयुः । तत्र भुक्तभोगस्यासन्नतया स्वपतोऽन्ययतिकायसंस्पर्शतः पूर्वक्रीडितस्मृतिरूपो दोषः । अभुक्तभोगस्य पुनरन्यमुनिसुकुमारशरीरसस्पर्शतो वनिताविपयं कुतुक भवेत्, तथा परस्परं पादादिस्पर्शजनितः कलहश्च । तथा स्वपद्भिः शिरो यत्र कुड्यं ततो हस्तमितां भूमिं मुक्त्वा विधेयम् । पदांतोऽपि गमनमार्गे च तावती भूमिरुपत्याज्या । एवं च सूत्रोक्तविधिना शयनं विधाय कायिकयादिकृते यदोत्तिष्ठति तदा द्रव्याद्युपयोगं विधत्ते । तत्र द्रव्यतः कोऽहं यतिर्गृही वा । क्षेत्रतः किमुपरितलेऽन्यत्र वा । कालतः किं रात्रिर्दिवसो वा । भावतः किं कायिक्यादिना पीडितो न वेति । अथ चेन्निद्रामुद्रितनेत्रः स्याक्तदा निस्वासं रुणद्धि । तथा द्वारं च पश्यति तदत्वाऽ-

अगाहा, नियमा साहुस्स साहू अ ॥ ४ ॥ भुत्ताभुत्तसमुत्था, भंडणदोसा य वज्जिया एवं। सीसंतेण च
कुड्डं तु, हत्थं मुत्तूण ठायंति ॥ ५ ॥ संकोए संडासं, उव्वतंते य कायपडिलेहा । दव्वाईउवओगं,
णिस्सासनिरुंभणालोयं ॥ ६ ॥ दारं जा पडिलेहे, तेणभए दोण्णि सावए तिण्णि। जइ य चिरंतो दारे, अण्णं
ठावेतु पडिअरइ ॥ ७ ॥ आगम्मपडिक्कंतो, अणुपेहे जाव चोद्दस वि पुव्वे। परिहाणि जा तिगाहा,
निद्दपमाओ जढो एवं ॥ ८ ॥ अतरंतो व निवज्जे, असंथरंतो व पाउणे एक्कं। गद्दभदिट्ठंतेणं, दो तिण्णि बहू
जहसमाही ॥ ९ ॥ इत्युक्ता स्थानत्रिकप्रतिलेखना।

अथोपकरणप्रतिलेखनास्वरूप किंचिदुच्यते। तथाहि उपकरणप्रतिलेखना द्विविधा वस्त्रविषया पात्रविषया च। तत्र प्रथमं वस्त्रविषया प्रोच्यते। तथाहि ऊर्ध्वं स्थिरमत्वरितं पूर्वं प्राक् सर्वं वस्त्रं पूर्वापरभागयोश्चक्षुषा निरीक्षेत। तत्रोर्ध्वं द्विधा, वस्त्रोर्ध्वं कायोर्ध्वं च। अत्राह परश्चेदुभयथाप्यूर्ध्वमित्युक्तं तर्हि ऊर्ध्वीभूय दशांते वस्त्रमादाय करोतु यतिः प्रत्युपेक्षणा; उच्यते नैवं देव, किंतूत्कुटकस्थितस्तिर्यग् वस्त्रं प्रसार्य दृढं च गृहीत्वा चंदनलिप्त इवाऽन्योन्यमंगान्यऽलगयंस्त्रिभागबुद्ध्या यद् यतिः प्रत्युपेक्षणा करोति तदुभयथाप्यूर्ध्वं प्रोच्यते। प्रतिलेखनां कुर्वता च मुनिना वस्त्रं वपुश्च न नर्तयितव्ये, तथा शरीरं वस्त्रं च न चलितं कर्त्तव्यम्। तथा न निरंतर प्रस्फोटनादि विधेयम्। तथा मुशलवदूर्ध्वमधस्तिर्यक् च वस्त्रं न लगयितव्यम्। दृक्प्रतिलेखनानंतरं च तिर्यक्कृतं वस्त्रं पूर्वापरभागयोस्त्रिस्त्रिः प्रस्फोटनीयम्। तथा नव खोटकाः सिद्धान्तप्रसिद्धप्रस्फोटनात्मकाः पाणेरुपरि कर्त्तव्याः। तथा हस्ते प्राणिनां कुंथुप्रभृतीनां प्रस्फोटनत्रिकत्रिकांतरितं च प्रमार्जनेन त्रिस्त्रिर्विशोधनं विधेयम्।

इमां च प्रतिलेखनां कुर्वता पडिलेहणारभटा १ संमर्दा २ मोसली ३ प्रस्फोटना ४ विक्षिप्ता ५ वेदिका ६ रूपाः षड् दोषाः परिहरणीयाः। तत्र वितथकरणं त्वरितं वा अन्यान्यवस्त्रग्रहणं तदारभटा कथ्यते। १ संमर्दनं संमर्दा वस्त्रस्य सीठिमता। सा च वस्त्रस्य कोणसंवलने उपधेरुपरि निषीदने भवेत् २। मोसली तु तिर्यगूर्ध्वमधो वा घट्टनमने स्यात् ३। रेणुगुंडितस्य वस्त्रस्य वेगेन धूननं प्रस्फोटनं यस्यां प्रतिलेखनायां क्रियते सा प्रस्फोटना ४। विक्षिप्ता तु प्रत्युपेक्षितस्य वस्त्रस्य अप्रत्युपेक्षिते क्षेपणं अप्रत्युपेक्ष्यमाणवस्त्रापसारणं वा ऊर्ध्वं क्षेपणं भवति ५। वेदिका तु पंचप्रकारा ऊर्ध्ववेदिकादिका। तत्रोर्ध्ववेदिका जान्वोरुपरि करयोर्विधाने १, अधोवेदिका तु जान्वोरधःकरकरणे २, तिर्यग्वेदिका तु संदंशकान्तःकरयोः क्षेपे ३, उभयवेदिका तु बाह्वोरन्तरे जानुयुग्मनिर्मितौ ४, एकवेदिका चैकजान्वन्तरे एकजानुविधाने ५-६। तथा इमेऽपि वक्ष्यमाणा दोषाः प्रतिलेखनायां वर्जनीयास्ते च श्रीओघनिर्युक्तिगाथाभिर्लिख्यन्ते। यथाहि—पसिढिल पलंब लोला एगामोसा अणेगरूवधुणा। कुणइ पमाणपमायं, संकियगणणोवगं कुज्जा ॥ १ ॥ पसिढिलमघणं अतिरा—इयं च विसमगहणं च कोणे वा। भूमीकरघोसणया, कडुगगहणमेगामोसा ॥ २ ॥ धुणणा तिण्ह परेणं, बहूणि वा घेत्तु पप्फोडे। घोडणपमज्जणासु य, संकियगणणं करि पमाई ॥ ३ ॥ ( व्याख्या ) प्रशिथिलं दृढं न गृहीतं प्रलम्बमानं पश्चात् लम्बते गृहीतं ततः प्रलम्बो भूमौ लोलते हस्ते वा पुनर्लोलयति। एगा० मध्ये गृहीत्वा वस्त्रं यमम् हस्ताभ्यां त्रिभागा न्वेषं करोति अथवा अंगुलिभिर्यत् परीतवस्त्रं तर्जन्यंगुल्या गृह्णाति। येमामोसमिति पाठे तु अनेकामर्शाः अनेके स्पर्शाः। अनेगरूवं पुनरपि अनेकप्रकारं कम्पयति। अथवाऽनेकानि वस्त्राण्येकत्र कृत्वा धुनाति। तथा प्रमाणे प्रमादं करोति पुरिमादीन्यूनाधि

शंकिते सति गणनामुपगच्छतीति शंकितगणनोपगातां करोति पुरिमादीन् गणयन्नित्यर्थः । द्वारगाथेयं । ततो कान् करोति । शकिते सति गणनामुपगच्छतीति शंकितगणनोपगातां करोति । अनिरायतमंतटितं वा प्रशिथिलमुच्यते । विपम- माष्यकृदेनां प्रतिपदं व्याख्याति । १ प्रशिथिलमघनमदृढं गृह्णाति । एगा० मध्ये वस्त्रं गृहीत्वा तावदाकर्षणं करोति ग्रहणे सति लवकोणं वस्त्रं भवति भूमौ करे वा लोलयति प्रत्युपेक्षमाणः । अथवा कर्षणे ग्रहणे वाऽनेके आमोसा अनेकानि यावत्त्रिभागशेषे ग्रहणं जातम्, इयमेगामोसा एका घर्षणमित्यर्थः । धुनना कपना त्रयाणां पुरिमाणामुपरि यत् करोति बहूनि वा वस्त्राण्येकीकृत्य स्पर्शनानि तद्वस्त्रमनेकधा स्पृशतीत्यर्थः २ । धुनना कपना त्रयाणां पुरिमाणामुपरि यत् करोति प्रमादी ३ । इय च प्रतिलेखनाऽन्यूना- धुनाति खोटकेसु नवसु प्रमार्जनासु नवसु च प्रमादं करोति शंकिते सति गणनां करोति एतेषु प्रथमं पदं प्रशस्तं शेषपदान्यप्रशस्तानि । ऽतिरिक्ताऽविपर्यासा च विधेया । अत्र त्रिभिः पदैरष्टौ भंगाः स्थापना लेखनायाः । तत्र खोटकप्रमार्जनयोः प्रमाणं तत्र खोटकप्रमार्जनावेलानां न्यूनाऽधिकताविधानेऽशुद्धत्वं प्रति प्राक्- वेलायां प्रतिलेखना क्रियत इत्युच्यते कैश्चित्तु प्रतिपादितं वेलाप्रमाणं तु कैश्चित् पूर्वमावश्यकं विधाय प्रभा स्फुटा- कैश्चित्तु कररेखा यदा निरीक्ष्यत तदेति एते प्रभायां स्फुटितायां कैश्चित्तु परस्परं वदनानि यदा वीक्ष्यंते तदेति सतमसि सदने प्रोद्गतेऽपि दिनपतौ पाणिलेखा चत्वारोऽप्यनादेशाः । यतः प्रथमभंगत्रयेऽन्धकारमेव तुरीयभंगे तु रजोहरणं २ रजोहरणनिषद्याद्वयं ३–४ चोल- न निरीक्षत इति । सूत्रादेशस्त्वयं प्रतिक्रमणसमाप्त्यनंतरं मुखांशुक १ पट्टः ५ कल्पत्रयो ८ चरपट्टः ९ संस्तारक १० प्रतिलेखनासमाप्तिसमनंतरमेव यथा सूर्यः समुद्गच्छति तथा प्रतिलेखना विधेया । इय च वेलाऽन्यूनाऽधिका कार्या, विपर्यये दोषः । विपर्यासस्तु पुरुषोपधिभेदाद् द्विविधः । तत्र प्रथममात्मीयो-

| |
|---|
| १११ |
| ७११ |
| १७१ |
| ७७१ |
| ११७ |
| ७१७ |
| १७७ |
| ७७७ |

र्षि प्रतिलेखयति, पश्चात् गुरूग्लानादीनामयं गुरुत्वविपर्यासः । उपधिविपर्यासस्तु यथोक्तक्रमातिक्रमेणोपधिप्रतिलेखने । अथवा पात्रप्रतिलेखनप्रवेलायां वस्त्रप्रतिलेखनाया अवसरेण पात्रप्रतिलेखने करणे तु विपर्यासमपि कुर्यात्, यथा स्तेनादिभये प्रथमं पात्राणि प्रत्युपेक्षते यथावसरेण वस्त्रादि वस्त्राणीति । इयं च वसनप्रतिलेखना प्रतिपादिता ।

अथ पात्रप्रतिलेखनास्वरूपं किंचिदुच्यते । तथाहि वस्त्रप्रतिलेखनानंतरं पादोनपौरुषी यावत् स्वाध्याय विधाय पश्चात् पादोनपौरुष्यां श्रोत्रादीन्द्रियोपयुक्तस्तदेकाग्रः पात्रद्वय प्रत्युपेक्षेत । यतः प्रतिलेखनासमये समस्तीते ग्रन्थे कल्पाध्ययनमिदं प्रतिपाद्यते । श्रोत्रादीन्द्रियोपयुक्तता चेत्थं श्रोत्रेण मृगादिगुणगुणायमानमाकर्णयति, चक्षुषा मूषकोन्दुरकादिरक्तः समालोकयति, नासिकया मर्कटकादिमयं, मंदपुरुतरपरे घ्राते रसनया रसं जानाति, स्पर्शनेन तु मध्यप्रविष्टमूषकादिनिःश्वासवातं वेत्ति । एवं पंचभिरिन्द्रियैर्यथोपयोगमस्तान् संलीनप्रदीप पात्रप्रतिलेखनां कुर्यात् । तत्र प्रथमं मुखांचलकं प्रत्युपेक्ष्य तदनु हस्तवसन- स्त्रोहरणाभ्यां चतुष्कोणपर्यंते गोच्छकं प्रमार्जयति । तं च प्रत्युपेक्ष्याङ्गुलीभिर्गृहीत्वा पटलानि प्रमार्जयति । तानि च प्रत्युपेक्ष्य पात्रकेसरिकां प्रत्युपेक्षेत । तथा च पात्रद्वयं यथासंभवार्थं तदनु रजस्त्राणद्वयं तदनु पात्रबंधनं तदनु पात्रस्थापनम् । इयं च पात्रविषया प्रतिलेखना पादप्रोंछने उपविश्य विधेया । अत्राह विनेयः पूर्वं वस्त्रप्रतिलेखनोत्कटुकासनेन विधेयतया प्रतिपादिता तेन तां तथा निर्माय तदनु पादप्रोंछने उपविश्यात्र प्रत्युपेक्षणा कर्तुं इष्यते नैवम्, यतः हि कुर्वतः सतार्थयोः पश्चिमयो भवेत् वेलातिक्रमेन इयं पूर्वाह्णप्रतिलेखना प्रोक्ता ।

अथापराह्णप्रतिलेखनास्वरूपं किंचिदुच्यते तथाहि–प्रत्युपेक्षणा द्विविधा भवतिर्विध अथवातिविध । अनयोर्द्वयोरपि

शैक्षादीनां चोपधिं प्रत्युपेक्ष्य पुनर्मुखांशुकं प्रतिलेखयित्वा गुर्वादेशपूर्वं पात्रमात्रकादिसकलोपधिं प्रत्युपेक्ष्य प्रांते चोलपट्टं प्रतिलेखयति । ये तु भुक्तवंतस्ते प्रथम चोलपट्टं प्रतिलेखयंति, तदनु पात्रमात्रकसंबंधिनमुपधिं, ततो गुर्वादेशपूर्वं गुर्वादीनामुपधिं, तदनु शेषाणि गच्छे साधारणानि पात्राणि वस्त्राणि चापरं भोग्यानि प्रतिलेखयंति । तदनु वदनवसनप्रतिलेखनपूर्वं गुर्वादेशमादाय सौवोपधिं रजोहरणं च प्रतिलेखयंति । यस्य च साधोर्यदा प्रतिलेखना संपूर्णा भवति तदा स साधुर्नवीन पठति पूर्वपठितं वा परावर्त्तयति । अन्यथा वैयावृत्त्यादिव्यापार करोति, एष सूत्रोक्तो विधिः । यदुक्तं श्रीओघनिर्युक्तौ पडिलेहणा उ दुविहा, भत्तट्ठिय एयरा य नायव्वा । दोण्हवि अ आइपडिलेहणा उ मुहणंतगसकायं ॥ १ ॥ तत्तो गुरू परिन्ना गिलाणसेहाति जे अभत्तट्ठी । संदिसह पायमत्ते, अप्पणो पट्टगं चरिमं ॥ २ ॥ पट्टगमत्तयसयमोग्गहो य गुरुमाइयामणुन्नवणा । तो सेसपायवत्थे, पाउंछणयं च भत्तट्ठी ॥ ३ ॥ जस्स जहा पडिलेहा, होइ कया सो तहा पढइ साहू । परियट्टेइ व पयओ, करेइ वा अन्नवावारं ॥ ४ ॥ गुरुसंप्रदायस्त्वेवं यदुपधिमुखपोतिकां प्रत्युपेक्ष्य तदनु स्वाध्यायं विधाय गुर्वादेशपूर्वमुपधिः प्रत्युपेक्षते इति । इमां च प्रतिलेखनां कुर्वता यतिवरेण चतुर्विधाऽपि कथा वर्जनीया । तथा वाचनादिक-पंचविधस्वाध्याय-सूत्राध्ययनाध्यापन-प्रत्याख्यानविधापनाद्यनवद्यमपि न कर्त्तव्यम् । यतः प्रतिलेखना त्यक्तान्यनिखिलकृत्येन मुनिसत्तमेनाप्रमत्ततया विधेया । प्रतिलेखनाप्रमत्तस्तु यतिः षट्कायविराधको भवेत् । तथाहि कुंभकारादिवसतिस्थः प्रतिलेखनाप्रमादी जलकलशादि प्रलोठयेत्, जलेन च पृथिव्यग्निबीजकुंथुप्रभृतीनां विराधना, यत्र च वह्निस्तत्र वातः, एवं षट्कायविराधना । अथवाऽम्भःकुंभे प्रलोठिते

यतनेयं मूषकोत्केरः स्वस्थानमुच्यते २ भ्रमरीगृहादिषु प्रहरत्रयं यावत् संचि० प्रतिपाल्य यदि तावत्यापि वेलया नापैति ततः प्रस्थापनादेस्तावत् मात्रं छित्वा परित्यज्यते, अन्यसद्भावे सर्वमेव त्यज्यते, अत्र यदि तत् पुराणमृतिकया-कृत ततः ताहेति तस्मिन् प्रतिलेखनाकालेऽपनीयते यदि तत्र कृमिका न तया प्रवेशिता ३ इत्युक्तमुपकरणप्रतिलेखनास्वरूपम् २ ।

अथाऽवष्टम्भप्रतिलेखनास्वरूप किंचिदुच्यते । तथाहि प्रत्युपेक्षिते प्रमार्जितेऽपि कुड्यादिप्रदेशे कुंथुपिपीलिकामत्कुणलूता-प्रभृतयः संचरिष्णवस्त्रसाः प्राणाश्चतुर्षु दिक्षु समायांति निरंतरं तेन प्रतिलेखना न शुद्ध्यत्यवष्टंभविषया अतो हेतोर्निरामयस्य तरुणस्यावष्टंभो न कल्पते यतस्तस्मिन् विधीयमाने तेषां त्रसजंतूनां विराधना संभवति । तथा जातु कुडयादिराजिकायां स्थितोऽवष्टम्भे विधीयमाने सरीसृपवृश्चिकादिर्भक्षयति । तथोपरिस्थितगृहकोलिकादिसूत्रे दृशि निपतिते तदुपघातोऽपि भवेत् । तथाजातूद्देहिकादिभक्षितमूले स्तम्भादाववष्टंभं कुर्वतस्तस्य पतनमपि भवेत्तथा च संयमात्मविराधना । एवं बहुदोषसंभवाद-वष्टंभ उत्सर्गतो वर्जनीयः । अपवादपदे तु यस्य वृद्धग्लानादेः पार्श्वानि गाढं दुष्यंति सोपवेष्टुमशक्नुवन्नवष्टंभं गृह्णाति संयतपृष्टौ पाषाणस्तंभे सुधालिप्तकुडयादौ उपधिवेटिकायां वा प्रत्युपेक्षणप्रमार्जनपूर्वं कियत्कालम् । इत्युक्ताऽवष्टंभ-प्रतिलेखना ३ । इत्युक्तं स्थानो१पकरण२वष्टंभ३प्रतिलेखनात्रिकम् । एतद्विषये च प्रमादाऽप्रमादावाश्रित्य सोमिल-मुनिनिर्दर्शनम् । तथाहि कैश्चिद्गुरुभिः कस्मिंश्चिद् ग्रामे गंतुकामैर्मुनय उक्ता यदद्याऽसंपूर्णेऽपि प्रतिलेखनां पात्रविषयां कुरुतेति तदनु तैः श्रीगुरुवचनेन सा निर्मिता । अथ च केनचिन्निमित्तेन गुरवः स्थितास्तदनु पुनः श्रीगुरुवचसा तैः सा विहिता सोमिलस्तु न कुरुते गुरुभिरुक्तस्तु प्रतिवक्ति किं वृश्चिकाः कीटाः सर्पा वा प्रविष्टाः पात्रेषु यत्कृताऽपि तत्

समनोज्ञाऽमनोज्ञाश्च । असंविग्ना अपि द्विभेदा असंविग्नपाक्षिकाः संविग्नपाक्षिकाश्च । परपक्षोऽपि द्विविधो मानुपतिर्यग्भेदात् ।
अनयोश्च प्रत्येकं त्रैविध्य पुरुषस्त्रीनपुंसकभेदतः । पुरुषा अपि दंडिककोडुंबिकप्राकृतिकभेदात् त्रिप्रकाराः । तत्र दंडिको
राजा, कौटुंबिकः श्रेष्ठिप्रभृतिकः, प्राकृतिकः प्रकृतिमध्ये यः प्रधानः । एते च शौचवाद्यशौचवाद्यादिभेदात् द्विविधाः
पुरुषवद् वनितानपुंसकभेदा अपि वाच्याः । एते च मनुष्यभेदा यथा सामान्येनोक्तास्तथा परतीर्थकानप्याश्रित्य वाच्याः ।
तिर्यंचोऽपि द्विविधा दृप्ताऽदृप्तभेदात् । एते च प्रत्येकं जघन्यमध्यमोत्कृष्टभेदेन त्रिविधाः । तत्र जघन्या एलकादयः,
मध्यमा गवादयः, उत्कृष्टाः करटिप्रभृतयः । एते सर्वेऽपि स्त्रीपुंनपुंसकभेदेन त्रिविधाः । एतेऽपि जुगुप्सिताजुगुप्सितभेदेन
द्विविधाः । एतेषां मध्ये मनोज्ञसंयतानामापाते गंतुं कल्पते अमनोज्ञसंयतानामापाते तु तेषामन्यसमाचारीं निरीक्ष्य विनेयानां
स्वसमाचारीपक्षपातजः कलहो भवति । असंविग्नापाते तु प्रचुरधावनशौचकरणं दृष्ट्वा शैक्षकाणामन्यथाभावो भवति; यदेते
शुचयो न त्वस्मन्मुनय इत्यतो हेतोस्तन्मध्ये ते यांति । संयत्यापाते तु शंकादिबहुदोषसंभवः । नरनार्यापाते तु नराणामेव
शंका संभवति यत्र वयं याम आत्मानुचिंताहेतवे यत्र चाऽस्मद् योषिद्वर्गो याति तदर्थं तत्रैव यदेते यांति तन्नूनमेतेऽ-
स्मद्वनिताः कामयन्ते ताभिः सह विहितसंकेता वा । तथा जातु जलस्याऽल्पताया कालुष्येऽभावे वा प्रवचनाऽवर्णवादो वा
भवेत् । अमात्यादिर्वा जातु तत्तथाविधं स्वरूपं निरीक्ष्य जनगृहे भिक्षार्थं प्रवेशमपि निषेधयति । अभिनवश्रावकस्य वा मनो
विपरिणामः स्यात् । योषिन्नपुंसकापाते तु जनानां शंका स्यात् । जातु वनितानपुंसकाभ्यां च बलाद् गृहीतस्य यतेराकर्षणो-
ड्डाहादयो दोषाः संभवेयुः, एते मनुष्यापाते दोषा उक्ताः । दृप्ततिर्यगापाते तु आहननादयो दोषाः । गर्हितगर्दभ्याद्यापाते

प्रवचननिंदया प्रवचनोपघातः २। अंगारदहनभूम्यादौ तु व्युत्सर्जने संयमोपघातः, अंगारदहनादिकार्याणां जनैरन्यभुवि
विधानात् ३। अथ च त्रिविधोपघातो यत्र न भवेत्तदनुपघातिकम् २।
अथ सममितिपदं विव्रियते। तथाहि समस्थंडिलं तद् विज्ञेय यत्र भूमिर्विषमा न भवेत्, विषमभूमौ तु जातु पतेर्लुठ-
नादात्मविराधना पुरीषप्रश्रवणयोस्तु लुठने षट्कायोपमर्दनात् संयमविराधना ३।
अथ शुषिरपदव्याख्या। तृणपर्णादिच्छन्नो भूभागः शुषिरमुच्यते। तत्र च जातु वृश्चिकादिना भक्षणे आत्मविराधना।
मूत्रोच्चाराभ्या तद्गतत्रसादिजंतुजातोपघातेन संयमविराधना ४।
अथाचिरकृतपदविवरणम्। यत् स्थंडिल यस्मिन् ऋतौ हुतवहादिभिरचित्तीकृतं तस्मिन्नेवापरस्मिन् ऋतौ चिरकृत-
मित्युच्यतेऽयोग्यत्वात्तद्विपरीतं त्वचिरकृतम्। यत्र वर्षाकालग्राम उषितस्तत् स्थंडिलं द्वादशवत्सरान् यावदचित्तत्वाद-
चिरकृतम् ५।
अथ विस्तीर्णपदव्याख्या। जघन्यतोऽपि यत् स्थंडिलमेकहस्तविस्तारमुत्कर्षतस्तु द्वादशयोजनव्यासं तद् विस्तीर्ण-
मुच्यते ६।
अथ दूरमवगाढं व्याख्यायते। यत् स्थंडिलं चत्वार्यंगुलान्यधस्तादचित्तीभूतं तज्जघन्यतो दूरमवगाढ मध्यमोत्कृष्टे तु
ते चतुर्णामंगुलानामधस्तादवसेये ७।
अथाऽनासन्नपदव्याख्या। आसन्नं द्विविधं द्रव्यभावभेदतः। तद्विपरीतं त्वनासन्नम्। तत्र द्रव्यतश्चैत्यारामगेहानामा-

प्रत्येकं प्रत्येक पानीयपात्राणि विलोक्यन्ते प्रचुरवारिणा च कुरुकुचाचरणक्षालनादिका कार्या। स्त्रीनपुंसकालोके तु सा पराङ्
मुखतया विधेया। स्त्रीनपुंसकालोकस्य स्थडिलस्य त्वभावे तिरश्चा पुरुषाणामापाते गम्यते। तस्याप्यऽभावे तिर्यङ्नपुंसक-
वनितानामापाते। नवरं जुगुप्सितदृप्ततिर्यगापातं तु वर्जयेत्। तिर्यग्नपुंसकवनितापातस्थंडिलाभावे त्वशौचवादिदंडिक-
कौटुंबिकप्राकृतिकस्त्रीनपुंसकापातेऽपि गम्यते। अत्राह विनेयः, ननु शंकादयः प्रागुक्तदोषास्तदवस्था एवैतेषु स्थंडिलेषु
गच्छताम्। सत्य परं यदि निर्दूषणस्थंडिलाप्राप्त्या गच्छंत्येतेषु तदा शंकानिवृत्तिकृते काशनादि कुर्वंति, अन्योन्यं जल्पंतः
संभूय च गच्छति कुरुकुचां च पादप्रक्षालनादिकां कुर्वंति। उक्तं च श्रीओघनिर्युक्तौ पढमासइ अमणुन्ने, पराणगि-
हिआण वावि। आलोए पत्ते य सत्तकुरुकुअ, दवं च पउरं गिहत्थेसु ॥ १ ॥ तेण परं पुरिसाणं, असोअ-
वाईण वच्च आवाय। इत्थिनपुंसालोए, परम्मुहो कुरुकुआसाओ ॥ २ ॥ तेण परं आवायं, पुरिसे अरह-
त्थिआण तिरिआणं। तत्थविअ परिहरिज्जा, दुगुंछिए दित्तचित्ते अ ॥ ३ ॥ तत्तो इत्थिनपुंसा तिविहा,
तत्थ वि असोअवाईसु। तहिअं तु सहकरण-आउलगमणं कुरुकुआओ ॥ ४ ॥ एवं पथोच्चारस्य परिष्ठापन-
विधिः प्रोक्तस्तथा प्रश्नवणादीनामपि स परिज्ञेयः। इति सामान्यतः पारिष्ठापनिकास्वरूपं किंचिदुक्तम्।

अथ विशेषतो जाताजातपारिष्ठापनिकास्वरूपं किंचित् कथ्यते। तत्र मूलगुणैरुत्तरगुणैश्चाशुद्धा लोभातिरेकगृहीताऽभि-
योगकृता विषकृता च जाता, तद्विपरीता त्वजाता। तत्र मूलगुणाः प्राणातिपातादयः। उत्तरगुणा आधाकर्मप्रभृतयः।
अभियोगो विद्यामंत्रयोगादिभिर्वशीकरणम्। अत्र विद्यायां निदर्शनं यथा काचिदगारी भर्तुरनिष्टा तद्वशीकरणोपायं

प्रमग्गामास कांचित् परिव्राजिकाम् । तया चाभिमन्त्रितं दत्तस्तस्याः समर्पितवत्यस्ते । तदनु साऽगारी स्वपतिस्मृतिविकल्पा त स्वपतिस्मरके । अथ च तं भक्षयित्वा तस्यामनुरक्तः स स्वस्त्या द्वारं कुट्टयामास । तदा च पतिपृच्छया तया यथास्थिते कथिते प्राक्तनेन देवानिवा सा परिव्राजिका । एवमभिमन्त्रिते पिण्डे गृहीते परेऽपि रागादिदोषोत्पत्तिर्जायते । तेन स त्यज्यते ।

अथ योगपिण्डे दृष्टान्तः काचित् विरक्ता कस्मिंश्चित् स्वरूपे भिक्षावनुरक्ता । स च तां नेच्छति । तदनु तया तस्य योगपिण्डो दत्तः । तस्मिन् गृहीते तस्य मनस्तस्या अभिमुखमभूत् । तदा च स भक्तितो योगराभिमुखो गुरोरग्रे तं पिण्डं स्थापितं व्युत्सर्जयामास । अथ च तस्मिन् योगपिण्डे पात्रे गृहीते गुरोरप्यनुरागसमभावः । अथ च शिष्येण तस्मिन्ननुरागमभावे आलोचिते गुरुणोक्तं ममाप्यनुराग-भावस्तन्नूनं तया योगपिण्डो दत्तः; तस्य परिष्ठापनार्हः । इति गुरुभिरुक्ते स पिण्डः शिष्येण यथोचिते स्थण्डिले परिष्ठापितः । एवं योगपिण्डे गृहीते नीरागस्यापि रागोत्पत्त्यादिदूषणं संभवेत्तस्मात् स विधिना परिष्ठापनीयः एवं विषपिण्डोऽपि यथाविना परिष्ठाप्यते विधिना । विधिमार्ग एकपिण्डनापातेऽपि ये गुरुपदिष्टे स्थण्डिले भूम्या मिश्रीकृत्य तथा परिष्ठापनीयो विषयोगमिश्रपिण्डो यथा-रम्भकारिजंतूनां मोपघातादिदोषः संभवेत् । परिष्ठापनविधि परिस्थितिरमयं भावयं कर्तव्यं येन दोषेण स पिण्डो दुष्टो भवति तस्य । एवं मूलोत्तरगुणाशुद्धे क्षेमातिरेक-गृहीते च पिण्डे त्रिः भावयं कर्तव्यम् । परं मूलगुणाशुद्धे एकपुंजः कार्यः । उत्तरगुणाशुद्धे क्षेमातिरेकगृहीते च पिण्डे पुंजद्वयं कार्यम् । एवमेतान् पिण्डान् परिष्ठाप्य व्युत्सृष्टमिति वाच्यम् । एवमशुद्धाहारपरिष्ठापना ज्ञाता श्रोक्ता तद्विपरीता ज्ञातव्या । अन्यथाना परिष्ठापना कथं संभवति ? यतः शुद्धाहारोऽपि यथायोग्येन एव प्रकृते यथायोग्ये च गृहीते कथं

परिष्ठापना । उच्यते आचार्यग्लानप्राघूर्णकदुर्लभद्रव्यसहसादानैरजाताऽपि परिष्ठापनिका संभवति । तथाहि कुत्रचित् क्षेत्रे
आचार्यादिप्रायोग्यद्रव्यं दुर्लभ भवेत्तत् च सर्वेऽपि संघाटका आचार्यादियोग्य द्रव्यं गृह्णंति ततश्च शुद्धाहारेऽधिके गृहिते
परिष्ठापन संभवति । तथा सहसा प्रचुराहारे दत्तेऽधिकतया परिष्ठापनं संभवति । अत्र च केचिदाहुः-यद्यसावाचार्यस्तरुणो
निरुपहतेंद्रियश्च तदाऽसौ मंडल्यामेव सर्वैः समं सममेव भुक्ते । अथाऽसहस्तदैतस्य कृते पृथक् तद्योग्यद्रव्यग्रहणम् । एवं
प्राघूर्णकेऽपि । केचिच्चैवं वदंति यदुत समर्थस्याप्याचार्यस्य कृते तद्योग्यं द्रव्य पृथग्ग्राह्यम् । यत एते गुणाः आचार्यस्य
मनोज्ञाहारेण सूत्रार्थयोः स्थिरीकरणं विनयगुरुपूजे च कृते भवतः शिष्यस्य गुरुं प्रति बहुमानो दर्शितो भवति दातुश्च
श्रद्धावृद्धिः कृता स्यात् गुरोर्बुद्धिबलयोर्वर्द्धनं च कृतं भवति । एवं च गुरुभक्तौ कृतायां गच्छस्य तीर्थस्य च भक्तिः कृता
स्याचस्मालभे सति द्रव्यक्षेत्रकालभावैरुत्कृष्टमेव वस्तु समादेयमाचार्यस्य कृते । तत्र पयसा सह कलमशाल्योदनं द्रव्यो-
त्कृष्टम् । तदभावे हान्या तावद् वाच्यं यावज्जलेन सह राद्धं कोद्रवोदनं तदपि च मृदुबहुस्नेहसहित च क्षेत्रकालावाश्रित्य
तु यद् यस्मिन् क्षेत्रकाले चोत्कृष्टं तदेव सूरेः समुचितम् । भावे तु यद् यस्य सूरेरनुकूलं तत्तस्य समानेयम् । एतच्च द्रव्या-
द्युत्कृष्टं सति लाभे एक एव संघाटको गृह्णाति । अन्यथा तु सर्वेऽपि गुरुयोग्यं गृह्णंति । एवं च सर्वैः संघाटकैर्जातु गुरोरा-
त्मनश्च पर्याप्त्या ग्रहणेऽधिकतया भवेदशनादिना परिष्ठापने । तथा ग्लानस्य कृते नियमेन योग्यं ग्राह्यम् । नवरं तत्कृते
प्रार्थितमपि तद् ग्राह्यम् । तत्र यत् प्रार्थित तच्चेदधिकं तदा परिष्ठापनार्हम् । अप्रार्थितं तु शेषं यतिभिर्भोक्तव्यम्, तथा दुर्लभ-
द्रव्ये च घृतादिके भुक्ते शेषं परिष्ठापनार्हं स्यात् । तथा परिमितमेव दास्यामि लास्यामीति चिंतयतोर्गृहिव्रतिनोः सहसैव

गते मृते परिष्ठापनार्हे भवेत् । एवमेतैरन्यापोदिभिर्निमित्तभूतैर्योऽष्टप्रकारेऽप्यधिके गृहीतेऽन्नादौ पारिष्ठापनिका संभवति । एवमेभिः कारणैः शुद्धाहारोऽप्यधिकस्तथा लोके पुंजत्रयं कृत्वा परिष्ठापनीयः । एवं आहाराहारपारिष्ठापनिकाकृते निर्मलस्य भावेन एवं भवेदन्नाऽऽहारे कृतेऽप्यनीहारः स्यादिति वहुविधिः प्रागुक्त एव ज्ञेयः । उक्तशेष कथ्यते तथाहि-मलीमसतया शोधितेत् प्रथमं स्थंडिले मंडं न शक्नोति भवितव्यता द्वितीयेऽप्यन्नाभावर्सलोकस्थंडिले गच्छेत् । तदशक्तौ तृतीये आपाता संलोके । तदशक्तौ तुर्ये आपातसंलोकेऽपि । तदशक्तौ ग्रामद्वारे । तदशक्तौ रथ्यायाम् । तदशक्तौ उपाश्रयेऽमच्छरद्वारका अपद्वारे तथाऽऽश्रयासुपाश्रय एवं मात्रके तथाऽऽश्रयकालविपरीतासौ मरणीयार्थेऽपि कुर्यादुत्सर्गविधिम् । अत्र कथा अपुत्रे विषमृते पराधृता मात्रेऽभीतैरेषकां तपनयां तृषो भवति ' अभीतं त्वया किंचिद् देवक ! 'मिति पृष्टे सा प्राह ' अभीत ' इति । एवं च तस्या वर्तमाना अकस्मात् वातप्रभविताभूतया वायुवेगैस्तस्ये कृते सा देवी तदात्म कथयामास राजनीति कस्यान्यस्मिन् देहे प्रतिष्ठितानि वातप्रकोपारमन्यानि । तानि च देवमात्राणि नैव धारयेत् । एतच तैः सर्वैरपि मानितम् । अथयेवार्थः समर्थितः भीमसेनर्निर्दुष्टिकगाथादि कदि पढमं न तरेज्जा, तो बितियं तस्स असईए तइयं । तस्स असई वट्टत्ये, गामे दारे व रत्थाए ॥ १ ॥ साही पुरोहडे वा उवस्सए मत्तगम्मि वा णिसिरे । अब्भुसमम्मि वेगो, मडविपासम्मि वोसिरइ ॥ २ ॥ राया बिरुद्धम्मि भए, विरुद्धरूपे भणइ किं च ते अहीयं । अहियत्ति वायकम्मे, विरुजे इसणा य परिकहणा ॥ ३ ॥ तिष्णि सड्ढा महाराय, असिस देहे पइट्ठिया । वायमुत्तपुरीसाणं, पत्तवेगं न धारए ॥ ४ ॥ एवं यथा आहाराऽऽहारा च पारिष्ठापनिकाऽऽहारविषया प्रोक्ता । तथा पानपानविषयाऽपि ज्ञातव्या । एकेन्द्रियनो

एकेंद्रियपरिष्ठापनविधिस्तु श्रीमदावश्यकनिर्युक्तेरवसेयः, बहुविस्तरत्वाच्च नात्र प्रतन्यते। तत्रैकेंद्रियाः पृथिव्यादयो नो–
एकेंद्रियास्त्रसादयः। स्थंडिले उच्चारादि व्युत्सृजति यतिस्तत्र प्रतिलेखनाप्रमार्जने कर्तव्ये। अत्र चतुर्भंगी प्रतिलेखयति दृष्ट्या
प्रमार्जयति च रजोहरणादिना तदा स्थावरास्त्रसाश्च रक्षिताः १। प्रतिलेखयति न तु प्रमार्जयति तथा स्थावरा रक्षिता न तु
त्रसाः २। न प्रतिलेखयति किंतु प्रमार्जयति तदा त्रसा रक्षिता न तु स्थावराः ३। उभयमपि न विधत्ते तदा द्वयेऽपि न
रक्षिताः ४। एवं डगलकग्रहणेऽपि चतुर्भंगी वाच्या। अत्र च पारिष्ठापनिकामसितौ सुव्रताचार्यक्षुल्लनिदर्शनम्। स हि
सन्ध्यासमये मुनिभिरुक्तो 'भोः! क्षुल्ल! स्थंडिलानि प्रतिलेखय' इति तदा च स प्रतिवक्ति 'किं करभ उपविश्य स्थितोऽस्ति,
यत् प्रतिदिनं स्थंडिलशोधनं विधीयते?' अथ च स यामिनीसमये कायिकीपरिष्ठापनकृते समुत्थितो देवतया दीर्घग्रीव-
रूप विधाय भापितः। तदा च गुरुभिरुक्तो 'भोः! शिष्य! अप्रतिलेखिते स्थंडिले नोच्चारप्रश्रवणादिव्युत्सर्गो विधीयते,
यतोऽप्रतिलेखिते स्थंडिले यः कायिक्यादिपरिष्ठापनं न करोति तस्य मुनिचंद्रस्येव देवता सान्निध्य विदधाति' इति
गुरुभिरुक्ते स प्रश्नयामास 'भगवन्! कोऽसौ मुनिचंद्रः? किं च तस्य देवतया साहाय्यं कृत?'मिति तेन पृष्टे गुरुरूचे
'अस्मिन्नेव गच्छे पुरा मुनिचंद्रनामा मुनिरभूदप्रमत्तो यतिक्रियायाम्। तस्य चान्यदा साधुसमुचितक्रियाव्यग्रस्य विस्मृति-
मगमत् स्थंडिलनिरीक्षणम्। अथ च निशि स कायिक्या बाधितोऽपि स्थंडिलाशोधनार्चां न चकार। तदा च देवतया बाढं
त तत्पीडितं विज्ञायोद्द्योतः कृतः। कृते च तस्मिन् स तां स्थंडिले परिष्ठापयामास। परिष्ठापितायां च तस्यां पुनरंधकारे
जाते तमुद्द्योत देवताविहित विज्ञाय पश्चात्तापपुरस्सरं तमपराधमालोच्य सम्यक् चरिताराधन निर्माय निखिलकर्मनिर्मूलन-

एवंपुनर्मवं मतः ।' एवं श्रीगुरूक्तं श्लोकमाकर्ण्य मुक्तोऽपि पारिष्ठापनिकासमितावुद्युक्तः समभूत् । यथाऽनेन मुक्तेन प्रथम पंचमसमितौ प्रमादः कृतस्तथाऽन्यैर्न विधेयः । यथा च धर्मरुचिना पंचमसमितिः सम्यगाराधिता तथान्यैरपि सुनिपुणधीः सा सम्यगाराधनीया । इत्युक्तं किंचित् पारिष्ठापनिकासमितिस्वरूपम् । तदुक्तौ च प्रसंगिताः किंचित् पंचसमितयः ॥ ५ ॥

अथ गुप्तित्रयस्वरूपं किंचिदुच्यते । तथाहि चेतोवचनतनुगुप्तिलक्षणास्तिस्रो गुप्तयो भवंति तत्र सत्या १ऽसत्या २ सत्यामृषा ३ऽसत्यामृषा ४ भेदेन चतुर्धा मनोगुप्तिः । तत्र जीवं जीवमित्यादि चिंतयतः सत्यमनोयोगस्तद्विषया गुप्तिरपि सत्या । अजीवे जीवमित्यादि चिंतयतस्त्वसत्यमनोयोगस्तद्विषया गुप्तिरप्यसत्या । एवं सत्यामृषाऽसत्यामृषे अपि मनो गुप्ती सत्यामृषाऽसत्यामृषामनोयोगविषये विज्ञेये । सत्यासत्यादिस्वरूपं तु प्राक् प्रतिपादितम् । अयं च चतुर्विधोऽपि मनोयोगो मनोद्रव्यविषयः । तत्र मनोद्रव्यं संरंभसमारंभारंभेषु प्रवर्तमानं निवर्तयति मनोगुप्तिविधानाम् । तत्र संरंभः संकल्पः । स च यथाहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवं रूपः । समारंभस्तु परपीडोत्पादनादिध्यानम् । आरंभस्तु परप्राणापहारकमहद्ध्यानम् । एतेषु त्रिष्वपि न प्रवर्तनीयं सर्वथैव निजं मनः । यद्वोऽकुशलमनसो निरोधः कुशलमनसश्चोदीरणं तदेतस्य मनोगुप्तिरुच्यते । यदुक्तं श्रीपुष्पमालायां अकुसलमणनिरोहो, कुसलस्स उईरणं तहेगत्तं । इय मिविधमणपसरा, मणगुत्तिं विंति महरिसिणो ॥ १ ॥ यतो गुप्तित्रयेऽपि मनोगुप्तिरेव दुष्करा । उक्तं च जयत्याप रसणा ॥ १ ॥ तथा अवि जलही वि निबंभइ, पवणो वि खलिज्जए उवाएण । मणो न निप्पिच्छो वि न, कोवि उवाओ मणनिरोहे ॥ २ ॥ चित्तं अचिंतनिल्लं, वच्चइ दूरं पि सयह दुक्कं पि । छक्कमाण वि जेण

मणो, भसइ दुरायारमहिलव्व ॥ २ ॥ मुक्तिश्च मनःशुद्धिं विना नैव जातु भवेत् । यदुक्तं श्रीयोगशास्त्रे चतुर्थप्रकाशे, ' मनः क्षपाचरो भ्राम्यन्नपशङ्कं निरङ्कुशः । प्रपातयति संसारा-वर्तगर्ते जगत्त्रयम् ॥ ३५ ॥ तप्यमानाँ-स्तपो मुक्तौ, गन्तुकामान् शरीरिणः । वात्येव तरलं चेतः, क्षिपत्यन्यत्र कुत्रचित् ॥ ३६ ॥ अनिरुद्धमनस्कः सन्, योगश्रद्धां दधाति यः । पद्भ्यां जिगमिषुर्ग्रामं, स पङ्गुरिव हस्यते ॥ ३७ ॥ मनोरोधे निरुध्यन्ते, कर्माण्यपि समन्ततः ॥ अनिरुद्धमनस्कस्य, प्रसरन्ति हितान्यपि ॥ ३८ ॥ मनःकपिरयं विश्व-परिभ्रमण-लम्पटः । नियन्त्रणीयो यत्नेन, मुक्तिमिच्छुभिरात्मनः ॥ ३९ ॥ दीपिका खल्वनिर्वाणा, निर्वाणपथदर्शिनी । एकैव मनसः शुद्धिः, समानीता मनीषिभिः ॥ ४० ॥ सत्यां हि मनसः शुद्धौ, सन्त्यसन्तोऽपि यद्गुणाः । सन्तोऽप्यसत्यां नो सन्ति, सैव कार्या बुधैस्ततः ॥ ४१ ॥ मनःशुद्धिमबिभ्राणा, ये तपस्यन्ति मुक्तये । त्यक्त्वा नावं भुजाभ्यां ते, तितीर्षन्ति महार्णवम् ॥ ४२ ॥ तपस्विनो मनःशुद्धि-विना भूतस्य सर्वथा । ध्यानं खलु मुधा चक्षु-र्विकलस्येव दर्पणः ॥ ४३ ॥ तदवश्यं मनःशुद्धिः, कर्तव्या शुद्धिमिच्छता । तपः-श्रुतयमप्रायैः, किमन्यैः कायदण्डनैः ? ॥ ४४ ॥ ' इत्यादिर्भावनाभिरविश्रांतमित्यादिश्लोकांतोऽधिकारो वाच्यः । तथाऽत्र भवभावना कथान्विता वाच्या । तस्माद्धर्मशुक्लध्यानं विधानसावधानेन मुनिप्रधानेनार्त्तरौद्रध्यानविषये प्रवर्त्तमानं मनः सर्वथैव निवारणीय यत आर्त्तध्यानं तिर्यग्गतिनिदानं रौद्रध्यानं तु निरयगतिहेतुः । उक्तं च अट्टेण य तिरिअगई, रुद्दज्झाणेण गम्मए नरए । अस्यां च मनोगुप्तौ विपर्ययेऽविपर्यये च कौंकणश्रमणो निदर्शनम् । तथाहि कौंकणग्राम्यो

सोऽपि यतिपुङ्गवः समभूत्। स च प्रतिवर्षं कृषिकर्म निर्माय धान्यान् मोचयन् जनपदनाम्नैव विश्रुतः समभूत् कौटुम्ब इति। स चान्यदा वर्षर्तौ समाकर्ण्य धर्मं कृषिकर्मोद्यमं विहाय धार्मिके मत आगत्य कर्मराधयते। अन्येद्युः प्राहृसमये स कायिकी व्युत्सृष्टेर्यापथिकप्रतिक्रमणसमये तस्थौ तनूत्सर्गेण। अथ च प्रभूतसमयातिक्रमे तेन तनूत्सर्गे पारिते गुरुभिरुक्तं 'भो भद्र! त्वया किं ध्यातमियन्तं समयम्?' तेनोक्तं 'कृपा ध्याता' गुरुभिरुक्तं 'कथं?' स प्राह 'यदा वपनकाल समये, तदा ग्रीष्मसमये सर्वत्र क्षेत्रे शुभाशुभस्य स्थानस्य प्रत्यासन्नो ग्राम मध्यग्रामस्थितम पारिहे कर्षति धान्यधार्य कर्मस्वरूपं प्रभूतानि धान्यानि निष्पाद्यन्ते स्म। साम्प्रतं च मयि श्रामण्यं प्रतिपन्ने मत्पुत्राः कृषिकर्मण्यप्रवीणा निश्चिततयोप विश्य स्थिता भविष्यन्ति। तेऽपि चेदेवं विदधति तदा वरम्। अन्यथा ते वराकाः क्षुत्क्षामकुक्षयो मरिष्यन्तीत्येवं मया चिन्तिता ध्याता' इति तेनोक्ते श्रीगुरुः प्राह 'भद्र! त्वयैवं दुर्ध्यातम्। यतो जन्तुघातसंहारं विना नैव भवेत् कृषिकर्म। तस्मादेतद्दुर्चिन्तितविषये मिथ्या मे दुष्कृतं दीयताम्' इति गुरुभिरुदीरिते श्रीगुरुसमक्षं तद्दुरितनिदानं निर्माय तद्-दनन्तरं स पुनस्तस्थौ कायोत्सर्गे। तत्र च स्थितः स तद्दुश्चिन्तितनिरसनपरः क्षपकश्रेणिं समारूढः केवलावबोधमवाप। यथा चानेन महात्मना प्रथमं मनो न निरुद्धं तथाऽन्यैर्न विधेयम्। यथा चाऽनेन पश्चान्निरोधः कृतस्तथाऽपरैरप्यनगारैः कार्यः। इति निगदितं किञ्चिन्मनोगुप्तिस्वरूपम् ॥ १ ॥

अथ वाग्गुप्तिस्वरूपं किञ्चिदुच्यते। तथाहि—सत्याऽसत्यादिभेदैश्चतुर्धा वचनगुप्तिस्तत्र सत्यवचनविषया सत्यावचन-गुप्तिरसत्यवचनविषयाऽसत्या सत्यामृषावाग्विषया सत्यामृषाऽसत्यामृषावाग्विषयाऽसत्यामृषा। इयं च चतूरूपाऽपि

वाग्गुप्तिर्वचनविषया । तच्च वचनं संरंभसमारंभारमेषु न प्रवर्त्तनीयमनणीयःपुण्यार्थिना । तत्र संरंभः परप्राणव्यपरोपण-
क्षमक्षुद्रविद्यामन्त्रादिपरावर्त्तनासंकल्पसूचको ध्वनिरेवं संकल्पशब्दवाच्यः सन् समारंभस्तु परपरितापकरमंत्रादिपरावर्त्तनम् ।
आरभस्तु परप्राणप्रयाणकारिमन्त्रादिजपनम् । एतेषु त्रिष्वपि निजवचो नैव प्रवर्चितव्यं यतिपुंगवेन । यतोऽकुशलवचन-
निरोधः कुशलवचसस्तूदीरणमेकत्वं च वचनगुप्तिरुच्यते। यदुक्तं अकुसलवयणनिरोहो, कुसलस्स उईरणं तहेगत्तं ।
इअ निविअवयपसरा, वयगुत्तिं धिंति महरिसिणो ॥ १ ॥ किं चाऽसंवृतात्मनां वाग्गुप्तिर्दुष्करा यदुक्तं दम्मंति
तुरंगा वि हु, कुसलेहिं गया वि संजमिज्झंति । वयवाधिं संजमिउं, निउणाण वि दुक्करं मन्ने ॥ १ ॥ इयं
वचनगुप्तिः सूत्रार्थकोविदैः कैश्चिदेव सम्यक् समाराध्यते गुणदत्तयतिवत् । तत्कथा चेयं–श्रीपुरनगरे धनदेवनामा इभ्यः
समभूत् । तस्य धनवती दयिता तयोस्तनूजन्मा गुणदत्तनामा । स च गुरुसमीपे धर्मं समाकर्ण्य प्रव्रज्यां जग्राह बद्धाग्रहः
कर्मनिर्मथने । स च विधिवद् गुरुसविधेऽधीतसूत्रार्थो गीतार्थः सन् सांसारिकवर्गवंदापनीयः श्रीगुर्वादेशं समादाय श्रीपुरं
प्रति प्रस्थित एककः । स च तत्र गच्छन्नन्तरा परमोपिभिर्धृत्वा समानीतः पल्लीपतिसमीपे । अथ च कियत्समयातिक्रमे
पल्लीशं प्रति प्रोवाच वाचंयमः 'अकिंचनोऽहं केन हेतुना भवद्भिरत्र स्थापितः, चेन्मम सिचयैः किंचिद् युष्माकं प्रयोजनं
तदा तान्यपि समादाय मोचनीयोऽहं यतोऽरण्येऽस्माकं प्रासुकाहारस्य प्राप्तिर्न स्यात् । आहारं विना च तनुः कथं धर्तुं
शक्यते' इति यतिनोदिते पल्लीपतिः प्राह 'न भवता भवद्वस्त्रैर्वा किंचिदस्माकं प्रयोजनम् । परमनेन वर्त्मना जन्य-
यात्रा समेष्यति, तल्लुटनकृतेऽस्माभिर्मार्गो विद्धोऽस्ति यदि च त्वां मुंचामस्तदैतदस्मच्चिन्तितं न स्यात् यतोऽध्वानं वदं

विहाय साम्यमार्गेण यातं ' इति पल्लीपतिनोक्ते मुनिः प्राह ' यदि हे पल्लीश ! मां मुञ्च यतोऽयमस्माकमाचारः सुमाऽस्तु-
मायार्थो न विमीयते । किन्तु युष्मत्कारि मनैर्मौनमेव क्रियते ' इति मतिनोक्तेऽप्यार्यो तत्र यतोऽस्तीरसुरीर्ते स पल्लीशेन मुक्तो
ममास श्रीपुरनगरे । तत्र च यतः स सार्थनैर्वहिस्ता मथिता यत् प्रस्तावेऽपूप समापाताः तेनाऽस्माभिः सममेव समेतव्य
युष्मच्छुर्वाक्यमन्यथाभासो युष्माभिः । एव तैरतीव निर्बन्धे कृते तैः सममेव स चचाल तैनैषाऽऽनेन, एवं च स
सार्थो मयन् मार्गचौरस्थानमापतः तत्र ' हंत हंत गृहीत गृहीते 'ति वल्गंतस्ते तस्करा दधाविरे वस्तुंठनाय । एवं विलो
रिव नश्यत्सु वनेषु हेंटाकेषु च अत्रस्तु स मुनिर्निराश्रयः विविधमितिरवालम्ब एकाके सरभो वनूस्सर्मेन । अथ च स
मुनिस्तेन पल्लीशेन वनं भ्रमता निरीक्षितः, निरीक्ष्य च मत्वा पुनः पुनस्तं नमस्कृत्य स पल्लीपतिः स्वसेवकजनाकारया
मास, आश्चर्यं च कथितवान् सोऽयं सत्यवादी महामुनिः । तेऽपि च तं सम्यगुपलक्ष्य मत्पतिक्षपात् पुनः पुनः प्रणेमुः ।
अथ च मुनिमाता तान् विस्मितान् वीक्ष्य पिथे चिन्तयामास मूनममीभिः सेभूय मुनिः कस्पर्यमानोऽस्ति ततः गत्वा
निवारयाम्येतान् मुमिसेवनतत्परान् । इति विचिन्त्य सुतमोहमोहिता सा पाथत्रागता तावतान् मुनिपदनस्तवनपरायणा-
न्वीक्ष्य सा साभिषेणमेवहवती ' हि भो ! भवतां मयकाथार्थिक्यमेवन्मुनिर्वन्दनस्तवनादिकम् ' इति तयोक्ते
परिमोषिपतिः मोककान् ' जननि ! किमिति त्वं ब्रूषे ! यत एतत्परिचयानमस्मादिभिरस्माकमात्मसमर्जितं दुरित दूरतो
याति । यतो महात्मनां सेवा सर्वदुष्कृतापहारिणी । महात्मा स्वयमेव यत एतस्मिन् शरणं समस्तर्य रक्षते ।' एवं तं
पल्लीपति पतिसत्वविपर निरीक्ष्य साभ्याषत ' कथं युष्माभिरेतस्मिन् सत्यवादित्वमवगतम् ? ' इति तयोक्ते स मोकवान्

'ह्यस्तने दिने वचः समादाय मोचनात्' इति तेनोक्ते सा प्रोक्तवती 'यद्यनेन यूयं ज्ञात्वाऽपि न कथितास्तदर्पयेनां शस्त्रीं यद्दारयामि स्वीयकुक्षिं यत्रायं पापात्मा तस्थौ। यतोऽनेन जानताऽपि निजकुटुंबमीदृग्विधे संकटे पातितं तर्हि किमस्य सत्योक्त्या मौनेन वा ?' इत्यादिवादिनीं खेदपरां तां निरीक्ष्य तस्करपतिः प्रोक्तवान् 'मातः किमयं तव तनयः ?' इति तेनोक्ते मुनिमाताऽवदत् 'अयं मम ज्येष्ठस्तनूजन्मा। यः परिणयनार्थं गच्छन्नस्ति स कनिष्ठः' इति तया निगदिते पल्लीनाथः कथितवान् 'चेदेव तर्हि वनितासु त्वमेव धन्या यत्कुक्षौ मूर्त्तिमान् सत्यधर्म इवायं तनयः समवततार। तदनेन कुल पवित्रीकृतम्। अनेन च मेदिनी ऋपिवती। अतोऽयं देवानामपि पर्युपासनीयः। अन्यच्च चेत्तत्रभवती भवती यतेरेतस्य जननी तर्हि ममापि जनन्येवे'त्याद्युदित्वा स तत्पदोरनमत्। नत्वा च यद् येन लुंटितमभूत् तत्सर्वमपि पश्चादर्पयामास। अस्मिंश्च समये स मुनिः कायोत्सर्गं अर्पयित्वा च प्रोक्तवान् 'यदत्र युष्माभिः सर्वदा निर्भयैर्गंतव्यमागंतव्य च।' तं च निशम्य तैर्यथायोगं स आदृतः, ते च मुनिं पारयामास। पारयित्वा च तेषां सर्वेषां पुरतः सुकृतमार्गं प्ररूपयामास। मुनिरपि च श्रीगुरुसमीपे गत्वा सम्यक्चारित्रमाराधयामास। स्वजना निष्प्रत्यूहं पाणिग्रहणमहं निर्माय जग्मुर्यथागतम्। यथा चाऽनेन गुणदत्तेन महात्मना तादृग्विधप्रस्तावेऽपि वचनगुप्तिर्न खंडिता तथाऽन्यैरपि न खंडनीया। इत्युक्तं किंचिद् वचनगुप्तिस्वरूपम् ॥ ७ ॥

अथ कायगुप्तिस्वरूपं किंचिदुच्यते। तथाहि ऊर्ध्वस्थाननिषीदनशयनं तथाविधप्रयोजनगर्त्ताद्युल्लंघनगमनेंद्रियव्यापारादिके काययोगे प्रवर्त्तमाने संरंभसमारंभारंभत्रिक वर्जनीयम् तत्र संरंभोऽभिघाताय मुष्ट्याद्युत्पादनमेवाभिघातसंकल्पसूचक-

यथाऽनेन साधुना प्रथम तनुगुप्तिः खडिता तथाऽन्यैर्न खंडनीया । यथा चाऽनेन सा पश्चात् सम्यगाराधिता तथाऽपरैर-
न्याराधनीया । इत्युक्तं किंचित् कायगुप्तिस्वरूपम् ॥ ८ ॥

एतास्वष्टप्रवचनजननीषु पंचसमितयश्चरितक्रियायाः प्रवर्त्तने विज्ञेयाः । गुप्तयस्तु सर्वेभ्योऽप्यशुभमनोयोगादिभ्यो निवर्त्तने द्रष्टव्याः, शुभयोगानां च प्रवर्त्तने शैलेश्यवस्थायां तु तेभ्योऽपि निवर्त्तनेऽवसेयाः । अयमेव च भेदः समितीनां गुप्तीनां च । यत् समितयः प्रवीचारात्मिका गुप्तयस्तु प्रवीचाराऽप्रवीचारात्मिकाः ॥ उक्तं च समिओ निअमा गुत्तो, गुत्तो समिअत्तणम्मि भइअव्वो । कुसलवयमुदीरंतो, जं य गुत्तो वि समिओ वि ॥ १ ॥ एता अष्टावपि प्रवचनजनन्यः साधुना श्रामण्यप्रतिपत्तिसमनंतरं चरमसमयं यावदखंडिततया पालनीयाः । श्राद्धेनापि श्राद्धधर्मप्रतिपत्त्यनंतरमहर्निशं यथाशक्ति तत्पालने प्रयत्नो विधेयः । यतो यान्येव प्राणातिपातविरमणादीनि यतीनां महाव्रतानि तान्येव श्रमणोपासकानाममहाव्रतानि देशतः प्राणातिपातविरमणादिरूपाणि । ततः श्राद्धानामपि सर्वशक्त्या देशतो वसु(८)मितप्रवचनजनन्याराधने यत्नः कृतो विलोक्यत एव । कृतसामायिकपौषधव्रतेन तु श्राद्धेन मुनिवदेता अष्टावपि प्रवचनमातरः सम्यगाराधनीयाः । यत सामायिके कृते श्रमणोपासकोऽपि श्रमणप्रतिम एव प्रोच्यते । यदुक्तं सामाइअम्मि उ कए, समणो इव सावओ हवइ जम्हा । एएण कारणेणं, बहुसो सामाइअं कुज्जा ॥ १ ॥ येन च श्रमणेन श्रमणोपासकेन वा एता अष्टप्रवचनमातरः सम्यगाराधितास्तेन सर्वमपि समाराधितं श्रीमदर्हद्भाषितम् । यत एतासु मातं समस्तमपि प्रवचनम् । तथाहि ईर्यायां प्रथमव्रतं समवतरति, तद्वृत्तिकल्पानि च शेषव्रतानि तत्रैवांतर्भवंति । तेषु च तन्नास्ति वस्तु

भवति चम उपचरति। चउद्दस परमम्मि सव्वजीवा, जीव चरमे अ अप्पपरक्खाइ। सेसा मइअन्नाणा भणिउ, तदेगदेसेण नायव्वा ॥ १ ॥ एवमनंतः सर्वमपि प्रवचनमीर्षासमितार्थकर्मभूतम्। एवं ज्ञानासमित्याद्यास्तदपि ज्ञानना विशेषा समयानुसारेण। अतनाऽऽस्त्रवपेततामारित्राचारसूचारित्रं सम्यग्ज्ञानदर्शने विना न भवति। न चैतद्विनयसमधिकं किंचिदर्थतो ज्ञानधर्ममित्तव एतावत्खेशमपि प्रवचनं मातमुच्यते। यतो देशोदेशास्तत्खेशमपि प्रवचनमतः कारणात् साधूना भावेन च निरतिचारचारित्रपालनमतेनैतदाराधने सर्वशक्त्या प्रयत्नतः कार्यः। यत एतत्-पालन विना दुष्करमपि तपःक्रियानुष्ठानादिक निरर्थकम्। यत एता एव चारित्रम्। चारित्रं च विना तपःक्रियानुष्ठानं निरर्थकमुच्यते। यदुक्तं नाणं चरित्तहीणं, लिंगग्गहणं च दसणविहीणं। संजमहीणं च तवं, जो चरइ निरत्थयं तस्स ॥ १ ॥ तथा ज्ञानदर्शने अपि चारित्रं विना न शिवफलदे। अतश्चारित्रमेव विशिष्यते। उक्तं च जम्हा दसणनाणा, संपुन्नफलं न दिंति पत्तेयं। चारित्तजुआ दिंति अ, विसिस्सए तेण चारित्तं ॥ १ ॥ तस्मात् ज्ञानदर्शनतपसां फलं शिव-सुखमिच्छता सर्वशक्त्या पवित्रम्यमष्टप्रवचनमातृरूपचारित्राचारसमाराधने ॥

॥ इति श्रीमत्तपागच्छाधिराजभट्टारकपट्टप्रभाकर-श्रीसोमजयसूरिशिष्यशिरोमणिश्रीइन्द्रनन्दिसूरिराजविनेयाणु
सिद्धान्तसारसंकलिते श्रीधर्मरत्नाकरग्रन्थे श्रीमज्जुगप्रवरपदवि श्रीऋषभदेवनामिधानायां
तृतीयकल्पाभिधमष्टप्रवचनमातृधर्मनामा तृतीयस्तरंगः संपूर्णः ॥

# अथ चतुर्थः तरङ्गः ।

अथैतस्यामेव ऋषभदेशनाभिधानाया तृतीयलहर्यां तुरीयतरंगः प्रारभ्यते । तत्र तृतीयतरंगे सामान्येनाष्टप्रवचनमातृ-
रूपचारित्राचारवर्णनं कृतम् । तच्च चारित्रं द्विविधं सर्वतो देशतश्च । तत्र सर्वतः साधूनां देशतस्तु गृहिणाम् । तत्र साधु-
भिरेकविधासंयमप्रभृतित्रयस्त्रिंशदाशातनापर्यंतानि प्रमादानि परिहार्य्याण्यहार्य्यसुखकामुकैः । तत्राऽसंयमोऽविरतिरूप एक-
विधोऽविरतिर्यतोऽविरतिरनंतसंसारकांतारपरिभ्रमणकारणम्, सम्यग्दृष्टेरप्यविरतिः संसारदीर्घताकारिणी किं पुनः सा
मिथ्यात्वसंयुता । तस्मादविरतिर्वर्जनीया ॥ १ ॥

तथा बध्यते जंतुर्वसु(८)मितकर्मभिर्येन हेतुना तद्बंधनम् । तच्च द्विविधं रागद्वेषरूपम् । तत्र दृष्टिरागस्नेहरागविषयराग-
भेदतो रागस्त्रिविधः । तेषु कुमतविषयो रागो दृष्टिरागः । पितृमातृभ्रातृपुत्रादिविषयस्तु स्नेहरागः । मनोज्ञशब्दरूपरसगंधस्पर्श-
विषयस्तु विषयरागः, एवं द्वेषस्यापि त्रैविध्यं भावनीयम् । तथाहि स्वाभिप्रेतकुमतेषु यो द्वेषः, द्वितीयस्त्वस्वजनवैरिविषयः,
तृतीयस्त्वमनोज्ञशब्दरूपरसगंधस्पर्शविषयः । एतौ च प्रत्येकं त्रित्रिभेदौ रागद्वेषावेव जीवस्य कर्मबंधनिबंधनभूतौ । यदुक्त
'स्नेहाभ्यक्तशरीरस्य, रेणुना श्लिष्यते यथा गात्रम् । रागद्वेषक्लिन्नस्य, कर्मबंधो भवत्येवं ॥ १ ॥ तथा यच्च
जंतुः सम्यग्दर्शनं नाप्नोति तत्प्राप्तावपि यत् संवेगरंगेन नापूर्यते यच्च विषयवैराग्यं नांगीकुरुते तत्र रागद्वेषावेव कारणम् ।
उक्तं च (उपदेशमालायां) जं न लहइ सम्मत्तं, लद्धूण वि जं न एइ संवेगं । विसयसुहेसु य रज्जइ, सो

दोसो रागदोसाणं ॥ १२४ ॥ तम्हा एएहिं पावंतरेहिं मविवम्मं बहुकं तो बहु गुणनासाण, सम्मत्तचरित्तगुणविणासाणं । न हु वसमागतव्वं, रागदोसाण पावाणं ॥ १२५ ॥ तथा तदभिन्नमपि न विवते यद् रागद्वेषाभ्यां विधीयते । नयरुण न वि त कुणइ अमित्तो, सुट्ठुवि बहुविराहिओ समत्थो वि । जं दोऽवि अणिग्गहिया, करति रागो अ दोसो अ ॥ १२६ ॥ तथा इह लोए मायासं, अयसं च करेंति गुणविणासं च । पसवंति अ परलोए, सारीरमणोगए दुक्खे ॥ १२७ ॥ धिद्धी अहो अकज्जं, जं जाणतोऽवि रागदोसेहिं । फलमउलं कडुअरसं, त चेव निसेवए जीवो ॥ १२८ ॥ को दुक्खं पाविज्जा, कस्स व सुक्खेहिं विम्हओ हुज्जा । को व न लभिज्ज मुक्खं, रागदोसा जइ न हुज्जा ॥ १२९ ॥ तथा श्रामण्यस्य सारं समतैव, यदुक्तं न वि मुंडिएण समणो, न ओंकारेण बंभणो । न मुणी रण्णवासेणं, कुसचीरेण न तावसो ॥ १ ॥ समयाए समणो होइ, बंभचेरेण बंभणो । नाणेण य मुणी होइ, तवेणं होई तावसो ॥ २ ॥ तथा चारित्रं च सामायिकरूपं तच्च समतयैव भवेत् यदुक्तं जो समो सव्वभूएसु तसेसु थावरेसु य । तस्स सामाइयं होइ, इय केवलिभासियं ॥ १ ॥ समता च रागद्वेषपरिहारेणैव, तन्मात्रो निराकरणीयो । तथा रागद्वेषाद्वशिनौ ध्यानमपि न प्रधानम् । यदुक्त च तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः । तमसः कुतोऽस्ति शक्तो, दिनकरकिरणाग्रतः स्थातुम् ? ॥ १ ॥ ज्ञानदर्शनयोः शास्त्राभ्यासस्य विनाशे दर्शनस्यापि विनाशः । तथा रागद्वेषपराभूतस्य तपसोऽपि न सार्थकम् । यदुक्तं रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम् ? । तावेव यदि न स्यातां तपसा किं प्रयोजनम् ? ॥ १ ॥

एव ज्ञानदर्शनचारित्रतपांसि रागद्वेषद्विपदभिभूतस्य न सार्थकानि भवेयुः। तस्मात् ज्ञानदर्शनचारित्रतपमां कैवल्यलक्षणं फलमभिलषता सर्वथा रागद्वेषौ वर्जनीयावेव ॥ २ ॥

तथा दंड्यते जंतुरेभिः चारित्रैश्वर्यापहारत इति दंडास्ते च दुष्प्रयुक्तचेतोवचनतनुलक्षणास्ते च नियंत्रणीया अनणीयः-शमार्थिना। यतस्तद् वैरिणापि कमुच्छेदिना कर्तुं न शक्यते यदेभिस्त्रिभिर्दुष्प्रयुक्तैरात्मन एवात्मा विधत्ते। यदुक्त श्रीउत्तराध्ययनेन, तं अरि कं न छित्ता करेइ, ज से करे अप्पणिआ दुरप्पया। से नाहिई मच्चुमुहं तु पत्ते, पच्छाणुतावेण दयाविहुणा ॥ १ ॥ तस्मादात्महितमिच्छता यतिपुंगवेन दंडत्रयमिदं निराकरणीयम्।

तथा गुप्तित्रयं सम्यक् पालनीयम्। यतो मनोगुप्त्या मुक्तैकतानचित्तता भवेत्तया च सम्यक्संयमाराधना। वचनगुप्तया च विकथाद्यात्मकवाग्विकाराऽभाव जनयति सर्वथानिरुद्धवाक्प्रसरश्च निचैकाग्र्यं भजते। नहि विशिष्टवाग्गुप्तिरहितस्य चित्तैकाग्र्यं स्यादिति। कायगुप्त्या च संवर जनयत्यशुभकाययोगनिरोधरूपम्। संवरेण चाभ्यस्यमानेन सर्वथा निरुद्धतनुव्यापारः सन् पापाश्रवनिरोधं करोति। एतदर्थसंवादकं च श्रीसम्यक्त्वपराक्रमाध्ययनालापकत्रयं तथाहि मणगुत्तयाए णं भंते जीवे किं जणयइ ? मणगुत्तयाए णं एगग्गं जणयइ एगग्गचित्तेणं जीवे मणगुत्ते संजमाराहए भवइ। वयगुत्तयाए णं भंते जीवे किं जणयइ ? वयगुत्तयाए णं निव्विकारं जणयइ निव्विकारेण जीवे वयगुत्ते अज्झप्पजोगसाहणजुत्ते आवि भवइ ( अज्झप्पेत्यादि यद्-व्याख्या-अध्यात्मं मनस्तस्य योगा व्यापारा धर्मध्यानादयस्तेषां साधनान्येकाग्रतादीनि तैर्युक्तो भवति ) कायगुत्तयाए णं भंते। जीवे किं जणयइ ? कायगुत्तयाए णं

संवरं आणयइ संवरेण कायगुत्ते पुणो पावासवा निरोह करेइ। तस्मात् गुप्तित्रितयं निरतिचारतया पालनीयम्।

तथा चरणञ्च शुद्धिताऽऽदरणीयम्। तत्र प्रथमं मायावत्य पद्-गुरोः पुरतः सम्यगतिचारानालोचनम्। एतच्च परिहार्यमेव यतो लज्जामायगर्वभयाभिमानादिभिः सम्यग् ये नालोचयन्ति निजदुश्चरितं श्रीगुरोः पुरतस्ते नैवाराधका भवन्ति। यदुक्त लज्जाइ गारवेण य, बहुस्सुअमएण वावि दुच्चरिअं। जे न कहंति गुरूणं, न हु ते आराहगा हुंति ॥१॥ तथा अप्पं पि भावसल्लं, अणुद्धरिअं रायवणिअतणएहिं। जायं कडुअविवागं, किं पुण बहुआइ पावाइं? ॥२॥ विषमपदव्याख्या, अल्पमपि-पूर्वभवे भवान्तरे लक्ष्मणासाध्वीसाधुरायावलोकनमात्ररूपेण स्तोकमपि, राजवणिक्तनयाभ्यां यथाक्रममार्द्रकुमारेणेलापुत्रेण च, जातं कटुकविपाकं दारुणपरिणामं तयोरेव सम्यग्दर्शनमासदीर्घसंसारयोरपि धर्मरिपुविनीतकुलाममनादिना। एवं सति यत् निषेध्य तत् गाथाद्वयेनोच्यते, यथाहि सा सहसक्कारेण च, भिएण च पिच्छिएण च। परेण पसत्थेण पमाएण य, मूढेण च रागदोसेणं ॥१॥ जं किंचि कयं न हु तं, लज्जा पुणो समायरिओ। तं तह पडिक्कमियव्वं, न हु तं हिअएण धोरव्वं ॥२॥ न हु नैव शल्यस्य लज्जाभयादिभिर्हृदयेन धारणं किं तु तत्समयेवालोचनीयमिति। एवं च को गुणः? इत्युच्यते—कयपावो वि मणुस्सो, आलोइअनिंदिओ गुरुसगासे। होइ अइरेगलहुओ, ओहरियभरुव्व भारवहो ॥३॥ अतः सर्वाण्यपि पापानि निर्मायतया ऽऽलोचनीयानि मुमुक्षुणा। यतो मायादिना कृताऽपि दुर्दिनं भवतीत्युच्यते कहेदि सल्लं जो पुत्तो, जाणमाणो नियदुई। न तस्स किंचि पच्छित्तं, किंति अमत्व सोहि य ॥४॥ अत्र योऽमुत्वा मालोचयति तस्य विधिरुच्यते

न संभरेइ जे दोसे, सुऽभावा न य मायओ। पच्चक्खी सहि य तेओ, माइणो उ न साहए ॥ ५ ॥ प्रत्यक्षी
प्रत्यक्षज्ञानी अतिशयज्ञानी। अथ मायाविनो दोषविशेषः प्रोच्यते पावं काऊण सयं, अप्पाणं सुद्धमेव वाहरइ।
दुगुणं करेइ पावं, बीअं बालस्स मंदत्तं ॥ ६ ॥ ततः किं कुर्यादुच्यते मायाइ दोसरहिओ, यई समयं वट्टमा-
णसंवेगो। आलोइज्ज अकज्जं, न पुणो काहंत्ति निच्छइओ ॥ ७ ॥ अथ यो मायां विमुच्य सम्यगालोचयति तस्य
फलमुच्यते निट्ठविअ पावकम्मा, सम्मं आलोइओ गुरुसमासे। पत्ता अणंतसत्ता, सासयसुक्खं अणाबाहं
॥ ८ ॥ तस्मात् मायाशल्यं विहाय सम्यक् सकलातिचारजालमालोचनीयम् १। तथा निदानशल्यमपि परिहार्यमहार्यसुखे-
च्छुभिः। यतो निदानविधानतो दुर्लभबोधिता भवेत्तया च संसारकांतारपरिभ्रमणम्। तच्च निदानं नवविधं सूत्रालापकैरेव
भाण्यते तथाहि निग्गंथो वा निग्गंथी वा निआणं करेइ जहा सक्खं न मे देवा देवलोगा वा दिट्ठा तो इमे
चेव महिड्ढिआ रायाणो देवा तो जइ इमस्स तवनिअमबंभचेरस्स फलमिच्छता अहमवि आगमिस्साए
राया हुज्जा तओ चुअस्स निआणाणुरूवलद्धट्ठाणस्स धम्मं सुणमाणस्स दुलहा बोही ॥ १ ॥ केइ
अणगारे परीसहपराइए चिंतेइ राया बहुचिंते बहु वारंभइ तो जे इमे उग्गाइपुत्ता विभवसंपन्ना ते
पासित्ता तयट्ठं निवारणं करेइ ॥ २ ॥ केइ अण० पुमं बहुवावारो संगामाइदुक्करकारी अलं मे पुरिस-
भावेण अन्नभवे इत्थिआ भविज्जा तओ० ॥ ३ ॥ केइ० इच्छीणं असमत्था सव्वपरिभूता सव्वकालं
परिहीणा य अओहं अन्नजम्मे उग्गाइपुत्तेन विज्जा तओ० ॥ ४ ॥ केइ० इमे माणुस्सग्गा कामभोगा

मुत्तपुरीसगा साहुदेहभोगा तो अहमवि तेसु भवामि तओ० ॥ ६ ॥ केइ० निविडविब्भमपुण्णकामभोगो निभाणं करेइ जइ इमस्स तव० तो जत्थ भोगपरिभारणा तस्थाहं भविस्सामि तओ० भो देवविरइ पडिवज्जइ सुसड्ढोविए हवइ ॥ ७ ॥ केइ अप्पमारे निम्मि चिंतेइ इमे उग्गाइगुणा अणुप्पयगुणप्पपक्खिमा साहवो परिकामाणा विहरंति एवं साहु तओ० आगारधम्म पडिवज्जइ नो अणगारधम्म ॥ ८ ॥ केइ० निम्मिस० जइ इमस्स तवमि० मम० तोइ वणिइकुले उववज्जिस्सामि एवं मे अप्पा सुमीहरए भवइ तओ धम्म सुया धम्मज्झए नो सिज्झइ एवं मया अनिआणेण भविअव्वंति । तथा मिथ्यादर्शनशल्यमपि परिहरणीयम् । यवस्तम कृतानुगो ति हलाहलादिविषैर्दीयते यत् मिथ्यात्वेन विपीयते बठोरीव पकुर्व न वि तं करेइ अग्गी, नेव विसं नेव किण्हसप्पो अ । जं कुणइ महादोसं, तिब्बं जीवस्स मिच्छत्तं ॥ १ ॥ तथा कठं करेसि अप्पं, दमेसि अत्थं जएसि धम्मत्थ । इक्कं न चयसि मिच्छत्तं, तिसलवं तेण बुड्डिहिसि ॥ २ ॥ तस्मादनंतसंसारनिबन्धनं मिथ्यादर्शनं वर्जनीयमेव केवलदुःखनिबन्धनम् । एवं मायानिदानमिथ्यादर्शनशल्यानि यो वर्जयति स आराधकः इतरस्तु विराधकः परिभ्रमति संसारमध्ये । पठुवं मरिउ ससल्लमरणं, संसारम्मि महाकविलम्मि । सुइरं भमंति जीवा, अणोरपारम्मि संसारे ॥ १ ॥ तथा तपोऽपि शल्यरहितस्यैव सफलं नेतरस्य पठुवं ससल्लो जइ वि कठुग्गं, घोरं वीरं तवं चरे । दिव्वं वाससहस्सं तु, तओ वि तं तस्स निप्फलं ॥ २ ॥ यथाऽमृतं यस्य पदमर्थवांते उमोऽपि यत् विषयत्वादिमिरपि न कर्तुं शक्यते पठुवं न वि तं सत्थं न विसं च, दुप्पउत्तुव्व कुणइ वेआलो । जं तं च

दुप्पउत्तं, सप्पुव्वए माइणो कुव्वो ॥ ३ ॥ जं कुणइ भावसल्लं, अणुद्धिरअं इत्थ सव्वदुहमूलं । दुल्लहबोहीअत्तं, अणंतसंसारिअत्तं च ॥ ४ ॥ अतः कारणाद् गौरवत्रयं विहाय शल्यत्रितयमुद्धरणीयमेव विवेकिभिरनतभवसंततिनिदानम् । उक्तं च तो उद्धरंति गारव-रहिआ मूलयाणं च । मिच्छादंसणसल्लं, मायासल्लं निआणं च ॥५॥

तथा गौरवत्रिकं हेय यतिना । तत्रात्मनोऽशुमभावेन गुरुता गौरवं तच्च ऋद्धिरससातागौरवभेदात्रिविधम् । तत्र ऋद्धिगौरव नृपतेन्द्रताख्रिताद्यभिलापरूपम् । प्राप्तायां वा तदृद्धावहकारविकारः । रसगौरवं तु सरसाहारेच्छाऽरसविरसाहारानिच्छारूपम् । सातागौरवं तु यथा तनुसुखविहरण एतद्गौरवत्रयं यथा विधीयते यतिभिः प्रमादपंकनिमग्नैस्तथा श्रीउपदेशमालागाथाभिर्लिख्यते तथाहि जह जह बहुस्सुओ स-म्मओ अ सीसगणसंपरिवुडो अ । अविणिच्छिओ अ समए, तह तह सिद्धंतपडिणीओ ॥ ३२३ ॥ पवराइं वत्थपाया-सणोवगरणाइँ एस विभवो मे । अविय महाजणनेया, अहंति अहं इड्ढिगारविओ ॥ ३२४ ॥ अरसं विरसं लूहं, जहोववन्नं च निच्छए सुत्तुं । निद्धाणि पेसलाणि य, मग्गइ रसगारवे गिद्धो ॥ ३२५ ॥ सुस्सूसई सरीरं, सयणासणवाहणापसंगपरो । सायागारवगुरुओ, दुक्खस्स न देइ अप्पाणं ॥ ३२६ ॥ तथा तिहिं गारवेहिं मज्जइ तं जाणाही अहाछंदं इति वचनाद् गौरवत्रयं कुर्वाणो यतिर्यथाछंदत्वमवाप्नोति । ततो हेतोस्तद्वर्जनीयमेव भवांतमिच्छुभिर्मुमुक्षुभिः ।

तथा विराधनात्रयं त्यजनीयम् । तत्र प्रथमा ज्ञानविराधना, सा च प्रत्यनीकतागुरुनिह्नवतद्भक्तपानाद्यतरायविधानतत्प्रद्वेषाकालस्वाध्यायकरणादिज्ञानातिचारसमाचरणादिभिरवसेया । द्वितीया दर्शनविराधना सा च क्षायिकसम्यगु-

हीनसत्त्वतया १ भयमोहनीयकर्मोदयेन वा २ भयहेतुदर्शनश्रवणादिना वा ३ सततं भयचिंतया वा ४ । उक्तं च हीण-
सत्तयाए १ भयमोहणिज्जोदएणं २ मईए ३ तदट्ठोवओगेणं ४ । तृतीया मैथुनसंज्ञा । साऽपि चतुर्भिः प्रकारैः
संजायते । तथाहि वित्तमासशोणिततया १ वेदोदयेन वा २ मैथुनदर्शनश्रवणादिना वा ३ सततं मैथुनचिंतनेन वा ४ ।
उक्तं च विअमंससोणिअयाए १ वेअमोहणिज्जोदएणं २ मईए ३ तदट्ठोवओगेणं ४ । तुरीया परिग्रहसंज्ञा । साऽपि
चतुर्भिः स्थानैर्भवतीति । तथाहि अविमुक्ततया १ लोभमोहनीयोदयेन २ परिग्रहदर्शनश्रवणादिना ३ सततं परिग्रहचिंतया
वा ४ । उक्तं च अविमुत्तयाए १ चारित्तमोहणिज्जोदएणं २ मईए ३ तदट्ठोवओगेणं ४ । एताश्चतस्रोऽपि संज्ञा
असातवेदनीयमोहनीयकर्मोदयजन्यचैतन्यविशेषरूपाः परिहरणीया एव तत्तत्कर्मसमुच्चयनिमित्ततया ।
तथा प्रागुक्तस्वरूपाश्चतस्रोऽपि विकथा विवर्जनीया एव कर्तुः श्रोतॄणां वाऽनतभवसंततिनिदानदुष्कर्मबंधनिबंधनत्वात् ।
तथा ध्यानचतुष्कमध्यात्तिर्यग्निरयगतिनिदानभूते आर्त्तरौद्रध्याने न विधेये स्वर्गापवर्गहेतुभूते धर्मशुक्लध्याने चाऽहर्निशं
ध्येये । यतः शुभाशुभकर्मबंधनिबंधनभूतं ध्यानमेव । तत्र प्रथमे दुष्कर्मबंधस्य हेतुभूते, अपरे तु शुभकर्मबंधस्य ।
अथ ध्यानस्वरूपमुच्यते । यत् स्थिरमध्यवसानं तद्ध्यानम् । यत्तु चलं तच्चित्तम् । तच्च भावनारूपमनुपेक्षारूपं
चिंतारूपं वा भवेत् । तत्र भावना ध्यानाभ्यासक्रिया । अनुप्रेक्षा त्वनु पश्चाद् भावे प्रेक्षणं प्रेक्षा, सा च स्मृतिध्यानाद्
भ्रष्टस्य चित्तचेष्टेत्यर्थः । एतदुक्तप्रकारद्वयरहिता चित्रा मनश्चेष्टा या सा चिंता । इति ध्यानलक्षणं प्रतिपाद्य तत् काल-
स्वामिस्वरूपमुच्यते । तथाहि छद्मस्थानामेकस्मिन् वस्तुनि चित्तावस्थानलक्षणं ध्यानमंतर्मुहूर्त्तं यावद् भवति, ततः परं

चिन्ता । ध्यानान्तरं वा भवेत् । बहुवस्तुसंक्रमे तु ध्यानसंतानः प्रभूततममपि संभवेत् । अयं भावो बहूनि वस्तून्यात्मगतानि मनःप्रभृतीनि परगतानि द्रव्यादीनि तेषु संक्रमेण चिरेणापि ध्यानप्रवाहः स्यादिति । योगनिरोध एव केवलिनां ध्यानं न तु विचारस्थानं तद्व्यापारस्याभावात् ।

इत्थं सामान्येन ध्यानलक्षणमभिधाय तद्विशेषस्वरूपं प्रतिपाद्यते । तथाहि आर्तध्यानं चतुर्विधम् । तत्र प्रथमभेदो विभाव्यते । तथाहि अमनोज्ञा ये इन्द्रियविषयास्तदाधारभूतानि च यानि वस्तूनि रासभादीनि तेषां प्राप्तानां सतामत्यर्थं वियोगचिन्तनं कथं तु ममैभिर्वियोगः स्यादिति वर्तमानकालविषयं द्वेषयोगतो वियोगचिन्तनम् । वियोगे च सति असंप्रयोगाभावानुस्मरणं कथं ममैभिः समं सदैव संप्रयोगो न भवेदित्यनागतकालविषयं द्वेषाद् वियोगचिन्तनम् । तथा एवंकाले ममान्वहः संयुज्य वियुक्त आसीत् एव वा न संयुक्तस्तत् परममभूदिति वियुक्ताऽसंयुक्तविषयाऽतीतानुमोदनया द्वेषविशेषात्तदतीतकालविषयमार्तध्यानम् । एवं त्रिकालविषयमार्तध्यानं स प्रथमो भेदः प्रथमध्यानस्य १ । अथैतस्य द्वितीयभेदो विभाव्यते । तथाहि शूलशिरोरोगादिवेदनायाः अत्यर्थं तद्वियोगविषयोऽध्यवसायस्तत्प्रतीकाराकुलितचेतसो वर्तमानसमयविषयः । तदभावे सति कथं ममानयायत्यां संयोगो न भवेदिति तदसंप्रयोगचिन्तनमनागतकालविषयम् । तथाऽतीतविषयं समता समस्तिकोऽयं पापाल्पो यथैषमेवंविधा वेदना न प्रादुरासीदित्यतीतकालविषयरोगादिवेदनाभावानुमोदनविषयमार्तध्यानमपरमार्तध्यानस्य द्वितीयो भेदः २ । अथैतस्य तृतीयभेदो दर्श्यते । तथाहि इष्टानां शब्दादिविषयाणां तदाधारभूतानां च प्राणप्रियादीनामवियोगाध्यवसायः सामान्येनेष्टार्थवर्तमानकालविषयः । तथाऽनागत

तत्संयोगचिंतनम्। अतीतकालविषयं तु 'प्राक्प्रवृत्तवत्संयोगानुमोदनतः। अयमार्त्तध्यानस्य
कालविषयमुत्तरकालेऽस्त्यर्थ तत्संयोगचिंतनम्। अतीतकालविषयं तु प्राक्प्रवृत्ततत्संयोगानुमोदनतः। अयमार्त्तध्यानस्य
तृतीयो भेदः ३। अथैतस्य तुरीयभेदः प्रदर्श्यते। तथाहि देवतामार्वभौमादिपदवीप्रार्थनारूपमत्यंतमज्ञानानुगतं निदान-
चिंतनमार्त्तध्यानस्य तुर्यो भेदः। न ह्यज्ञानिनं विहायान्यः कोऽपि शिवसुखसाधकं तपःकष्टानुष्ठानादि सांसारिकसौख्यकृते
विफलीकरोति। एतच्चतुर्विधमप्यार्त्तध्यानं रागद्वेषमोहमलिनीकृतस्य जंतोः संसृतिवर्द्धनमोघतो विशेषतस्तु तिर्यग्गतिमूलम्।
ननु मुनेरपि शूलादिरोगाभिभूतस्यासमाधौ तत्प्रतीकारकरणे च तद्विप्रयोगप्रणिध्यानापरेस्तथा तपःसंयमरमाखेऽने च
भवसमवदुःखवियोगप्रणिधानादार्त्तध्यानं संभवेत्? अथोच्यते रागद्वेषवशवर्त्तिनः स्यादेव न पुनरन्यस्य, तथाहि स्वकर्मपरि-
णामजनितमेतच्छूलादीति स्वजीवानुशासनपूर्वं सम्यक्सहमानस्य पुष्टालंबने चाऽनवद्यमल्पमावद्यं वा तत् प्रतीकार
कुर्वतोऽपि तथा निदानरहिततपःसंयमरूपसांसारिकदुःखप्रतीकारं कुर्वाणस्य किंतु प्रत्युततद्धर्मध्यानमेवाऽऽसेयम्। अथार्त्त-
ध्यानस्य संसारवृद्धिहेतुता भाव्यते। तथाहि रागद्वेषमोहाः संसृतिहेतवः कीर्त्यंते सूत्रे। ते च त्रयोऽप्यार्त्तध्याने। तेन तत्
संसारशिखरिमूलम्। अथार्त्तध्यायिनो लेश्यास्वरूपं भाव्यते। कृष्णनीलकापोताख्यास्तिस्रो लेश्याः स्युरार्त्तध्यायिनो रौद्रध्याना-
पेक्षया नाऽतिसंक्लिष्टपरिणामास्ताश्च कर्मपरिणामजनिता विज्ञेयाः। अथैतद्ध्यायिनो लिंगानि कीर्त्यंते तथाहि आक्रंदन १
शोचन २ परिदेवन ३ ताडन ४ स्वरूपाणि चत्वारि लिंगानि भवेयुरिष्टवियोगाऽनिष्टसंयोगवेदनाजनितानि। तत्राऽऽक्रंदनं
महता शब्देन रोदनम्, शोचनं त्वश्रुपूर्णनयनस्य दीनता, परिदेवनं तु क्लिष्टभाषणम्, ताडनं उरःशिरःकुट्टनकेशलुंचनादि।
तथार्त्तध्यायी निजजनितान्यन्यफलानि विफलानि च शिल्पकलावाणिज्यादीनि निंदति। तथा सकौतुकः प्रशमवि

चारित्रवैराग्यजनिताः । तत्र ज्ञानाभ्यासः करोति मनोधारणम् । तथा सूत्रार्थयोः शुद्धिर्भवनिर्वेदं च । तथा ज्ञाने गतसारत्वे निश्चलमतिर्ध्यायति धर्मध्यानम् । इति प्रथमा ज्ञानभावना १ । अथ द्वितीया दर्शनभावना । शंकादिदूषणपञ्चकरहितः प्रशमस्थैर्यादिगुणगणसहितस्तथान्तरेऽसंमूढचित्तो दर्शनशुद्धिभावनया भावितो ध्यायेत शुभध्यानम् २ । अथ तृतीया चारित्रभावना । सर्वसावद्ययोगनिवृत्तिरूपक्रियाभ्यासतः प्राक्तनकर्मनिर्जरणे नवीनपापकर्मानादानेन च चारित्रभावनया भावितः प्राप्नोति शुभध्यानम् ३ । अथ तुरीया वैराग्यभावना सुविदितजगत्स्वभावो निःसङ्गो निर्भय परित्यक्तत्रि-भयमावितमुक्तस्तथाविधकोपादिकषायविरहितो वैराग्यभावनाभावितो ध्यायेत धर्मध्यानम् ४ । अथ धर्मध्यानदेशस्वरूपं किञ्चिद् भाष्यते । यद्यपि निरन्तरं युवतिपशुनपुंसककुशीलादिवर्जितं विजनं स्थानमुक्तं यतिजनस्य । विशेषस्तु धर्मध्यानसमये तु संहननधृतिभ्यां बलवतोऽभ्यस्तसमाधानादिध्यानाराधकस्य ग्रामे जनाकीर्णे शून्येऽरण्ये वा न विशेषः । कथं-यस्मात् यत्र मनोवचनकायानां समाधानं स्यात्स देशो धर्मध्यानस्य । वचनतनुसमाधानमत्र कथमुपयुज्यते ? उच्यते तत्समाधानं मनोयोगोपकारकमतस्तत्समाधानमपि ध्यानमुच्यते । यदुक्तं पूर्वविदा गिरा मे, पत्तव्वा परिसा न पत्तव्वा, इय वेमाणियजणस्स भासओ वाइयं झाणं ॥ १ ॥ सुसमाहियकरणपायस्स अकज्जे कारणम्मि जयणाए । किरियाकरणं जं तं, काइयझाणं भवे जइणो ॥ २ ॥ कालस्तु स एव यत्रोपयोगसमाधानं लभते, न तु दिननिशावेलानियमो धर्मध्यानविषये । आसनमपि तदेव यत्र स्थितस्य धर्मध्यानं प्रकृष्टं भवेत् । तथोर्ध्वस्थितस्य कायोत्सर्गेण निषण्णस्य पर्यङ्कासनादिस्थितस्य अर्धसम्पर्यङ्कादिके किं बहुना वा यथाविरोधेन धर्मध्यानोपरोधिनी स्यात्तथा

स्थेयम् । न तु धर्मध्याने देशकालासनानां नियमः, कुतो हेतोः ? उच्यते यतः सर्वेष्वपि देशकालासनविशेषेषु वर्त्तमाना
अनंताः प्राणिनः प्राप्ता अपुनर्भवं केवलश्रियं समासाद्य । अतो हेतोस्तेषामनियमः । अथालंबनान्युच्यन्ते । तथाहि—वाचना-
प्रच्छनापरावर्त्तनानुप्रेक्षारूपाणि श्रुतधर्मानुगतान्यालंबनानि । चारित्रधर्मानुगतानि तु सामायिकप्रत्युपेक्षणाद्यवश्यकरणीय-
रूपाणि । यथा गृहीतदृढद्रव्यालंबनः पुमान् विषमस्थाने समारोहति, एवं कृतवाचनाद्यालंबनो धर्मध्यानेऽपि । ध्यानप्रति-
पत्तिक्रमस्तु यथा मनःस्वस्थता भवेत्तथा मनोवचनतनुनियन्त्रणरूपोऽवसेयः। अथ ध्यातव्यमुच्यते तथाहि—आज्ञाऽपायविपाक-
संस्थानविचयभेदाद्ध्यातव्य चतुर्द्धा । तत्र सूक्ष्मद्रव्याद्युपदर्शकत्वात् सुनिपुणां, द्रव्यार्थनयादेशादनादिनिधनां, ' सव्वे जीवा
न हंतव्वे ' त्यादिवचनैः सर्वभूतहितां, भूतं सत्यं गाव्यतेऽनयेति भूतभावनामनेकांतपरिच्छेदात्मिकामिति यावत्तथाऽनर्घ्याम-
परिमितार्थां, शेषकुप्रावचनिकैरजितां, पूर्वापराविरोधित्वादनुयोगद्वारात्मकत्वात्तथागर्भत्वाच्च महार्थामचिंत्यशक्तिसमेतत्वाच्च
महानुभावां, सर्वद्रव्यादिविषयत्वाच्च महाविषयां, निरवद्यामनिपुणजनदुर्ज्ञेया, नयभगप्रमाणगमगहनां, श्रीजिनाज्ञां भाव-
येत् । तत्र च मतिदुर्बलतया तद्विधकथकाचार्यवियोगेन धर्मास्तिकायादिज्ञेयगहनतया ज्ञानावरणकर्मोदयेन च कस्मिंश्चित्
पदार्थे हेतुदृष्टांतासंभवेऽपि सम्यगवबोधश्चेन्न स्यात्तथापि श्रीसर्वज्ञमतमवितथमेवेति विचिंतयेत् मतिमान् । यतोऽनुपकृतेऽपि
परानुग्रहपरा जगत्प्रवरास्तीर्थकरा निर्जितरागद्वेषमोहा नान्यथावादिनो भवेयुरित्युक्त प्रथमं ध्यातव्यम् १ । अथ द्वितीयमु
च्यते । तथाहि—रागद्वेषकषायाश्रवाक्रियासु वर्त्तमानानां प्राणिनामैहिकामुत्रिकापायान् विचिंतयेदप्रमत्ततया सावद्यपरिवर्जकः
२ । अथ तृतीयमुच्यते तथाहि—मिथ्यात्वाविरतिकषाययोगजनितं शुभमशुभं च प्रकृतिस्थित्यनुभागप्रदेशभेदतश्चतुर्विधं कर्म-

विपाक ध्यायेद्धर्मध्यानं ध्याता १। अथ तुरीयमुच्यते यथाहि श्रीजिनप्रज्ञप्तानि धर्मास्तिकायादिद्रव्याणां गमनस्थानादीनि लक्षणानि, तथा लोकक्षेत्रापेक्षया धर्माधर्मयोः संस्थानानि, पुद्गलापेक्षयापेक्षया उपरिमंडलादीनि, जीवशरीरापेक्षया तु सम चतुरस्रादीनि, तथा तेषामेव द्रव्याणामाधारभूतानि लोकाकाशादीनि, तथा 'धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पएसे' इत्यादीनि तेषामेव विधानानि, तथा तेषामेवात्मीयात्मीयानि प्रमाणानि, ध्यायेद्धर्मध्यानविधायका तेषामेवोत्पत्तिस्थितिध्रुवत्वादिपर्यायाश्, तत्र धर्मास्तिकायो विवक्षितसमयसंबंधिरूपापेक्षयोत्पद्यते, तदनंतरातीतसमयसंबंधिरूपापेक्षया तु विनश्यति, द्रव्यात्मना तु नित्यः, एवमधर्मास्तिकायादिष्वपि भावना विधेया, तथा पंचास्तिकायमयमनादि अनंतं जिनोदितं नामे ठवणा दविए, खित्ते काले भवे य भावे य। पज्जवलोए य तहा, अट्ठविहो लोगनिक्खेवो ॥ १ ॥ इति नामोक्तनामादिभेदभिन्नं, क्षेत्रलोकापेक्षया त्वधोलोकादिभेदत्रयभिन्नं लोकं चिंतयेत्, तथा अधोलोक एव धर्माद्या ईषत्प्राग्भारांता अष्ट(८)मिता भूमीश्चिंतयेत्, तथा घनोदधिघनवाततनुवातरूपाणि सप्तपृथिवीपरिक्षेपरूपाणि स्थितान्येकविंशतिवलयानि, तथाऽसंख्येयान् द्वीपोदधींस्तथा तीर्यग्लोकप्रतिष्ठानांश्चाभिधानामूर्ध्वस्थानान्ज्योतिष्कवैमानिकसंबंधीनि विमानानि, तथा भवनपतिसंबंधीनि भवनानि, तथा व्यंतरनगराणि एतेषां च चिंतनं संस्थानभावसंबंधादिविवक्षतोऽवसेय, तथाऽष्टकर्मादिकर्मलिप्तस्यात्मनो जीवस्य स्वरूपं चिंतयेत्, तथोपयोगलक्षणमनादिनिधनं शरीरात् पृथग्भूतं शुभाशुभकर्मकर्तारं, तद्भोक्तारममूर्त्तं च जीवं ध्यायेद्धर्मध्यानविधाता। तस्य च यतो। स्वकर्मजनितं जननमरणनिधनमीदृशं, कषायपातालव्यसनसंकुलं, व्यसनशतश्वापदसमाकीर्णं, मोहरूपावर्त्तमहाचक्रनिबद्धं, संयोगवियोगमहोर्मिमालासमाकुलं, महाभीमभवाप-

वारसंसारपारावार, विचिंतयेचस्य च संसारसागरस्य तारणे समर्थं, सम्यग्दर्शनं, सुबंधनमनघं, ज्ञानमयनिर्यामकं, संवरकृत-
निच्छिद्रभाव, तपःपवमानविहितवेगं, वैराग्यमार्गे समापतितमपध्यानोर्मिमालाऽक्षोभ्य, चारित्रमयमहायानं विचिंतयेत्, यं
चानर्घ्यपृथिवीकायारंभपरित्यागादिशीलांगरत्ननिकरपरिपूर्णं समारुह्य सुश्रमणवणिजो यथा निर्वाणनगरं निरपायं त्वरयैव
व्रजति, यथा–तत्र गतानां रत्नत्रयोपार्जितमनंतमप्रतिममेकांतमाविसौख्य भवेत्तथा ध्यायेत् । किं बहुना ? सर्वमेव जीवादि-
पदार्थविस्तरोपेतसर्वनयसमूहात्मकसमयसद्भाव, ध्यायेद्धर्मध्यानध्याता । अथ धर्मध्यानध्यातृस्वरूपमुच्यते । तथाहि अप्रमादिन
उपशांतमोहाः क्षीणमोहाश्च धर्मध्यानस्य ध्यातारः । अथाऽनुप्रेक्षास्वरूपं किंचित् प्ररूप्यते । तथाहि–यः पूर्वं धर्मध्यानेन भावि-
तचित्तः स्यात् स धर्मध्यानोपरमेऽप्यनित्यताऽशरणतैकतासंसारासारताचिंतनरूपाश्चतस्रोऽनुप्रेक्षा भावयेत् । अथ लेश्या उच्यंते ।
तथाहि आगमोपदेशाज्ञानिसर्गतो यज्जिनप्रणीतभावानां सम्यक्श्रद्धानं तद्धर्मध्यानस्य लिङ्गं, तथा यो जिनमुनिगुणोत्कीर्त्तन
दानविनयसंपन्नः श्रुतशीलसंयमरतश्च स्यात्सोऽप्येवंविधैर्लिंगैर्द्धर्मध्यानवानस्त्रेयः । अथ फलमुच्यते । तथाहि–धर्मध्यानस्य
पुण्याश्रवरूपः शुभाश्रवस्तथाऽशुभकर्मागमनिरोधरूपः संवरस्तथा कर्मक्षयरूपा निर्जरा तथा सुकुलप्रत्यागमनपुनर्बोधिलाभ-
मोगप्रव्रज्याऽप्रव्रज्याऽपवर्गानुबंधित्वाच्छुमानुबंधीनि नरामरसुखानि फलानि भवेयुरित्युक्तं द्वादशभिर्द्वारैर्द्धर्मध्यानं ॥ २ ॥
अथ शुक्लध्यानस्य स्वरूपं किंचिदुच्यते । तथाहि–शुक्लस्यापि भावनादीनि द्वादशद्वाराणि स्युस्तेषु भावनादेशकालासन-
विशेषेषु न विशेष इत्यालंबनादीनि द्वारद्वाराण्युच्यंते । तथाहि–क्षांतिमार्दवार्जवमुक्तयः श्रीमदर्हत्प्रवचनरहस्यभूता आलंब-
नानि भवंति शुक्लध्यानस्य । यतस्तदालंबन एव पुमान् शुक्लध्यानमधिरोहति । क्रमस्तु शुक्लध्यानयोराद्ययोर्द्वयोर्धर्म-

पूर्वविदां मरुदेव्यादीनां त्वन्यथा तत् प्रथमं ध्यातव्यम् १। अथ द्रव्यार्थिकपर्यायार्थिकादिनानानयैश्चिंतनं सर्वगतश्रुतानुसारेण द्वितीयमुच्यते। तथाहि द्वितीयमेकत्ववितर्कमविचारम्। तत्रैकत्वेनाऽभेदेन, वितर्को व्यजनरूपो वा, यत्र तत्तथा, अविचारस्त्वर्थव्यजनयोगांतरसंक्रमाभावतः। अयं भावो निवातनिकेतनस्थितप्रदीपवदुत्पादस्थितिविनाशादिपर्यायाणामेकस्मिन् पर्याये यन्निश्चलं चेतस्तद् द्वितीयम् २। तृतीयं तु निर्वाणगमनप्रत्यासन्नसमये केवलिनो वाङ्मनोयोगद्वयेन रुद्धे सत्यर्द्धनिरुद्धतनुयोगस्य सूक्ष्मक्रियानिवृत्तिसूक्ष्मक्रियं च तदनिवृत्ति च प्रवर्द्धमानांतरपरिणामान्न निवर्त्ततीत्यऽनिवृत्ति उच्छ्वासनिश्वासादिस्तोककायक्रियस्य ३। तुरीयं तु शैलेशीगतस्य व्युच्छिन्नक्रियाऽप्रतिपातिनिरुद्धयोगत्रयस्यावसेयं ४। एतेषु प्रथमं मनोयोगादावेकस्मिन् योगे सर्वेषु वा तत्त्वगमिकश्रुतपाठिनः द्वितीयं त्वेकस्मिन्नेव योगांतरसंक्रमाभावात्। तृतीयं तु काययोग एव। तुरीय त्वयोगिनि शैलेशीकेवलिनि। ननु ध्यै चिन्तायामिति धातुपाठाद्ध्यानं मनःपरिणाम एव, शुक्लध्यानोपरितनभेदद्वयं तु निरुद्धमनोयोगे केवलिनि प्रोक्तं कथमेतत् संगतम्? उच्यते यथा छद्मस्थस्य मनः सुनिश्चलं स ध्यानमुच्यते, तथा योगत्वाव्यभिचारात् केवलिनः काय एव सुनिश्चलः सन् ध्यानता निगद्यते। अत्र हेतवो दृश्यंते। तथाहि पूर्वप्रयोगात् १ कर्मनिर्जराहेतुत्वा२च्छब्दार्थबहुत्वात् ३ श्रीजिनागमप्रामाण्याच्च ४। यथा पूर्वप्रयोगात् कुलालचक्रं भ्रमणकारणदडादिक्रियाभावेऽपि भ्रमति तथा केवलिनो मनःप्रभृतियोगनिरोधेऽपि जीवोपयोगसद्भावतो भावचित्तस्य सद्भावाद् भवस्थस्य ध्याने। एव शेषहेतवोऽपि योजनीयाः। विशेषस्तूच्यते यथा क्षपकश्रेण्या कर्मनिर्जरा तथाऽत्रापि भवोपग्राहिकर्मनिर्जरेति भावः। शब्दार्थबहुत्वादिति यथा एकस्यैव हरिशब्दस्यादित्यदेवपतिप्रभृतयोऽनेकेऽर्था एवं

ध्यानद्वयस्यापि ध्यै चिन्तायां, ध्यै काययोगनिरोधे, ध्यै अयोगित्वे इत्यादि। यतो जिनागमस्य प्रमाणमत एव जिना ययोक्तस्यात्मनो योगनिरोधेऽपि भवस्थस्य केवलिनः शुक्लध्याने। उक्तं ध्यातव्यम्।

अथ ध्यातृस्वरूपमुच्यते। तत्रादि प्रथमसंहननसंयुताः सर्वप्रमादविरहिता यतयः क्षीणोपशान्तमोहाश्चतुर्दशपूर्वविदस्त्रयुक्ताः। आद्ययोः पृथक्त्ववितर्कसविचारैकत्ववितर्काविचारयोः शुक्लध्यानयोर्ध्यातारः। द्वयोरन्तिमयोः क्रमतः स-योग्ययोगिकेवलिनः।

उक्ता ध्यातारोऽथानुप्रेक्षाः प्रदर्श्यन्ते। तत्रादि शुक्लध्यानभावितचित्तचारित्रगुणगरिष्ठो यतिर्मिथ्यात्वाविरत्यादयभवहार विविधाऽनन्तपुद्गलपरावर्तनाय १ भवाऽशुभानुभावा २ऽनन्तभवसंतान ३ वस्तुविपरिणामलक्षणाः शुक्लध्यानाद्यभेदद्वयसंगतामतसो अनुप्रेक्षाश्चिन्तयेत्। उक्ताऽनुप्रेक्षाः।

अथ लेश्या दर्श्यन्ते। तत्रादि सामान्येन शुक्ललेश्याभावे शुक्लध्याने। तृतीयं परमशुक्ललेश्यायाम्। तुरीयं तु लेश्यातीतम्, इत्युक्ता लेश्याः।

अथ लिङ्गान्युच्यन्ते। अवधाऽसंमोहविवेकव्युत्सर्गलक्षणानि चत्वारि लिङ्गानि भवन्ति शुक्लध्यानस्य। परीषहोपसर्गैर्न बिभेति ध्यानाच्च न चलतीत्यवधलिङ्गम् १। देवमायाऽनन्यगहनेष्वपि भावेषु न संमुह्यतीत्यसंमोहलिङ्गम् २। देहविविक्तं पश्यत्यात्मानं तथा सर्वानपि च संयोगानिति विवेकलिङ्गम् ३। देहोपधिव्युत्सर्गं निःसङ्गः सन् सर्वथा करोतीति व्युत्सर्गलिङ्गम् ४। इत्युक्तानि लिङ्गानि।

अथ फलमुच्यते । तथाहि यान्येव शुभाश्रवसंवरनिर्जरादीनि निगदितानि धर्मध्यानस्य फलानि तान्येव सविशेषाणि शुक्लध्यानस्यापि । अनुत्तरसुरसौख्यानि च शुक्लस्यादिमयोर्भेदयोः फलं चरमयोस्तु निर्वाणम् ।

अथ सामान्येनैव फलमुच्यते । तथाहि संवरनिर्ज्झरे अपवर्गस्य मार्गस्तयोश्चाऽयतं तपःप्रधानं च तपोऽगं ध्यान तस्मात्तत् मुक्तिनिदानम् । अयमेवार्थः स्पष्टीक्रियते–दृष्टांतैर्यथा मिचयकालायसवसुमतीनां मलकलंककर्दमाः क्रमतः शोध्यंतेऽपनीयंते शोष्यंते च सलिलाऽनलसूर्यैस्तथा ध्यानांबुवह्निसूरैः कर्मणामपि शोध्यादयो विधीयंते । यथा ध्यानतो वाकाययोगयोस्तापशोषभेदा भवंति तथा कर्मणोऽपि ध्यानतस्ते भवेयुः । यथा वा रोगाणां शमनं वमनविरेचनौषधादिभिः प्रकारैर्भवेत्तथा कर्मामयशमनमपि ध्यानानशनादिभिः प्रकारैः स्यात् । यथा वा चिरसंचितमिंधननिवहं हुतभुक्पवनसमन्वितो ध्रुवं दहति तथाऽमितमपि कर्मेन्धनसमूहं ध्यानवह्निर्दहति तत्क्षणादेव । यथा वा जलदपटल प्रचण्डप्रभंजनप्रेरितं क्षणादेव विलीयते तथा ध्यानपवमानावधूत कर्मघनजालमपि ।

अथैतस्य शुभध्यानद्वयस्यैहलौकिक फलमुच्यते । तथाहि धर्मशुक्लध्यानाधिरूढचित्तो न बाध्यते शीतातपक्षुत्पिपासादिभिः शारीरिकैरसातैर्नापि च पीड्यते कषायप्रसूतैरीर्ष्याविषादादिभिर्दुःखनिवहैः, अतः कारणादाद्ये ध्याने अपहार्यातिमे ध्याने नित्यमेव ध्येये । नन्वेवं निरतर ध्यानविधाने शेषक्रियालोपः प्राप्नोति, नैव क्रियाविधानस्यापि तत्त्वतो ध्यानत्वात् । यतः सा नास्ति काचिदपि क्रिया या श्रीमदागमानुसारेण विधीयमाना मुनीनां ध्यानतया न संभवेत् । इत्युक्तं ध्यानस्वरूपम् ।

तथा यतिभिः कायिक्याद्याः पंचक्रियाः परिहरणीयाः । तत्र प्रथमा कायिकी । सा च त्रेधा मिथ्यादृष्टेरविरतसम्यग्-

योः प्रमत्तसंयतस्य । तथाऽऽद्ययोरुभयोरविरतकायिकी प्रमत्तसंयतस्य तु दुष्प्रणिहितकायिकी । अधिक्रियते जंतुर्नरकादिषु
येन तदधिकरणं तेन निर्वृत्ताऽऽधिकरणिकी । सा च द्विभेदा चक्रयन्त्रादिप्रवर्तिनी खड्गादिनिर्वर्तिनी च । प्रद्वेषेण निर्वृत्ता
प्राद्वेषिकी । सापि जीवविषयाऽजीवविषया चेति द्विविधा । परितापनं ताडनादिदुःखं तेन निर्वृत्ता पारितापनिकी । साऽपि
द्विधा स्वपरविषयेति । प्राणातिपातेन निर्वृत्ता प्राणातिपातिकी । साऽपि स्वर्गाद्यर्थं पर्वतपतनादिना स्वप्राणपात क्रोधमाना-
दिना च परप्राणपातं कुर्वतो भवतीति द्विभेदा । एवं पंचविधाऽपि क्रिया भवसंततिनिदानभूता यतिभिर्वर्जनीया नित्यमतः ।

तथा कामाः शब्दादयः पंचविषयास्तद्विषये रागद्वेषौ परिहरणीयौ यतिसत्तमैः । यतो मनोरमाः पंचापि गोचराः
संसारिणां प्राणिनां रागनिबन्धनभूताः । अमनोज्ञास्तु ते तेषां द्वेषोत्पादहेतुभूताः । यस्तु वीतरागद्वेषो महामुनिः स तयोरिं-
द्रियविषयमनुप्राप्तयोः सममना एव तिष्ठति समचेतास्तु वीतरागतामनुप्राप्तो न चाल्यते चारित्रगुणात्तत्कृतसुखदुःखा-
भ्याम्, यदुक्तं श्रीमदुत्तराध्ययने 'सोअस्स सद्दं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु । तं दोसहेउं अम-
णुन्नमाहु, समो य जो तेसु स वीयरागो ॥ १ ॥ चक्खुस्स रूवं गहणं० ॥ २ ॥ घाणस्स गंधं गहणं ॥ ३ ॥
जिब्भाए रसं गहणं० ॥ ४ ॥ कायस्स फासं गहणं० ॥ ५ ॥' यदेते कामाः शल्यभूता विषभूताः सर्पभूताः सर्वाभिर्व
वनिषूताश्च निषर्यते । यदुक्तं तत्रैव सल्लं कामा विसं कामा० ॥ १ ॥ खणमित्तसुक्खा बहुकालदुक्खा० ॥ २ ॥
तथा कामाणुगिद्धिप्पभवं खु दुक्खं, सव्वस्स लोगस्स सदेवगस्स । जं काइयं माणसियं च किंचि,
तस्संतगं गच्छइ वीयरागो ॥ ३ ॥ अतः कारणात् भवभयाभयानामभिज्ञता यतिसत्तमेन मनोज्ञामनोज्ञविषये रागद्वेष

न तेसु भावंनिसिरे कयाइ । न यामणुन्ने-
परिहरणमेव विधेयम् । यदुक्तं तत्रैव जे इंदिआणं विसया मणुन्ना,
सु मणं पिकुज्जा, समाहिकामे समणे तवस्सी ॥ १ ॥
तथा मुनिमतल्लिकाभिः प्राणातिपातविरमणप्रभृतीनि पचमहाव्रतानि सम्यक्परिपालनीयानि । तत्र प्रथमं प्राणातिपात-
विरमणव्रत चतुर्विध द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यतः षड्जीवनिकाया मनोवाक्कायैः स्वयं नातिपातनीया
नाप्यन्यैरतिपातयितव्या नापि परे तान् स्वयमतिपातयन्तोऽनुज्ञाप्याः श्रमणशिरोमणिभिः । क्षेत्रतस्तु सर्वस्मिन्नपि लोके ।
कालतस्तु यावज्जीवम् । भावतस्तु रागतो द्वेषतो वा तेषामनतिपातनम् । यतः सर्वेऽपि जन्तवो जीवितुमेव वाञ्छंति न कोऽपि
मर्तुं नैरयिक विना । यदुक्तं श्रीदशवैकालिके 'सव्वे जीवा वि इच्छंति जीविउं न मरिज्जिउं । तम्हा पाणिवहं घोरं,
निग्गंथा वज्जयंति णं ॥ १ ॥' एव मृषावादविरमणव्रतमपि चतुर्विधं द्रव्यादिप्रकारैस्सूत्रम् । द्रव्यतः सर्वद्रव्यपर्यायविषयं
मृषावाक्य न वक्तव्यम्, एव भाषणानुज्ञेऽपि तद्विषये वर्जनीये । क्षेत्रतस्तु लोकालोकविषयम् । कालतस्तु यावज्जीवं दिवसे
निशायां वा । भावतस्तु रागाद् वा द्वेषाद् वा मृषावादपरिहारः । तत्र क्रोधमानौ द्वेषांतर्गतौ, मायालोभौ तु रागांतर्भूतौ ।
यदुक्त 'मायालोभो रागो, कोहो माणो अ वन्निओ दोसो । निज्जिणसु इमे दुन्नि वि, जइ इच्छसि तं पयं परं
परमं ॥ १ ॥' एव चतुर्विधमप्यलीकं क्रोधादिभिरुपलक्षणाद् हास्यभयादिभिश्च त्रिविधत्रिविधेन वर्जयेद् यतिरनंतशमार्थी ।
उक्तं च मुसावाओ अ लोगम्मि, सव्वसाहूहिं गरहिओ । अविस्सासो अ भूआणं, मोसं तम्हा विवज्जए
॥ १ ॥ एवमदत्तादानविरमणप्रभृतीन्यपि चतुर्विधानि विज्ञेयानि । तत्रादत्तादानं द्रव्यतः सचित्ताचित्तमिश्रवस्तुविषयम् । तत्रा-

विना नवोपकरणानि, एकस्मिन् कल्पे दश, कल्पद्वये पुनरेकादश, कल्पत्रये तु द्वादश एवं चत्वारो भेदा भवंति । पतद्ग्रह- धारिणामुपकरणविषये । ये तु जिनकल्पिकाः पाणिपात्रास्तेषा जघन्यतो रजोहरणमुखपोतिके इत्युपकरणे द्वे, एककल्पधरणे तु तानि त्रीणि, कल्पद्वयधरणे तु चत्वारि, कल्पत्रयधरणे तु पंच, एव चत्वारो भेदा भवत्युपकरणविषये पाणिभोजिनाम् । उभयमीलने त्वष्टभेदा भवेयुर्जिनकल्पिकानामुपकरणविधौ । एतान्येव द्वादश मात्रकचोलपट्टसहितानि चतुर्दशोपकरणानि भवति स्थविरकल्पिकानाम् । एतेषा मध्ये प्रमाणापेक्षयोत्कृष्टानि चत्वार्युपकरणानि कल्पत्रयपतद्ग्रहरूपाणि, पटलकरजस्त्राण- पात्रबंधनचोलपट्टरजोहरणमात्रकरूपाणि षण्मध्यमानि, गुच्छकपात्रप्रस्थापनमुखपोतिकाद्वयरूपाणि चत्वारि जघन्यानि । आर्यिकाणा त्वोघोपधौ पचविंशत्युपकरणानि । तेषु द्वादश प्रागुक्तानि, त्रयोदश तु मात्रक, चतुर्दशस्तु कमठकः, साध्व्यो हि तुच्छस्वभावतया कमठके भुंजते, अन्यानि चैकादशोपकरणानि भवंति साध्वीनां तानि चेमानि श्रीओघनिर्युक्तिगाथाभिर- वसेयानि, तथाहि–उग्गहणंतग १ पट्टो २ अद्धोरुअ ३ चलणिआ य बोधव्वा ४ । अब्भिंतर ५ बाहिरियं सणियं ६ तह कंचुगे चेव ७ ॥ १ ॥ उक्कच्छिय ८ वेकच्छी ९, संघाडी चेव १० खंधकरणी ११ य । ओहोवहिम्मि एए, अज्जाणं पन्नवीसं तु ॥ २ ॥ नावानिभो उग्गहणं–तगो उ सो गुज्झदेसरक्खट्ठा । सो उ पमाणे णेगो, घणमसिणो देहमासज्जा ॥ ३ ॥ पट्टो वि होइ एक्को, देहपमाणेण सो उ भइअव्वो । छायंतोग्गहणंतं, कडिबंधो मल्लकच्छा वा ॥ ४ ॥ अद्धोरुगो उ ते दो वि, गिण्हिउं छायए कडिविभागं । जाणुपमाणा चलणी, असीविया लंखियाइ व्व ॥ ५ ॥ अंतो नियंसणी पुण, लीणतरा जाव अद्धजंघाओ ।

तथाहि–समचतुरस्रं वृत्तं पतद्ग्रहरूपं पात्रं दवरकेण तिर्यगूर्ध्वं म-
मात्रकरूपपात्रम् एतद् गणनाप्रमाणम्। अथ प्रमाणमानमुच्यते। तथाहि–समचतुरस्रं वृत्तं पतद्ग्रहरूपं पात्रं प्रमाणतो मध्यममत उक्तप्रमाणाद्धीनं जघन्य-
घश्च मीयते स चेद् दवरको विहस्तित्रयं चत्वारि चांगुलानि भवति तदा तत्पात्रं प्रमाणतो मध्यममत उक्तप्रमाणाद्धीनं जघन्य-
मतिरिक्त तूत्कृष्टम्। अथवा कालोदरप्रमाणसिद्धमिदमन्यत् प्रमाणमुपदिष्टश्रीमदार्हतसमये, तथाहि ज्येष्ठाषाढमासयोर्गव्यूत-
द्वयादागतो यतिः कांजिकादिद्रव्योपेतभक्तेन चतुरंगुलन्यूनतया भृतं पात्रमेकस्थानोपविष्टो यद् भुक्ते तत् मध्यमप्रमाणम्,
अत उक्तप्रमाणान् महत्तर पुनरन्यमुनिभ्यः संविभागविधानहेतवे भवति नंदीभाजनं तु महत्प्रमाणं गुरुसमर्पितमात्मीयं वा
धारयति यतिर्वैयावृत्य विध्यता। तस्य च कांतारदुर्भिक्षपत्तनरोधादिपूपयोगो न तु सर्वकाल शेषसाधूनां तु जठरपिठर-
प्रमाणोपेतमेव पात्रम्। तथा पात्र लक्षणोपेतमेव धार्यं, यतः सलक्षणे गुणा निर्लक्षणे तु दोषाः। लक्षणं चेदं वर्तुलं सर्वतः
समचतुरस्र सुप्रतिष्ठानं चिरस्थायि स्निग्धवर्णोपेतं सलक्षणम्। कचिदुन्नततया कचिन्निम्नतया च हुंडमकालशुष्कं संकुचितं वलि-
भृतमथोराजियुक्ततया सछिद्रतया वा भिन्नमलक्षणम्। अथ सलक्षणस्य गुणा उच्यंते। तथाहि–वृत्ते समचतुरस्रे पात्रे लाभो
भवति। सुप्रतिष्ठिते प्रतिष्ठा भवेत्। निर्व्रणे कीर्त्तिरारोग्यं च स्निग्धवर्णोपेते तु ज्ञानसंपत्। अथालक्षणस्य दोषा उच्यंते।
तथाहि–हुडे पात्रे चारित्रस्य विनाशः। शबले तु चित्तविप्लुतिः। कीलवद्दीर्घसंस्थाने तु गणे चरणे वा नावस्थानम्। नाभौ
तु पद्माकारेऽकुशलम्। सव्रणमंतर्बहिश्च दग्धे दीर्घनिद्रा। अथ पात्रमुखलक्षणमुच्यते। तथाहि–पात्रमुखं वृत्त चतुरस्रं विस्तीर्णं
च विधीयते यथा मध्ये प्रविशन् कर्णे हस्तो न लगति गृही च सुखेन ददाति। अयमेव चार्थः समर्थ्यते श्रीमदोघनिर्युक्ति-
गाथाभिस्तथाहि–वट्टं समचउरंसं, होइ थिरं थावरं च वण्णं च। हुंडं वायाइद्धं, भिन्नं च अधारणिज्जाइं॥ १॥

चात्मप्रमाणं तृणग्रहणवह्निसेवनशीतनिवारणार्थं धर्मशुक्लध्यानरक्षार्थं ग्लानसमाधिकृते मृतस्थगनकृते च कल्पग्रहणम् । रजोहरणं तु दण्डपर्यन्ते निविडं दशिकापार्श्वे तु मृदुकम्बलीखण्डकृतदशिकत्वात् कोमलमशुषिरमंगुष्ठपर्वलग्नप्रदेशिन्यग्रच्छिद्रं स्याद् यथा बाह्यनिषद्याद्वयरहितेन मध्यदण्डकेन तेनापूर्यते तावन्मितबाहल्यं बहिर्दवरकेण वारत्रयवेष्टितं हस्तप्रमाणदंडमष्टां- गुलदशिकायुतमन्यतरस्य हीनाधिकतायामपि द्वात्रिंशदंगुलदीर्घं निषद्यमेकामेव गणनया । अथ प्रयोजनं स्थाननिषीदन- शयनसंदंशकादिप्रमार्जनकृते लिंगकृते च रजोहरणधरणम् । वदनवसनप्रमाणं तु चतुरंगुलसमधिकावितस्तिर्दैर्घ्या वा वसतिप्रमार्जनादौ वदनं प्रच्छाद्य कृकाटिकापृष्ठे ग्रन्थिर्दातुं शक्यते तावत्प्रमाणं विधेयम् । एतत् प्रयोजनं तु सम्पातिमादि- प्राणिरक्षा सचित्तरजःप्रमार्जने वसतिप्रमार्जने रजःप्रवेशनिषेधार्थं नासामुखबन्धनं च मात्रकप्रमाणं तु 'दो असई उ पसई, दोहिं पसईहिं सेइआ होइ । चउ सेइउ अ कुडओ, चउ कुडओ पत्थओ होइ ॥ १ ॥' एतद्गाथोक्त- प्रमाणमागधकप्रस्थात् किंचिदतिरिक्तता, अनेन च वर्षाकृतुबद्धकालयोर्गुरुप्रायोग्यं द्रव्यं गृह्यते । अथ मात्रकस्य द्वितीयं प्रमाणं यद् गव्यूतद्वयादागतो यतिः सूपौदनपरिपूर्णं मात्रकमेकस्थोपविष्टो भुंक्ते तद् विधेयम् । लघुनि च मात्रके इमे दोषा यदाच्छादनमुत्क्षिप्यते तदा शुषिरेण प्रसर्पणा रजः प्रविशति । तथा तक्रादीनां परिगलने च पृथिव्यादीनां वधः । अनेनाक्षमवपैतावद् गृहीतमिति जने निंदा च स्यात् । यत्र च क्षेत्रेऽसुलभमन्नं मात्रके सर्वेऽपि संघाटका गुरुयोग्यं गृह्णंति । सुलभे तु मात्रके गुरुप्रायोग्यमेक एव संघाटको गृह्णाति, शेषसंघाटकास्तु पतद्ग्रहे भक्तं मात्रके तु पानं गृह्णंति संसक्तादिदोषशंकितं वा भक्तम् । चोलपट्टस्तु यूनां स्थूलो हस्तचतुष्कप्रमाणः स्थविराणां तु श्लक्ष्णो द्विहस्तमानस्तस्यापि

भणिआ ॥ १ ॥ दंडकस्तु नवपर्वाणि यावद् विषमपर्ववानेव सलक्षणो न तु समपर्वा दशपर्वणि तु तस्मिन् सर्वसंपदः लक्ष-
णवानेव च स ग्राह्यो न त्वन्यः । उक्तं च तस्यामेव वंकाकीडक्खइआ चित्तलयापुल्लडायदव्वयलटीओ । उज्झ-
मुक्खावज्जेअव्वा पयत्तेणं ॥ १ ॥ विसमेसु अ पव्वेसुं अनिष्पन्नासु अच्छिसु । फुडिआ परुसवन्ना य,
निस्सारा य निंदिआ ॥ २ ॥ तणुई पव्वमज्झेसु, थूरापोरेसु गंठिला । अथिरा असारजरदा, साणघाया य
निंदिआ ॥ ३ ॥ घणवद्धमाणपव्वा, निद्धवंन्नेण एगवन्ना य । घणमसिणवट्टपोरा, लट्ठि पसत्था जइजणस्स
॥ ४ ॥ अनिष्पन्नेष्वऽक्षिषु बीजप्रदेशस्थानेषु अधः श्वपादसदृशा घनानि मसृणानि वृत्तानि वर्तुलानि पर्वाणि यस्याः सा
इत्युक्तप्रसंगागतमोघौपग्रहिकोपकरणस्वरूपम् । एवममूर्छिततया यदौघौपग्रकोपधिधारणं तन्न परिग्रहस्तद्वर्जस्तु वर्जनीयः
परिग्रहः परिग्रहविरमणव्रताराधकैर्मोक्षसाधकैर्मुमुक्षुभिः ।

तथा प्रागुक्तस्वरूपाः पंचसमितयः सम्यक्परिपालनीयाः यतः समितिगुप्तिपरिरक्षणेनैव चरणाराधनं चरणाराधने नैव
चानंतसुखनिधान महानंदपदप्राप्तिस्ततश्चरिताराधनमिच्छता यतिपुंगवेन समितयः सम्यगाराधनीयाः ।

तथा षड्जीवनिकाया यतिभिर्यत्नेन परिपालनीया यतः षट्कायपरिपालनेनैव श्रमणधर्मो यदुक्तं छज्जीवनिकायम-
हव्वयाण० छज्जीवनिकायदया० तस्मात् संयमसमाराधनमिच्छता मुनिपुंगवेन सर्वप्रयत्नेन परिपालनीया एव ऋतु(६)-
विधजीवनिकायाः । तथा मुनिमतल्लिकाभिर्लेश्याषट्कमध्यादाद्याः कृष्णनीलकापोताख्या दुर्गतिगतिनिमित्तभूतास्तिस्रो लेश्याः
परिहरणीयाः, अंतिमास्तु तिस्रस्तेजःपद्मशुक्लाभिधानाः सुगतिनिबंधनभूताः स्वीकर्तव्या लेश्या अलेश्यतामिच्छुभिः । अत्र

लेश्याष्टके शुभलेश्यावर्णं, यथाहि—एको महान् जंबूनामा द्रुमः सुपक्वफलपटलावनतशाखाग्रो वीक्षाञ्चक्रे षड्भिः पुरुषैः। तं च वीक्ष्य प्रथमेनोक्तं मूलादेवास्य वृक्षस्य पातनं कुर्मः। द्वितीयेनोक्तं शाखां छित्त्वा, तृतीयेनोक्तं प्रशाखां छित्त्वा, चतुर्थेन गुच्छम्, पंचमेन फलानि छित्त्वा षष्ठेन निपतितं भक्ष्यं फलमेकेनापि पतितान्येव खाद्यताम्। एतेषु प्रथमः कृष्णलेश्यावान्, द्वितीयस्तु नीललेश्यावान् तावद्यावत् षष्ठः शुक्ललेश्यावान्। यथान्ये केचन नराः षट् ग्रामघातार्थं निर्गतास्तत्र प्रथमस्तेन कथितं यः कोऽपि द्विपदोऽपि नरो नारी वा चतुष्पदोऽस्माभिर्वीक्ष्यन्ते सर्वोऽपि प्राणिगणो हन्तव्यः। द्वितीयेनोक्तं मनुष्या एव हन्यते न पशवो पशवः किं हताः?। एवं तृतीयेनोक्तं नरा एव हन्यंते न तु नार्यः। तुरीयेनोक्तं सायुधा एव। पंचमेन तु युध्यमाना एव। षष्ठेन तु निगदितमेकं तावद्धनं परिगृह्णतेऽपरं च मारयेत्तदसंगतमेव केवलं धनापहारमेव कुर्मो, न तु कस्यापि विध्वंसनम्। एतेषु प्रथमः कृष्णलेश्यावान् यावत् षष्ठः शुक्ललेश्यावान्। एतदर्थसंग्राहिका चेयं गाथा मूलं साहपसाहा गुच्छफले छिंदपडियभक्खणया। सव्व माणुसपुरिसा साउहजुज्झंतधणहरणा ॥ १ ॥ एतासु कृष्णा कृष्णवर्णा, नीला नीलवर्णा, कापोता कपोतवर्णा, तेजोलेश्या तु रक्ता, पद्मा तु पीता, शुक्ला तु शुक्ला। पंचरसस्पर्शा अपि क्रमशस्ता अप्रशस्ता अप्रशस्तानां तु प्रशस्ताः। परिणामस्तु जघन्योत्कृष्टमध्यमजघन्यादिभेदेन त्रिविधो नवविधः सप्तविंशतिविध एकाशीतिविधत्रिचत्वारिंशदधिकद्विशतविधो वा विज्ञेयः। लक्षणानि तु कृष्णायाः पंचाश्रवप्रवृत्तिमनोवचनकायगुप्तिरहितषड्जीवनिकायाविरतिस्तीव्रारम्भपरिणामादिलक्षणानि। यदुक्तं लेश्याध्ययने पंचासवप्पवत्तो तिहि—अगुत्तो छसु अ—विरओ य। तिव्वारंभपरिणओ खुद्दो साहस्सिओ नरो ॥ १ ॥ निद्धंधसपरिणामो, निस्संसो अजिइंदिओ।

ईसा एअजोअसमाउत्तो किण्हलेसं तु परिणमे ॥ २ ॥ नीललेश्यायास्त्वीर्ष्यामर्षादीनि लक्षणानि, उक्तं च तत्रैव ईसा अमरिस अतवो अविज्जमाया अहीरिआ। गिद्धिपओसे अ सढे, पमत्ते रसलोलुए ॥ १ ॥ सायगवेसए य आरंभ अविरओ खुद्दो० एअ० नीललेसं० ॥ २ ॥ कपोतलेश्यालक्षणानि तु वक्रता वक्रसमाचारादीनि उक्तं च वंके वंकसमायारे निअडिल्ले अणुज्जुए। पलिउंचगओवहिए मिच्छदिट्ठी अणारिए॥ १ ॥ उप्फासगदुट्ठवाई अ तेणे यावि अ मच्छरी एअ जोग० काऊलेसं० ॥ २ ॥ प्रति-अंचकः स्वदोपप्रच्छादकः उपधिश्छद्म तेन चरतीत्यौपधिकः, उत्प्रासकं च यथा पर उत्प्रास्यते दुष्टं च रागादिदोषवद् यथास्यादने वदनशील उत्प्रायः। तेजोलेश्यालक्षणानि तु नीचैर्वृत्त्यचपलताऽमायितादीनि उक्तं च निआवित्ती अचवले अमाई अ कुतूहले। विणीअविणए दंते, जोगवं उवहाणवं ॥ १ ॥ पिअधम्मेऽदढधम्मे वज्जभीरु हिएसए। एअजोग० तेउलेसं० ॥ २ ॥ पद्मलेश्यालक्षणानि तु प्रतनुक्रोधमानमायालोभतादीनि यदुक्तं पयणुकोहमाणे अ मायालोभे अ पयणुए। पसंतचित्ते दंतप्पा जोगवं उवहाणयं॥ १ ॥ तहा पयणुवाई अ उवसंते जिइंदिए। एअजोग० पम्हलेसं तु० ॥ २ ॥ शुक्लेश्यालक्षणानि त्वार्त्तरौद्रपरिहारेण धर्मशुक्लध्यानादीनि ज्ञेयानि उक्तं च अट्टरुद्दाणि वज्जित्ता धम्मसुक्काइ झायए। पसंतचित्ते दंतप्पा समिए गुत्ते अ गुत्तिसु ॥ १ ॥ सरागे वीयरागे वा उवसंते जिइंदिए। एअ० सुक्कलेसं० ॥ २ ॥ प्रकर्षापकर्षकृतानि स्थानानि तु लेश्यानामसंख्येयलोकाकाशप्रदेशप्रमाणानि। तत्राशुभानां संक्लिष्टानि शुभानां तु विशुद्धानि। सर्वास्वपि लेश्यासु प्रथमसमयपरिणतासु परलोकेन कस्यापि स्यादुपपातो नापि च चरमसमयपरिणतासु अंतर्मुहूर्त्ते गतेऽतर्मुहूर्त्ते च शेषे

य सा उब्भिअधम्मा भवे भिक्खु ५ पाणेसणावि एवं नवरि चउत्थीइ होइ नाणत्तं सोवीरायामाईजमलेवाडंति सम उत्ता ६ ।

तथा मुनिसत्तमैर्जाति १ कुल २ रूप ३ बल ४ श्रुत ५ तपो ६ लाभै ७ श्वर्यमद ८ रूपाण्यष्टौ मदस्थानानि सत्यपि जात्याद्युत्तमत्वे वर्जनीयानि । यदुक्त श्रीदशवैकालिके 'न बाहिरं परिभवे अत्ताणं न समुक्कसे । सुअलाभे न मज्जिज्जा, जच्चा तवसि बुद्धिए ॥ तथा न जाइमत्ते न य रुवमत्ते न लाभमत्ते न सुएण मत्ते मयाणि सव्वाणि विवज्जयंतो धम्मज्झाणरए अ जे स भिक्खू ॥ २ ॥'

तथा साधुसिंहैः पापहेतुभूतानि नवनिदानानि त्याज्यानि । तत्स्वरूपं च प्राक् प्रतिपादितम् । तथा निर्ग्रंथैः पृथिव्य१ऽप् २ तेजो ३ वात ४ वनस्पति ५ द्वि ६ त्रि ७ चतु ८ ष्पंचेन्द्रियरूप ९ नवविधजीवरक्षणं सम्यग्विधेयम् । यतो जीववहो अप्पवहो जीवदया अप्पएगे दया चेव । ता सव्वजीवहिंसा, परिचत्ता अत्तकामेहिं ॥

तथा निर्ग्रंथैर्नवब्रह्मगुप्तयः सम्यक्पालनीयास्ताश्चेमाः—स्त्रीपशुपंडकसंसक्ता वसतिर्न सेवनीया। तथा वनिताभिः केवलाभिः समं कथा न विधेया तथा प्रागुक्तस्वरूपा जाति १ कुल २ रूप ३ नेपथ्य ४ भेदेन चतुष्प्रकाराऽपि स्त्रीकथा न कर्त्तव्या २ । तथा योषिन्निषद्या न सेवनीया, उत्थितायामपि तस्यां तत्र नोपवेष्टव्यम् ३ । तथा वनितानां नयनवदनादीन्यंगोपांगानि नालोकनीयानि ४ । तथा कुड्यान्तरितसुरतसमयसमविकूजितादिध्वनिर्नाकर्णनीयः ५ । तथा पूर्वभुक्तभोगा न स्मरणीयाः ६ । तथा प्रणीताहाराभ्यवहाराः परिहार्य्याः ७ । तथा रूक्षस्याप्यतिमात्रस्याहारस्य ग्रहणं न विधेयम् ८ । तथा वपुःपात्रवस्त्र-

बोधव्वे बंभचेरे अ ॥ १ ॥ अत्र लाघवमप्रतिबद्धता त्यागस्तु साधूनामशनवसनादिवितरणरूपः । अयमेव दशविधो
धर्मो मुक्तिनिदानमयमेव च धर्मो मोक्षार्थिभिः सम्यगुपासनीयः । उक्तं च योगशास्त्रे व्याख्यातः खलु धर्मोऽयं, भग-
वद्भिर्जिनोत्तमैः । यं समालंबमानो हि, न मज्जेद् भवसागरे ॥ १ ॥ सयमः सूनृत शौचमित्यादिकाः श्लोका अत्र
वाच्याः, आरण्यकेऽप्ययमेव दशविधो धर्मो मुक्तिशर्मनिबंधनतया निगदितस्तथाहि सत्यं तपश्च संतोपः, क्षमा चारित्र-
मार्जवम् । श्रद्धा धृतिरहिता च, संवरश्च तथा परः ॥ १ ॥ ब्रह्मांडपुराणेऽप्युक्तं इक्ष्वाकुकुलवंशोद्भवेन नाभिसुतेन
मरुदेवानदनेन महादेवेन ऋपमेन दशप्रकारो धर्मः स्वयमेवाचीर्णः, केवलज्ञानलंभाच्च ये परमेष्ठिनो वीतरागाः स्नातका
नैर्ग्रंथा नैष्ठिकास्तेषां प्रवर्तेत व्याख्यातः प्रणीतस्त्रेतायामादावित्यादि ।

तथा यतिभिरेकादशोपासकप्रतिमाः सम्यक् श्रद्धेयाः प्ररूपणीयाश्च । तत्र प्रथमप्रतिमायां मासं यावदुपशमादिपंचगुण-
गरिष्ठं शंकादिपंचदूषणकुग्रहादिरहितं सम्यग्दर्शनं पलानीयम् । अय भावः कुग्रहशंकादिशल्यविकलस्य व्रतादिगुणरहित-
स्यापि सम्यग्दर्शनस्य मासं यावद् वा प्रतिपत्तिः सा प्रथमा सम्यग्दर्शनप्रतिमा । प्रतिमाप्रतिपत्तेः पूर्वमपि सम्यक्त्वमभूत्
परमिह शंकादिपचातिचारराजाभियोगाद्याकारपट्करहितत्वेन यथोक्तसमस्तदर्शनाचारविशेषप्रतिपालनाभ्युपगमेन च प्रतिमात्वं
समान्यते । अत्र गाथा पसमाइगुणविसिट्ठं, कुग्गहसंकाइसल्लपरिहीणं । सम्मदंसणमणहं, दंसणपडिमा हवइ
पढमा ॥ १ ॥ द्वितीयाया यथोक्तसम्यक्त्वसहितानि द्वादशव्रतानि निरतिचारानि पालनीयानि मासद्वयं यावत् । प्रतिमा-
प्रतिपत्तिपूर्वमपि व्रतपालनमासीत्, पर तेपां व्रतमंगीकृतौ निरतिचारतया पालनं विधेयम् २ । तृतीयायां निरतिचार-

सिंगारकहविभूसुकरिसं, इत्थीकहं च वज्जंतो । वज्जइ अबंभमेगं, तओ अ छट्ठीइ
ब्रह्म पालनीयम् । अत्र गाथा सिंगारकहविभूसुकरिसं, इत्थीकहं च वज्जंतो । वज्जइ अबंभमेगं, तओ अ छट्ठीइ
छम्मासे ॥ १ ॥ ६ । सप्तम्या तु षट्प्रतिमोक्तक्रियां कुर्वन् सचित्त चतुर्विधमप्याहार परिहरति सप्तमासान् यावत् । अत्र
गाथा सत्तमी सत्त उ मासे, न वि आहारइ सचित्तमाहारं । जं जं हिट्ठिल्लाणं, तं तं चरिमाणसव्वंपि ॥ १ ॥
७ । अष्टम्यां तु पृथिव्यादिषट्कायारंभं स्वय वर्जयति । तथाविधतीव्रपरिणामरहिततया परैः पृथिव्याद्यारंभकारापणे तु न
नियमः । ननु स्वयमारभमकुर्वतः कर्मकरादींश्च तत्र व्यापारयतः प्राणिप्राणव्यपरोपणं तदवस्थमेव । उच्यते स्वयमारंभस्य
करण परैश्च तत्कारापणमिति या उभयजन्या हिंसा सममवत्तन्मध्यात् स्वयं तदकरणे एका हिंसा परिहृता भवेदेव, यथा
प्रवर्द्धमानो व्याधिः स्तोकस्तोकतया हीयमानो हितायैव एवमारंभोऽपि । नवम्या तु नवमासान् यावत् स्वयमारंभम-
कुर्वन्नन्यैरपि कर्मकरादिभिर्न कारयत्यारंभं पुत्रादिन्यस्तगृहव्यापारः । आरंभसयंकरणं, अट्ठमिआ अट्ठमास वज्जेइ ।
नवमी नवमासे, पुण पेसारंभं विवज्जेइ ॥ १ ॥ ९ । दशम्यां तु दशमासान् यावदुद्दिष्टकृतमप्यशनादि नैवाऽश्नाति ।
कश्चित्तु क्षुरमुंडितशीर्षः, कश्चित्तु शिरसि शिखां धारयति, भून्यस्तधनं च सुतादीन् पृच्छतः कथयति चेज्जानाति, एतावद्
विहाय नान्यत् किमपि गृहिकृत्यं करोति । उक्तं च दसमासदसमासे पुण, उद्दिट्ठकयं तु भत्त नवि भुंजे । सो
होइ अछुरमुंडो, सिहलिं वा धारए कोइ ॥ २ ॥ जं निहिअमच्छजायं, पुच्छंत सुआण नवरि सो । तत्थ जइ
जाणइ तो साहइ, अह न वि तो बेइ न विआणे ॥ २ ॥ १० । एकादश्या त्वेकादशमासान् क्षुरेण लोचेन वा
लुचितकचो रजोहरणपतद्ग्रहादिसकलसाधूपकरणान्यादाय सदनान्निरयं समितिगुप्त्यादिसकलसाधुसामाचारीसमाचरणचतुरो

तयोर्द्वे दत्ती २। त्रिमासिक्यां तिस्रो दत्तीः ३। एवं तावद् वाच्यं यावत् सप्तमासिक्यां सप्त दत्तीः ७। अष्टम्यां तु सप्तरात्रिक्यां चतुर्थभक्तेनापानकेन ग्रामाद् बहिरुत्तानादिस्थानस्थितो दिव्याद्युपसर्गान् सहते ८। एवं नवम्यामपि सप्तरात्रिक्यां गोदोहिकावीरासनादिस्थायी स्यात् १०। ग्रामाद् बहिरुत्कटिको दण्डायतो वा तिष्ठेत् ९। एवमेव दशम्यामपि सप्तरात्रिक्यां गोदोहिकावीरासनादिस्थायी स्यात् १०। एकादश्यामहोरात्रिकायां षष्ठभक्तेनापानकेन ग्रामाद् बहिस्तनूत्सर्गं कुर्यात ११। द्वादश्यामेकरात्रिक्यामष्टमभक्तेनेषत्प्राग्भारावनतो निर्निमेषनयन एकदृष्टिस्तिष्ठेत्कायोत्सर्गे १२। सांप्रत पुनर्मुनिभिरिमाः प्रतिमाः सम्यक् प्ररूपणीयाः श्रद्धेयाश्च। आसां विशेषार्थस्तु दशाभ्योऽवसेयः।

तथा यतिभिस्त्रयोदशक्रियास्थानानि सम्यक् परिहरणीयानि च यथाशक्ति। तत्र प्रथमाऽर्थाय क्रियाऽर्थक्रिया १। अनर्थाय क्रियाऽनर्थक्रिया २। हिंसायै क्रिया हिंसाक्रिया ३। अन्यस्मै बाणादि मुञ्चति अन्यं च हन्ति नाऽकस्मात्-क्रिया ४। मित्रमप्यमित्रमित्यस्तेनमपि स्तेनमित्यादिभ्रान्त्या यद्धननं सा दृष्टिविपर्यासक्रिया ५। षष्ठी मृषाक्रिया ६। अदत्तग्रहणादिनाऽदत्तादानक्रिया ७। शङ्कया मनस्तापादिकरणे आध्यात्मिकीक्रिया ८। मानेन परहीलनादिना मानक्रिया ९। स्वल्पेऽप्यपराधे तीव्रदंडकरणममित्रक्रिया १०। कौटिल्यादिना मायाक्रिया ११। कामादिगृध्द्या आत्मानं रक्षन् परेषां यद् वधबधादि विधत्ते सा लोभक्रिया १२। त्रयोदशी ईर्यापथिकीक्रिया ईरणमीर्यागमनं सैव पथा मार्गो यस्य तदीर्यापथं गमनादिप्रभवं कर्म तस्य बध्यमानस्य वेद्यमानस्य वा निमित्तभूता क्रिया सा निमित्तनिमित्तिनोरभेदादीर्यापथिकी क्रिया सयोगिकेवलिना शैलेश्यवस्थाया अर्वाक् क्षीणोपशान्तमोहानां छद्मस्थवीतरागाणां च। उक्तं च-इरियावहिआ किरिआ,

त्कृष्टं जघन्यतस्त्वयोगिवर्जानि सर्वाण्यपि गुणस्थानान्यंतर्मुहूर्त्तानि। मिश्रे क्षीणमोहे सयोगिगुणस्थानके च न म्रियंते शेषेष्वे-
कादशगुणस्थानकेषु च म्रियते। तत्रापि मिथ्यात्वे सास्वादने सम्यक्त्वे वा गृहीते म्रियते न शेषैकादशगुणस्थानकेषु गृही-
तेषु। एतदुक्तार्थसंवादिन्यश्च पूर्वाचार्यकृता गाथास्तथाहि—छावलिअं सासाणं, समहिअतित्तीससायरं चउत्थं।
देसूणपुव्वकोडी, पंचमं तेरस च पुढो ॥ १ ॥ लहुपंचक्खरचरिमं, तइअं छट्ठाउवारसंसा। वइआ अट्ठगुण-
ठाणी अंतमुहुत्ताइ पत्तेअं ॥ २ ॥ मीसे खीणसजोगे, न मरंतेगारसेसु अ मरंति। तेसु वि तिसु गहिएसुं,
परलोगमो न सेसेसु ॥ ३ ॥ मिच्छे य सासणे वा, अविरयसम्मम्मि अहवा गहिअम्मि जंति जिआ,
परलोअं सेसिक्कारसगुणे मुत्तुं ॥ ४ ॥ एव द्वेषाऽपि चतुर्दशभूतग्रामाः सम्यग् ज्ञेयाः श्रद्धेयाः पालनीयाश्च।

तथा मुनिसिंहैः पंचदशविधाः परमाधार्मिकाः सम्यक् श्रद्धेयाः प्ररूपणीयाश्च। तत्स्वरूपं च श्रीभवभावनागाथाभिरेव
लिख्यते। तथाहि अंबे १ अंबरिसी २ चेव, सामे आ ३ सबले इअ ४। रुद्दो ५ वरुद्द ६ काले ७ अ, महाकाले-
त्ति आवरे ८ ॥ १ ॥ असि ९ पत्तधणू १० कुंभे ११, वालू १२ वेअरिणी १३ त्ति अ। खरस्सरे १४ महाघोपे
१५, पनरसपरमाहम्मिआ ॥२॥ एए उ नरयपाला, धावंति समंतओ कलयंता। रे रे तुरिअं मारह छिंदह,
भिंदह इमं पावं ॥ ३ ॥ इअ जंपती वा वल्लभल्लि-सिल्लेहि खग्गकुंतेहिं। नीहरमाणं विंधंति, तह य छिंदंति
निक्करुणा ॥ ४ ॥ निवडंतो वि हु कोइ वि, पढमं खिप्पइ महंतसूलाइं। अप्फलिज्जइ अन्नो, वज्जसिलाकंटय-
समूहे ॥५॥ अन्नो वज्जगिविआसु, खिप्पइ विरसमारसंतो वि। अंबाईण सुराणं, इत्तो साहेमि वावारं ॥ ६ ॥

माराहपहिं चिंधंति, मुग्गराहिं तह मिसुंभंति। भाजंति अंगपंगे, मुयंति भनारए अंगा ॥ ७ ॥ निहए अ
तह मिसवे, भोहयपिते पिसियवरोहिं। कप्पंति कप्पणीहि अ, अंगरिसी तस्स नेरइए ॥ ८ ॥ सारणपाइण
तोत्तय-पिंपव तह रमतछपहारेहिं। सामा मेरइआण कुणंति, तिण्याओ पिअणाओ ॥९॥ सबसा मेरइआण,
उअराओ तह प हिपयमज्झाओ। कड्ढंति अंतवसमंस-फिप्फिसे छिंदिओ पडुसो ॥ १० ॥ छिंदंति
असीहिं तिक्ख सुलहासतिकुंततुमरेसु। पोअंति विआसु वहंति, निहय मारए रुद्दा ॥ ११ ॥ मुअंति
महुवगापि रुम्मासुसिराप रत्तरणे। कप्पंति अंगमंत-उवरा निरयवासीण ॥१२॥ मीरासु मुठएसु अ,
कंडूसु म पयणगेसु कुंमीसु। लोहीसु अपवअत, पयंति काला उ नेरइए ॥ १३ ॥ छिंदुणसीह पुरपा-गिद्धेणि
तह कागिमिस्समाणाणि। खाअंति मंसखंडाणि, मारए तस्स महच्छला ॥ १४ ॥ हत्थे पाए कन्ने, याहु सिरा तह
प अंगुवणाणि। छिंदंति असी असिमाइएहिं, भिक्खपि निरयाण ॥ १५ ॥ पत्तपणुमिरपपाला, असिपत्तवणं
विउव्विअ काउं। दंसंति तस्स छायाहि-लासिणो अंति नेरइया ॥ १६ ॥ तो पवणबलिरतरु-निवडिएहिं
असिमाइएहिं चिर। तेसिं कन्नुकनास-करचरणऊरुमाईणि छिंदंति ॥ १७ ॥ कुंमीसु पयणगेसु अ सुंठेसु
अ कुंडकोहिकुंमीसु। कुंमी उ नारए उच्छलंत-निळारस तसंति ॥ १८ ॥ तअपवअकुहत्ते, वणपवकलंपणा
छला। निरए मुंजति मारए तह, बालुअनामा निरयपाला ॥ १९ ॥ वसुपूअवहिरकेसट्ठि-वाहिणि कलपलं-
ततठसुत्त वेअरणिं। मासमइअरकाषषिप्प विउव्वेओ ॥२०॥ वेअरणिनिरयपाला, तस्स पहावंति मारए

दुहिए । आरोवंति तहं पि ह्रु, रत्ताए लोहनावाए ॥ २१ ॥ नेरइए चेव परप्परंपि, परसूहिं तच्छयंति दढं । पलवंते करवत्तेहिं अ फाडंति, निद्दयं मज्झमज्झेणं ॥२२॥ विअरालवज्जकंटय-भीममहासिंबलीसु अ खिवंति । मह्घोसं कुण खरसद्दं, खरस्सरा निरयपालत्ति ॥ २३ ॥ पसुणुव्व नारए वह-भएण भीए पलायमाणे अ । रुंभंति तहिं महाघोसा ॥ २४॥ एवमेतेषां पंचदशपरमाधार्मिका नानाविधविडंबनाविधान निशम्य तत्र विधेयमाणे, मेव येन निरये समुत्पद्यते । अथासा गाथानां विषमपदव्याख्या । तथाहि-धाडंति सारमेयानि व क्रिडया तानुत्रासयंति ७ । खड्गमुद्गरादिना निहताँस्तथा निषण्णाँस्तद्घातमूर्छया निपतितान्निश्चेतनीभूतान् विचित्रैः स्थूलमध्यमसूक्ष्मखडैः ८ । तोत्रेण वज्रमयदंडेन वेधनम् ९ । मीरासु वज्राग्निभृतदीर्घचुल्लासु, स्थठेषु वज्रमयतीक्ष्णकीलकेषु, कंडूषु तीव्रतापेषूपकरणविशेषेषु, पवनकेषु मडकादिपाकहेतुषु लोहीष्वतिप्रतप्तायसकविल्लिषु प्रलापान् कुर्वतो नारकान् जीवन्मत्स्यानिव कालाः १२ । छित्वा पृष्ठ्यादिप्रदेशान् सिंहपुच्छाकृतीनि काकिणी कपर्दिका तत्प्रमाणानि मांसखंडानि १४ ।

अयमर्थः सकलोऽपि सूत्रकृतांगे प्रोक्तोऽस्ति तथा यतिभिः समयादीनि गाथाध्ययनपर्यंतानि सूत्रकृदंगषोडशाध्ययनानि विधिनाऽध्येयान्याराधनीयानि च शुद्धप्ररूपणया तदुक्तानुष्ठानानुष्ठितेश्च ।

तथा सप्तदशधा संयमः सम्यग् मुमुक्षुभिः पालनीयः । स च पंचाश्रवविरमणपंचेंद्रियनिग्रहकषायजयदंडत्रयविरतिरूपः । अथवा पुढविदगअगणिमारुअवणस्सइबितिचउपणिंदिअजीवे । पेहोपेहपमज्जण परिठवणमणोवईकाए ॥१॥ इति गाथोक्तभेदैः सप्तदशविधः । एतद्व्याख्या, तथाहि-पृथिव्य १ ऽप् २ तेजो ३ वात ४ वनस्पति ५ द्वि ६ त्रि ७ चतु

८ पंचेंद्रियाणां ९ मनोवचनवपुषां करणकारणानुमतिभेदतः संघट्टपरितापोपद्रवाणां परिहरणतो नवधा जीवसंयमः । एवमजीवसंयमः, स च पुस्तकाऽप्रतिलेखितदुष्प्रतिलेखितदूष्यपञ्चकतृणपञ्चकचर्मपञ्चकहिरण्यादीनामसंग्रहरूपः । तत्र पुस्तकपंचकं गंडी १ कच्छपी २ मुष्टि ३ संपुटफलक ४ छिवाडिभेदतः । एतद् व्याख्या—बाहल्लपुहुत्तेहिं, गंडी पोत्थो उ तुल्लगो दीहो । कच्छवि अंते तणुगो, मज्झे पिहुलो मुणेयव्वो ॥१॥ चउरंगुलदीहो वा, वट्टागिति मुट्ठिपोत्थगो अहवा । चउरंगुलदीहोच्चिय, चउरंसो वा वि विन्नेओ ॥२॥ संपुडगो दुगमाईफलगा वोच्छं छिवाडिमित्ताहे । तणुपत्तूसियरूवो, होइ छिवाडी बुहा बेंति ॥३॥ दीहो वा हस्सो वा, जो पिहुलो होइ अप्पबाहल्लो । तं मुणियसमयसारा, छिवाडिपोत्थं भणंतीह ॥४॥ अप्रतिलेखितदूष्यपंचकं तु तूलिका १ उपधानक २ गंडोपधानक ३ आलिंगिनि ४ मसूरक ५ रूप चर्ममयमप्यस्य परिहारादिरूपम् । दुष्प्रतिलेखितदूष्यपंचकं तु पल्हवि १ कोयवि २ प्रावार ३ नवत ४ दाढिगालिरूपम् ५ । तत्र पल्हविः प्रस्तारिका हस्त्यास्तरणं जोगीरूपम् १ । कोयविआच्छादने कम्बले रूतपूरितपटोऽथवाऽधीवि प्रतीतः २ । प्रावारो बृहत्कंबलो नेपालकादिः ३ । नवतं जवनी ४ । भिलिंगवृत्तवस्त्रयुता पर्यस्तादिमात्रिः ५ । तृणपंचकं तु शालि १ व्रीहि २ कोद्रव ३ रालकअरण्यतृणरूपम् ५ । चर्मपंचकं अजा१एडक२गो३ महिषी ४ मृगा ५ चिनरूपम् । पक्षिमा १ सन्नम २ पर्व ३ कोय ४ कपि ५ रूपं वा । पाठान्तरे शरीरेण सहोत्पन्नत्वाच्च कोषस्य नसमेतिप्पाया- पादरूपः । आह किमेतावत एव संयमः उत प्राप्तेऽपि उच्यते उत्सर्गपदेऽवारण एव, अपवादपदे तु तद्ग्रहणेऽपि । यदुक्तं दुष्पडिलेहियदूस, अद्धाणाई विवित्तमिण्हंति । घिप्पइ पुत्थयपणगं, कालियनिज्जुत्तिकोसट्ठा ॥१॥ विविक्तं

नोत्सर्गतो ग्रहणम्? उच्यते सत्त्वो-
यथा सागारिकातपशांतिविविक्तासुपिता वा । ननु ज्ञानसाधनत्वात् कथ पुस्तकपंचकस्य नोत्सर्गतो ग्रहणम् ? उच्यते सत्त्वो-
पघातनिमित्तत्वात् । यदुक्तं जइ तेसिं जीवाणं, तत्थ गयाणं तु सोणिअं । हुज्जा पीलिज्जते घणिअं, गलिज्जते
अक्खारफुसिओ ॥ १ ॥ तत्र पुस्तके गतानाम् १० । एकादशस्तु प्रेक्षासंयमः । स च स्थाननिष्पादनशयनादिकृत्येषु
प्रत्युपेक्षणप्रमार्जनविधानेन समाराधितः स्यात् ११ । द्वादशस्तूपेक्षा संयमः । स च व्यापारेऽव्यापारे च उपेक्षाशब्दस्य जने
तथा प्रवृत्तिदर्शनात् । तथा च वक्तारो भवंति उपेक्षकोऽयमस्य ग्रामस्य चिंतक इति तात्पर्यम् । तथा किमिद वस्तु विनश्य-
दुपेक्षसे ? न चिंतयतीत्यर्थः । तत्र व्यापारोपेक्षा यत् सांभोगिकसाधूनां संयमे सीदतां प्रेरणम्, इतरेषां च तेषां प्रवचनकार्ये-
सीदतां प्रेरणम् । अव्यापारोपेक्षा तु यत्सावद्यकर्मणि सीदतां गृहिणामप्रेरणम् १२ । प्रमार्जनासंयमस्तु यत् सागारिके
सत्यप्रमार्जनं यतनया प्रमार्जन तदभावे तु प्रमार्जनमेव १३ । परिष्ठापनासंयमस्तु यदशुद्धस्याधिकस्य क्षेत्रकालातिक्रांतस्य
वा भक्तपानादेर्विधिना परिष्ठापनम् १४ । मनःसंयमस्त्वकुशलस्य तस्य नियंत्रणं कुशलस्य च तस्योदीरणम् १५ । एवं
वचनसंयमोऽपि १६ । कायसंयमस्तु संलीनतया 'जयं चरे जयं चिट्ठे' इत्यादिगाथोक्तयतनया वा कायव्यापारतः परिज्ञेयः
१७ । एवं द्वेधापि सप्तदशभेदसंयमसमाराधनविधौ यतनीयं निर्वृतिपद प्राप्तुकामैः ।

तथा निर्ग्रंथैरष्टादशविधब्रह्मणि निरतिचारैर्भवितव्यम् । तस्य च दिव्यौदारिककामानां मनोवचनतनुभिः करणकारणा-
नुमतीनां परिहरणतोऽष्टादशभेदत्वं विज्ञेयम् । यदुक्त ' दिव्योदारिककामानां, कृतानुमतिकारितैः । मनोवाक्काय-
तस्त्यागो, ब्रह्माष्टादशधा मतम् ॥ १ ॥ '

साधुभिस्तत्र् परिहारप्रेरणाकरणे च तैः सम कलहकारित्वम् २० । एतानि विंशतिमितान्यप्यसमाधिस्थानानि मुक्तिनिबंधन-चित्तैकाग्रतारूपसमाधिमिच्छुभिः सर्वथैव विवर्जनीयानि ।

तथा साधुभिः श्रामण्यस्य शबलताहेतुभूततया करकर्मादयः शबलाः क्रियाविशेषा एकविंशतिर्वर्जनीया एव । तत्र करकर्मणः स्वयकरणेन परैर्वा कारणेन शबलचारित्री स्यादिति प्रथमः शबलः १ । अतिक्रमव्यतिक्रमातिचारैर्मैथुन मालंबनं सेवमानो द्वितीयः शबलः २ । दिवागृहीतदिवाभुक्तादिचतुर्भंग्या अतिक्रमादिभिः मालंबनं निशाभोजन विधानस्तृतीयः शबलः ३ । एवमाधाकर्म ४ राजपिंड ५ क्रीत ६ प्रामित्या ७ ऽभ्याहृता ८ छेद्यानि ९ भुंजानः । अभीक्ष्णं प्रत्याख्याय भुंजानः १० । षण्मासान्तर्गणाद्गणान्तरसंक्रमं कुर्वाणः ११ । मासान्तस्त्रीनुदकलेपान् विदधानः १२ । अथवा त्रीणि मातृस्थानानि प्रच्छादनादीनि कुर्वन् उपेत्य पृथिव्यादिप्राणातिपातं कुर्वन् १३ । मृषावादं च वदन् १४ । अदत्तं च गृह्णन् १५ । केवलायां पृथिव्यां शयननिषीदनादि विदधानः १६ । सस्निग्धसरजस्कसचित्तपृथिवीशिलाघुणक्षतपीठफलकादिषु स्थान-निषीदनादि कुर्वाणः १७ । सांडसभूतसप्राणसबीजादिप्रदेशे स्थानादीनि विदधानः १८ । आकुट्या मूलफलपुष्पादि भुंजानः १९ । वर्षान्तर्दशदकलेपान् दशमातृस्थानानि वा कुर्वाणः २० । गलत्सचित्तोदकक्लिन्नकरदर्व्यादिदीयमानाशनादि भुंजानः १२ । एवमेकविंशतिश्चरित्रशबलताविधायिनः क्रियाविशेषाः परिहार्या एव मुमुक्षुभिर्मोक्षकांक्षिभिः ।

तथा निर्ग्रंथैः क्षुत् १ पिपासा २ शीतो ३ष्ण ४ दंशमशका ५ऽचेला ६ऽरति ७ वनिता ८ नवकल्पविहाररूपचर्या ९ स्त्रीपशुपंडगादिरहितस्वाध्यायभूमिरूपनिषिद्यो १० च्चावचशय्या ११ क्रोश १२ वध १३ याच्ञा १४ ऽलाभ १५ रोग १६

भावना १ । तत्रैवोपाश्रये तृण–काष्ठ–पीठ–फलकाद्यनुज्ञाप्यैव व्यापार्यमिति द्वितीया २ । सर्वदा स्पष्ट मर्यादया पुनः पुनरवग्रहप्रार्थनं विधेयमिति तृतीया ३ । गुर्वनुज्ञापूर्वकमेवाशनाद्यभ्यवहार्यमिति तुरीया ४ । साधर्मिकावग्रहयाच्ञापूर्वमेव स्थानादि-विधेयमिति पचमी ५ । तुरीययमस्य तु स्त्रीपशुपण्डकविरहिता विविक्तैव वसतिः सेवनीयेत्याद्या १ । वनिताभिः सम वनिताकथा वा चतुर्विधां न कुर्यान्नाकर्णयेन्न चिंतयेदिति द्वितीया २ । तृतीया तु युवतीना हसितभणितचेष्टितसविलासेक्षितगतिक्रीडितनृत्यगीतवादित्रवादनवपुर्वर्णसस्थानकरचरणनयनरदनस्तनजघनवसनमंडनादीनि , तपःसंयमव्रतलोपघातहेतुभूतानि न चक्षुपा निरीक्षणीयानि न च चेतसा चिंतनीयानि नापि वचसा वाच्यानि । उक्तं च श्रीउत्तराध्ययने अदंसणं चेव अपत्थणं च, अचिंतणं चेव अकित्तणं च। इत्थीजणस्सापरियमाणजुग्गं, हिअं सया बंभचरे रयाणं ॥ १॥ तथा स्ववपुसंस्कारश्च परिहार्यः ३ । तुरीया तु पूर्वभुक्तभोगास्मृतिः ४ । पंचमी तु प्रणीताऽतिमात्रभोजनपरित्यजनरूपा ५ । पचममहाव्रतस्य तु शब्द १ रूप २ रस ३ गंध ४ स्पर्शेश्च ५ मनोज्ञेषु रागविवर्जनममनोज्ञेषु च द्वेषविवर्जनमिति भवंति पंचभावनाः । एवं पंच पंचगुणिताः पचमहाव्रतसत्काः पंचविंशतिर्भावना भावनीयानि श्रेयसार्थिना ।

तथा निर्ग्रंथैर्दशाकल्पव्यवहाराणां षड्विंशतिरुद्देशनकालाः श्रुतोपचाररूपा न विराधनीया वितथकरणादिना ।

तथा साधुभिः सप्तविंशतिगुणाः सम्यग्धारणीयास्ते चेमे–व्रतषट्कपालनीयम् ६ । कायषट्कं च सम्यक् संरक्षणीयम् १२ । पंचकरणनियंत्रण च विधेयम् १७ । निर्लोभता १८ क्षांती १९ चाश्रयणीये । भावविशुद्धिश्च विधेया २० । प्रत्युपेक्षणादिबाह्यक्रिया सम्यक्कार्या २१ । संयमयोगयुक्तता च २२ । अकुशलमनो २३ वचन २४ तनूनां २५ निरोधश्च विधेयः

तत्र मोहनीयं तुरीयकर्मप्रकृतिस्तस्याः स्थानानि निमित्तानि ।
तथा मुनिभिस्त्रिंशत्मोहनीयस्थानानि त्याज्यान्येव । स चैवं तेषां महान्यथा-
तानि चेमानि जलमध्येऽवगाह्य तीव्ररौद्राध्यवसायेन पद्भ्यामाक्रम्य त्रसजंतून् वनितादीन् व्यापादयति, उक्तं च श्रीआवश्यकचूर्णौ
मुत्पादयन् भवशतसहस्रादिवेदनीय महामोहनीयं कर्म समुपार्जयति। एवं सर्वत्र क्रिया योज्या । से तस्स महामोह-
पाणीयमज्झे वगाहिता तिव्वेणमणसा पाएण अक्कमित्ता तसे पाणे इत्थिमादीवि हिंसइ कंठमध्य
मुप्पाएमाणे भवसयदुहवेअणिज्जं अप्पणो महामोहं पकुव्वइ ॥ १ ॥ द्वितीय तु मुखश्रोत्रादीन्याच्छाद्य तुरीयं तु
एवाव्यक्तमारटतनरादिकं विनाशयति २। तृतीयं त्वार्द्रचर्मादिना शिरो वेष्टयित्वा तीव्राऽशुभपरिणामेन मारयति ३। शरणभूतं
मुद्गरादिना शीर्षे आहत्य कुमारेण मारयति ४ । बहुजनस्य नेतारं हंति ५। संसारसागरे मज्जतां जंतूनां द्वीपमिव
ज्ञानदातारं नरं विशंसति ६ । सर्वसामान्ये ग्लाने समर्थोऽपि महाघोरपरिणामतया तत्कृत्यमौषधपथ्यादिसंपादनं न विधत्ते ७।
मुक्तिमार्गभूतश्रीमदार्हतधर्मे उद्यमं कुर्वाणं श्रमणं बलात्ततश्च्यावयति ८। जिनानामवर्णं वदति ९। जात्यादिभिराचार्योपाध्या-
यान्निन्दति १० । आचार्योपाध्यायानां ज्ञानादिगुणगरिष्ठानां विश्रामणान्नपानसंपादनादि वैयावृत्त्यं न कुरुते ११ । ज्योतिः-
शास्त्राद्यधिकरणं जनपुरतः प्रकाशयति १२। तीर्थभेदं ज्ञानादिमार्गविराधनरूपं विधत्ते १३। जानन्नप्यधर्मनिबंधनभूतान्
वशीकरणादियोगान् पुनः पुनः प्रयुंक्ते १४ । कामान् वमित्वा श्रामण्यमादाय प्रार्थयते तानैहिकानामुत्रिकांश्च १५ । अबहु-
श्रुतोऽप्यन्येन पृष्टः सन् बहुश्रुतोऽहमिति वक्ति तूष्णीं वा तिष्ठति साधव एव बहुश्रुता इति वा वदति, एवमतपस्व्यपि तपस्वी
अहमित्यादि वदति १६ । बहुजनं गृहादौ प्रक्षिप्यातधूमेन हुतवहेन दहति १७। अकृत्यं प्राणातिपाताद्यात्मना विधाय

अंतेवासिना श्रीगुरोः पुरतो निर्मायतया निखिलमतिचारजालं सम्यगालोचनीयं एवमालोचनयोगसंग्रहः कार्यः। एवमग्रेऽपि भावना विधेया १। आचार्येण चालोचितातिचारजाललेशतोऽपि न कस्याप्यग्रे प्रकाशनीयम् २। द्रव्यादिचतुर्भेदापत्सु दृढधर्मत्वमेव विधेयम् ३। अनिश्रितोपधाने च यत्नः कार्यः ४। ग्रहणासेवनारूपा द्विविधशिक्षा शिक्षणीया, तत्र ग्रहणशिक्षा सूत्रार्थग्रहणरूपा, आसेवनाशिक्षा तु समाचारीशिक्षणरूपा ५। निष्प्रतिकर्मतनुता विधेया, न पुनर्भोगदत्तवद् विपर्ययः कार्यः ६। तपस्यज्ञातता विधेया ७। अलोभश्च कार्यः ८। तितिक्षा परीषहादिजयरूपा कार्या ९। आर्जवं च कर्त्तव्यम् १०। आचारोसंयमवता च भवितव्यम् ११। सम्यग्दर्शनशुद्धिश्च विधेया १२। चेतःस्वस्थतारूपः समाधिश्च कर्त्तव्यः १३। आचारोपमस्स्यान्न मायां विदध्यात् १४। विनयोपमश्च भवेन्न मानं कुर्यात् १५। धृतिप्रधाना मतिर्धृतिमतिः सत्त्वकर्त्तव्या १६। संवेगश्च कार्यः, अन्यथा कृता येन प्रच्छाद्यते ईदग्विधमायारूपः प्रणिधिः परिहरणीयः १८। सुविधिश्च विधेयः १९। संवरश्च कर्त्तव्यो न त्वसंवरः २०। आत्मदूषणपरिहरणं च करणीयम् २१। सर्वकामविरक्तता च चित्ते भावनीया २२। मूलगुणोत्तरगुणविषये प्रत्याख्याने च विधेये २३। २४। व्युत्सर्गश्च द्रव्यभावभेदभिन्नः कर्त्तव्यः २५। अप्रमत्तता च कर्त्तव्या २६। क्षणे क्षणे च साधुसामाचार्यनुष्ठेया २७। धर्मशुक्लध्यानसंवरयोगश्च विधेयः २८। मरणांतकेऽपि वेदनोदये न क्षुभितव्यम् २९। संगाश्च सर्वे ज्ञपरिज्ञया ज्ञेयाः, प्रत्याख्यानपरिज्ञया च प्रत्याख्यातव्याः ३०। प्रायश्चित्तं च सम्यग्विधेयं ३१। आराधना च मरणांते कर्त्तव्या ३२। एवं साधुभिर्द्वात्रिंशद्योगसंग्रहाः कार्याः।

अत्र प्रथमयोगसंग्रहे निदर्शनम्। तथाहि–विशालानगर्यां जितशत्रुर्नृपतिस्तस्याट्टणनामा महामल्लो बलवान्। अथ च

धनश्री-पद्मश्रीनाम्न्ये द्वे वल्लभे। तयोश्चान्यदा कलहे प्रवृत्ते धनश्रीः प्राह—किमेव भवत्यभिमानमत्तमतंगजमारूढा सत्यवत्या
इव तत्र किं दंतमयावासो निष्पद्यमानोऽस्ति। पद्मश्रिया च सैव प्रतिज्ञा कृता तां च दंतावासविधायनविषयां पद्मश्रीविहितां
प्रतिज्ञां विज्ञाय धनमित्रो दुःखी दृढमित्रेण मित्रेण पृष्टो दुःखनिदानम्। तेन च प्रियाप्रतिज्ञाव्यतिकरे यथास्थिते प्रोक्ते
दृढमित्रो भिल्लप्रायोग्य मणिकालक्तकादि समादाय गतवानरण्यम्। तत्र च वनचरयोग्यं वस्तु वनचरेभ्यो वितीर्य दंतान्
समादाय तृणपूलकांतः क्षिप्त्वा शकटैरानयामास दृढमित्रः। अथ च नगरप्रवेशे गोसमाकृष्टतृणपूलकपाते दंतान्निरीक्ष्य
रक्षकनरैर्दृढमित्रो धृतः। धृत्वा च नृपस्याग्रे समानीतः। नृपेण च वध्य इत्यादिष्टः। तावता धनमित्रः समागत्य नृपपदो-
र्निपत्य प्रोक्तवान्, 'स्वामिन्! मुंच दृढमित्रं, मयैते आनायितास्तेन ममैव दंडं विधेहि' इति तेनोक्ते नृपतिना दृढमित्रः
प्रोक्तः 'किमेतत् सत्यं न वे?'ति नृपपृष्टो दृढमित्रः प्राह 'नाहमेनं जानामि' विस्मयापन्नेन च राज्ञा द्वयोरभये दत्ते
सत्यमुक्तवान् यथा जानताऽपि दृढमित्रेण मित्रस्वरूपं नोक्तम्, एवं गुरुणोऽपि निरपलापेन भवितव्यम् २।

अथापत्सु दृढधर्मताया निदर्शनम्, तत्र प्रथमं द्रव्यापदि, तथाहि उज्जयिन्यां धनवसुनामा सार्थपतिः ससार्थश्चचाल
चम्पापुरीं प्रति, तत्सार्थे धर्मघोषमुनिरपि। अथ च पथि सार्थे तस्करैर्विलुप्यमाने नश्यज्जनेन समं मुनिरपि महारण्ये प्रविष्टः।
तत्र च जने कंदमूलाद्यदनपरे जनदीयमानमपि तदनादानो मुनिश्चतुर्विधमप्याहारं यावज्जीवं प्रत्याख्याय केवलश्रियमासाद्य
ययावपुनर्भवमनंतशर्मविभवम्। अथ द्रव्यभावापदोर्निदर्शन, तथाहि—मथुरायां यमुनाभिधानो नृपः, स च यमुनावक्रोद्याने
आतापनामाददानं दंडनामानमनगारं फलेनाहतवान्। एतन्निरीक्ष्य तद्भृत्यैः स मुनिः प्रस्तरपुंजीकृतः पंचमाववोधमवाप्य

वृषभमन्यारण्यकजीवगणाजेयमालोक्य तत्र ऋषभपुरं निवेशयामास । कालेन तस्मिन्नपि क्षीणवास्तुके कुशस्तंभवने विशिष्टतरं वीक्ष्य कुशाग्रपुरं निवेशितवान् । तस्मिंश्च पुनः पुनः कृशानुना दह्यमाने सति प्रसेनजिन्नृपेण राजगृहनगरं निवासितम् । प्रसेनजितस्तु तनयः श्रेणिकनरपतिः । तस्मिंश्च परासुतां प्राप्ते तत्सूनुना कोणिकेन शोकनिर्गमार्थं चंपा राजधानी कृता । तस्मिन्नपि कथाशेषे उदायिनृपेण तत्तनुजन्मना पाटलीतरुस्थाने पाटलीपुरं वासितम् । तत्रोदायिनृपे यशःशेषे संजाते सति नंदराज्यमभूत् । नवमे च नंदे राज्यं पालयति कल्पकसचिववंशसंभूतः शकटालनामा मंत्री समजनि, तस्य च द्वौ तनयौ स्थूलभद्रः सिरीयकश्च । यक्षाद्याश्च सप्तपुत्र्यः । वररुचिविप्रकपटेन शकटाले मृते नंदे दीयमानाममात्यमुद्रां श्रीस्थूलभद्रो नांगीचकार । सा तु सिरीयकेन स्वीकृता । स्थूलभद्रस्तु श्रीसंभूतगुरुपार्श्वे प्रव्रजितः । प्रव्रज्य च तेन तथा शिक्षाद्वयं शिक्षितं यथा द्वादशवत्सरपरिचितायापि कोशायां न मनागपि क्षोभितः । स साधुसिंहः । एवमन्यैरपि मुनिभिः शिक्षाद्वयं शिक्षणीयम् ५ ।

अथ निष्प्रतिकर्मतनुतायां विपर्यये नागदत्तदृष्टांतस्तथाहि प्रतिष्ठानपुरे नागवसुः श्रेष्ठी । नागश्रीश्च तत्प्रणयिनी । तयोस्तनुजन्मा नागदत्तः । स च भवविरक्तः प्रव्रज्यां समादाय जिनकल्पप्रतिमापन्नानां पूजातिशयं निरीक्ष्य गुरुभिर्वार्यमाणोऽपि जिनकल्पं प्रपद्य व्यंतरायतने प्रतिमया तस्थौ । तदा च कयाचित् सम्यग्दृष्टिदेवतया मा विनश्यत्वयमिति विचिंत्य वनितारूपेण व्यंतरोपायनव्याजेन मोदकाः समानीय वितीर्णाः । स च तानास्वाद्य प्रतिमया तस्थौ । निशि अतिसारोऽभूद्देवतया गुरूणां निवेदितं यत्तैक्षो व्यतरायतने वर्त्तते । गुरुभिः साधवः प्रेषिताः स समानीत उपाश्रये ।

रेयतोऽस्या चित्तधर्मं स्वे तथापि यावत् समयानि । चिन्ता च दशा यदेवं न पुनर्विषयमिति यथा नामरूपेन तनुमति धर्मं कारित यथाऽन्यैर्निवरैर्न कार्यम् ९ ।

अथ तत्समाख्यायाहरणं यथाहि—कौशाम्ब्यामजितसेननामा नृपस्तस्य धारिणीदेवी । तत्र च धर्मवसुगुरोर्विनेयौ धर्मघोषधर्मयशसौ विजयमना च महत्तरा विनयवती च तस्याः शिष्यिणी । तया चानशनं प्रथमं संघेन च महताम् स्तवस्तमाके । सा च गीतार्थैर्निर्यामिता दिवं गता । तौ साधवि च विनेयौ भक्तप्रत्याख्यानीयपरिकर्म कृत्वा स्म । अथ चोज्जयिन्यां चंडप्रद्योतस्य सुतौ पालकगोपालकसंज्ञौ । तयोर्गोपालकस्तु प्रव्रज्यां जग्राह । पालकस्य तु द्वौ सुतौ अवन्तिवर्द्धनो राष्ट्रवर्द्धनश्च । तयोश्च राज्यं यौवराज्यं च वितीर्य पालकोऽपि निष्क्रान्तः । राष्ट्रवर्द्धनस्य तु भार्या धारिणी । तस्याश्च पुत्रोऽवन्तिसेनः । अन्यदाऽवन्तिवर्द्धनो धारिणीं निरीक्ष्य सम्यग्दर्शनपरीक्षितो दूतीमुखेन स्वमनोभावं ज्ञापितवान् । तया च प्रोक्तं—किं भ्रातुरपि न त्रपा ? अथ तेन विश्वासेन निहतो राष्ट्रवर्द्धनः केनाप्युपायेन स्वयमस्तु तद्भिता धारिणी निजशीलरक्षणार्थं सार्थेन समं गता कौशाम्बीम् । तत्र च महत्तराविनयवत्यां धर्ममनासाद्य दीक्षां गृहीतवती गर्भवती । समये च प्रसूता सुतं, स च नामधारयितुं समं मोचितो नृपालये । अजितसेनेन च स्वपुरीपरिसरे स प्रतीतो मणिप्रभ इति च तस्य नाम प्रदत्तम् । स्वके च नृपे परासुतां प्राप्ते तस्य राज्यमभूत् । अवन्तिवर्द्धनस्तु स्वर्गभुवमपि पश्चात्तापाद्विज्ञाय भ्रातृपत्नी शीलवतीभिः समानापमानतो धारिणीतनयस्यावन्तिसेनस्य राज्यं वितीर्य प्रव्राजत् । अवन्तिसेनस्तु कौशाम्बीपतिमणिप्रभसमीपे दंडं याचते । तदनाने तु सर्वबलेनावन्तिसेनः कौशाम्बीं प्रति चलितः । अस्मिन् समये परिकर्मसमाप्तौ तयोर्धर्मनिपुणयोर्मध्यात् यथा जिनवचनात्

सत्कारोऽभूत्तथा ममाप्यस्त्विति विचिंत्य धर्मघोषेन नगरमध्ये प्रपन्नमनशनं धर्मयशसा त्वेकांतसुकृतार्थिना जनकृतसत्कार-
मनिच्छता कौशांब्या उज्जयिन्यश्चांतराले वत्सकासरित्तीरे गिरिकंदरे प्रपेदे चतुर्विधाहारपरिहारप्रत्याख्यानम् । अवंतिसेनेन
च कौशांब्यां सर्वतो रुद्धयो भयव्याकुलचित्तेन श्रीसंघजनेन न कोऽपि सत्कारश्चक्रे धर्मघोषस्य। स च स्वमनोऽभिमतं श्रीसंघ
कृतं ऋद्धिसत्कारमलभमानः कालधर्ममुपेयिवान् । धारिण्या तु साध्व्या सम्यक्स्वरूपं निवेद्य तौ बंधू युद्धान्निवारितौ द्वावपि
मिलितौ । कियंतं च समय तत्र स्थित्वा उज्जयिनीं प्रति चलितौ । धारिण्यपि तयोः सवित्री समहत्तरा तत्सार्थे संप्राप्ता ।
मार्गे च गिरिकंदरे तं भक्तप्रत्याख्यानिन विज्ञाय तत्र स्थित्वा दिने दिने तत्पूजां चक्रतुः । स समाधिना दिवं ययौ ।
यथाऽनेन धर्मयशसा सत्कारमनिच्छता तपस्यज्ञातता कृता तथान्यैरपि सा विधेया ७ ।

अथ लोभत्यागे निदर्शन, तथाहि—साकेतनगरे पुंडरीको राजा। कंडरीकस्तु युवराजा। तस्य च यशोभद्रा देवी। तां च
निरीक्ष्य पुंडरीकनृपः प्रार्थयामास। तयापि बंधोर्न लज्जसे इत्युक्ते कंडरीको हतः। सा च शीलत्राणकृते सार्थेन समं श्रावस्त्यां
गता। तत्र च श्रीअजितसेनसूरयः। कीर्त्तिमती च महत्तरा। तस्याश्चांतिके सा गर्भमनाख्याय प्रव्रजितवती। काले च सा
सुतं सुषुवे। तस्य च क्षुल्लककुमार इति नामस्थापन कृतम्। शय्यातरीभिः स वर्द्धितोऽष्टवार्षिको दीक्षितः। यौवने च स
उन्निष्क्रमितुकामो मातृमहत्तराचार्योपाध्यायवचनैरष्टचत्वारिंशत्संवत्सरांस्तस्थौ। पश्चाद् विसृष्टो रत्नकंबलनाममुद्रादि समा
दाय गतः पुंडरीकांतिके साम्राज्यसुखार्थी। तदा च तत्र निशि नृत्यं विधाय विभातप्रायायां यामिन्यां किंचिन्निद्रापरां
नर्त्तकीं निरीक्ष्य तामुद्दिश्य वृद्धया नाट्याधिकारिण्या गाथा पठिता, सा चेयं ' सुट्ठु गाइअं सुट्ठु वाइअं, सुट्ठु नच्चिअं

जाते सति सचिवेन सुरेंद्रदत्तः समानीतः। कथितं च यदयं युष्मत्तनयः साधयिष्यति राधावेधम्। नृपेणोक्तं कथमयं मत्सूनु-स्तदा मन्त्रिणा तद्गर्भदिनं भोगसमये च यदुक्तं तत्सर्वं कथितम्। तदनु जातप्रत्ययेन नृपेणोक्तः सः, 'पुत्र! साधय राधावेधम्।' तदनु स नृपमुपाध्यायं च प्रणम्य द्वाविंशतिकुमारेषु चतुर्षु दासेषु च प्रत्यूहं विदधत्सु अन्यस्मिंश्च कृपाण-पाणिपुरुषद्वैते भीतिं कुर्वति वसु(८)मितचक्राणां छिद्राण्यवलोक्य अन्यत्र कुत्रचिन्मनोनिवेशमकुर्वता सुरेंद्रदत्तेन राधावामन-यनवेधो विदधे। एषा द्रव्यतितिक्षा। अथ भावतितिक्षायामुपनयः। यथा सुरेंद्रदत्तस्तथा यतिः, यथा दासास्तथा चत्वारः कषायाः। यथा कुमारास्तथा द्वाविंशतिः परीषहाः। यथा पुरुषौ द्वौ तथा रागद्वेषौ। यथा राधावेधस्तथा रत्नत्रयाराधना। यथा निर्वृतिकन्यावरणं तथा सिद्धिवधूपाणिग्रहणम् ९।

अथार्जवे उदाहरणं, तथाहि—चंपायां कोशिकार्य उपाध्यायस्तस्य द्वौ पाठकौ, अंगो रुद्रकश्च, अंगस्य तु ऋजुतया अंग-ऋषिरिति नामकृतं रुद्रकस्य तु ग्रथिच्छेदक इति। अन्यदा चोपाध्यायेन तौ दारुभारार्थं प्रेषितौ। तदांगकोऽरण्ये गत्वा दारुभार-मानीय संध्यासमये पश्चान्निवृत्तः। रुद्रकस्तु दिने यत्र तत्र स्थित्वा विकाले नगराद्बहिर्गतोऽङ्गऋषिं दारुभारमानीय नगराभि-मुखमागच्छन्तं निरीक्ष्य चिंतयामास यन्मामुपाध्यायस्ताडयिता, अस्मिंश्च समये ज्योतिर्यशा वत्सपालिका सूनोः पंथकस्य भक्तं वितीर्य दारुभारं शिरसि विधाय समायांती समभूत्। रुद्रकेण सा गर्त्तायां क्षिप्ता, मारयित्वा दारुभारं च तस्याः समादाय स समाययावन्यायनेन उपाध्यायस्य पुरतश्चोचिवान् 'यत्तव सुंदरपाठकेन ज्योतिर्यशा विनाशिता' तदाकर्ण्य समुत्पन्न-मन्युनोपाध्यायेन स निष्काशितो वने गतः शुभाध्यवसायेन जातजातस्मृतिः प्राप पंचमावबोधम्। तदा देवैरुक्तं यदेतस्य

कष्टेनाम्यास्थान दयम् । तत्रावसरे अनेन हीयमानो गुरुभिर्वदति स्म 'आत्मन् ! मा कोपं कुरु मनः सत्यमेव वद्धि' स एवं चिन्तयन्नात्मानं निन्दन् प्रत्येकबुद्धः समजनि । उपाध्यायाः सशिष्योऽपि संवेगमापन्ना प्रव्रजिताः । सर्वेऽपि केवलश्रियमवाप्य सिद्धिं गताः । यथैभिः सर्वैरार्थकाल्स्वार्थसाधनकृते तथान्यैरपि विधेयम् १० ।

अथ श्रुपिना संयमवता माध्यमिकेभ्यदयो योगसंवरस्तत्र प्रथमं देवसंयमनिदर्शनं, तथाहि—शौर्यपुरे सुरवरनामा पवस्तत्र धर्मवपः श्रेष्ठी । भार्या सुमद्रा । सुतदेवते सुरवरपयाय ताम्बां मदिरकव मानितम् । अथ च देवयोगात् सुता सम जनि । अत्रांतरे तत्र श्रीवीरस्वामी समवसृतस्तदेशनां च निशम्य श्रेष्ठिनाऽणुव्रतानि स्वीकृतानि । पश्चेम श्रेष्ठिसमीपे मदिप-तं मार्गितम् । स प्रत्यंगमपाय प्रददाम्, किंतु प्रोक्तवान् 'पन्थरिवस्थाने निमग्नः पतत्संहानि विधाय दास्ये' । अथ क्षपितेषु पतुसंदेषु विहितेषु श्रेष्ठिपुत्रो पवस्तपस्तपद्वज्जु निर्मांप मता स्वस्थाने । अथ तदंतसमरूपे पौषे प्र्योतस्थादि-शौर्यपुरे सहामित्रयो तृपतिर्धेता समभूवता पवपमाच्छापत्तः सोममित्रा च वसुमित्रा । तयोः सुतो पद्मरूपः । सोमपद्माय वणव्कुमा कस्युनोरथः । तौ पर्वकोपवासवारणके उंकुमा योमनं कृत्वः स्म । अन्यदा नारदमयोक्याशिमूले ध्याय माप्य शौ मतापुत्रक्ते । तदा च वैताढ्नमार् गन्धकिर्मणकसुरेस्वपत्पिमा साक्षीमम्पूतं विद्यापात्तुकंपयाप्रोक्यागा स्वं चिता पवाचिन्हेपम तेः स सूरीस्मा मक्तस्यादिविधाः पाठितः । एव स सिद्धविधो मयिसानुकम्प्यां क्रमकृरिकया च सर्वं संचरति विचरति । अन्यदा च स द्वारवती प्राप्तो वासुदेवेन पृष्टः 'किं दौत्यमिति ?' स एवं पृष्ट उत्तरं दातुमवक्तः महत्त्वाय पूर्वविदेहे गतस्तत्र युगबाहुवासुदेवेन श्रीसीमंधरतीर्थंकरः पृष्टः किं शौचमिति ? जिनपतिः माह 'सत्यं शौचम्' स एवं

निशम्य पुनः पश्चिमविदेहेऽगाचत्र च युगंधरस्वामी महाबाहुवासुदेवेन पृष्टस्तदेवोत्तरं प्राप्तः। एवं प्राप्तोत्तरः स नारदो द्वारिकायां गत्वा कृष्णाग्रतः प्रोक्तवान् सत्यं शौचमिति। पुनः पृष्टः स हरिणा 'किं सत्यमिति' तदसंविदानश्चेतसि तदर्थं विचारयन् जातजातस्मृतिः प्रत्येकबुद्धः समभूदध्ययनं च कृतवान्। एवं यथा शौचेन नारदऋषिणा योगसंग्रहः कृतस्तथान्यैरपि विधेयः ११।

अथ सम्यग्दर्शनशुद्धौ निदर्शनं, तथाहि-साकेतपुरे महाबलो नृपतिरन्यदा स्थानसमासीनो दूतं पृष्टवान् 'किं नास्ति मम यदन्यनृपतीनां राज्ये वर्तते' तेनोक्तं 'चित्रसभा नास्ति' इति तेनोक्ते नृपतिना नियोगिनस्तदर्थमादिष्टाः। तैस्तां विधाप्य विमलप्रभाकरनाम्नोश्चित्रकृतोश्चित्रयितुमर्पिता द्वीकृत्य जवनिका चांतरे बद्धा। तयोर्मध्यादेकेन षण्मास्यां तस्या अर्द्धं चित्रितम्। एकेन तु भूमिरेव निर्मला कृता। अत्रांतरे राजा चित्रसभानिरीक्षणाय समाययौ। तदा च जवनिकाऽपनयने कुड्ये तच्चित्र निखिलमपि प्रतिबिंबित निरीक्ष्य 'हे! कीदृग् विज्ञानं कृत'मस्तीति तुष्टचित्तेन नृपेण तस्य प्रसादः कृतः। सा भूमिश्च तथैव स्थापिता। अथोपनयो यथा विमलायां कृताया भूमौ चित्रमरचितमपि प्रतिबिंबितम्, एवं दर्शने सुविशुद्धे क्रियाऽपि प्रतिबिंबिता १२।

अथ समाधौ दृष्टांतस्तथाहि-सुदर्शनपुरे शिशुनागनामा गृहपतिस्तद्दयिता सुयशानाम्नी। तावुभौ श्रमणोपासकौ तत्सूनुः सुव्रतो गर्भवासेऽपि सवेगवान् यौवने पितरावापृच्छ्य प्रव्रज्यां जग्राह गीतार्थः सन्नेकाकिविहारप्रतिमां प्रपन्नः शक्रप्रशंसया सुमराभ्यां परीक्षितस्तत्रैकेन कुमारब्रह्मचारीति प्रशंसितोऽपरेण तु वंशच्छेदकृदिति निंदितस्तथापि सममनास्तदनु विषयप्रसक्त-

उत्पातेन पोते भिन्ने जने स्वस्वेष्टदैवतस्मृतिपरे ते धृतिमती संयमयोगमारूढे शुक्लध्यानैकताने सिद्धे केवलावबोधमवाप्य । सुस्थितलवणाधिपतिदेवेन च तन्निर्वाणमहिमा निर्मितस्तत्र स्थाने देवोद्योतेन च तत्प्रभासतीर्थं समजनि १६ ।

अथ संवेगदृष्टांतस्तथाहि, चंपाया मित्रप्रभो नृपतिस्तत्पट्टदेवी च धारिणी । धनमित्रश्च तत्र पुरे सार्थवाहस्तत्प्रिया च धनश्रीस्तयोः सुतः सुजातोऽस्मिन् कुले इति जनश्लाघया सुजाताभिधानो रूपनिधिः । सर्वेऽपि ते सुश्रावकाः, तत्रैव च पुरे धर्मघोषनामाऽमात्यस्तत्प्रिया प्रियंगुनाम्नी सा निरीक्ष्य सुजातं तद्वल्ललितानि विधत्ते । तन्निरीक्ष्य सचिवेन चिंतितं नूनं विनष्टमतःपुरमिति कूटलेखप्रयोगो विदध उपायेन मारणाय । स चैवं भूपतिविपक्षनृपप्रहितलेखहस्ता नरा नृपाग्रतः समानीता लेखश्च सुजातनामांकितस्तन्मध्ये लिखितमस्ति तवार्द्धराज्यं चेत् मित्रप्रभं मारयसे । लेखं वाचयित्वा कुपितेन नृपेण ते नरा वध्या आदिष्टाः सचिवेन ते छन्नं स्थापिताः । जनापवादं रक्षणार्थमुपायेन मारणाय नृपतिना सोऽरक्खुरीपुर्यां चंद्रध्वजसमीपे प्रेषितः । नृपेण तु तस्य लेखो दर्शितः सुजातेन निगदितं यज्जानासि तद् विधेहि । तेन प्रच्छन्नं संस्थाप्य चंद्रयशाभगिनी प्रदत्ता सा त्वग्दोषिणी सुजातेन प्रतिबोधिता श्रीमदार्हतधर्ममाख्याय । सा भक्तं प्रत्याख्याय सुरः समभूत् । अवधिसंवेदनेन च स्वरूपं विज्ञाय नृप पुरोपरि पर्वतविकुर्वणया भापयित्वा सुरः सुजातं स्वस्थाने मुमोच । सुजातस्तु भूपतिमापृच्छ्य पितृसयुतः श्रामण्यमादाय सिद्धिमगात् । मंत्री तु भूपतिना निर्विषयः कृतो भ्रमन् राजगृहे स्थविरसमीपे प्रव्रज्यामादाय गीतार्थीभूय, विहरन् वारत्तकपुरे गतः । इतोऽग्रेतनः संबधः प्रागुक्तोऽपि प्रस्तावागतत्वात् पुनरप्युच्यते । तत्र रत्नकपुरेऽभयसेनो नृपस्तत्सचिवो वारत्तकः, तद्गेहे विहरणार्थं गतः । स धर्मघोषमुनिराज्यादिसंयुतपायसमध्याद् बिंदुमेकमालोक्य

तदयुक्ति-प्रतियुक्ति-
मतमावितौ विजितौ राजसमक्षम् । तदनु तौ चेदेतेषां सिद्धांतः पठ्यते तदैते जैना जेतुं शक्यंते । तदनुतौ त पठंतौ निकृतिं विहाय भाव-
विज्ञतयेति विचिंत्य श्रीमदर्हदागमपठनार्थं प्रणिधिना प्रव्रजितौ तत्सूरिसमीपे ।
यतित्वं प्रपन्नौ यथैताभ्यां प्रणिधिरुपयुक्तस्तथान्यैः सुकृतार्थिभिस्त्याज्यः १८ ।

अथ सुविधौ दृष्टातस्तथाहि-द्वारवत्या कृष्णस्य द्वौ वैद्यौ धन्वंतरिवैतरणीनामानौ । आद्योऽभव्यो द्वितीयस्तु भव्यः । स च ग्लानसाधून् प्रियवाक्येण वक्ति यद् यस्य यस्य वक्तव्यम्, औषधमपि प्रासुक चेत्तस्य स्यात्तदा साधूनां स तद्द्वे । द्वितीयस्तु यत्सावद्यं तदेव वक्ति यतीनां, न कल्पते अस्माकमेतदिति तैरुक्ते स प्रतिवक्ति न मया मुनीनां कृते वैद्यक- मधीतम् । एवं तौ द्वावपि महारंभमहापरिग्रहग्रस्तौ द्वारवत्यां चिकित्सां कुरुतः स्म । अन्यदा वासुदेवेन श्रीनेमिजिनः पृष्टो भगवा'न्नेतौ बहुजीवघात विधाय क्व गमिष्यतो' भगवतोक्त ' धन्वतरिर्वैद्यः सप्तमनिरयेऽप्रतिष्ठाने निरयावासे नैरयिको भविष्यति, वैतरणीवैद्यो विंध्यगंगापगयोरतराऽटव्यां यूथपतिर्वानरो भविष्यति ।' अथ चायुःपूर्णतायां तौ जिनोक्तस्थानयोः समुत्पन्नौ, अथ चान्यदा साधवः सार्थेन समं तस्यामटव्यां गच्छंति स्म । एवं तेषां गच्छतामेकस्य मुनेः पादे कंटको भग्नः । स च न निस्सरति । तदा तैः साधुभिरुक्तं 'वयमत्र तिष्ठामस्त्वत्पार्श्वे ।' तदा तेनोक्तं 'मा सर्वेषां मृतिर्भवेत्, यूयं यात अहमनशनं विधास्यामि' इति तेनोक्ते साधवः सार्थेन समं गताः । स चानशनकृते जगाम स्थंडिलेऽनवद्ये । अथ च यूथेन समं वानरपतिस्तत्र समाजगाम । तदा चाग्रेतनैर्वानरैस्तं यतिं निरीक्ष्य किलिकिलायितम् । तं च किलिकिलायितं निशम्य यूथपती रुष्टः पुरतो विलोकयन् यतिमीक्षांचक्रे । तं च निरीक्ष्येहापोहादिकं विदधानस्य तस्य जातिस्मृतिः समुत्पन्ना शुभ-

परिणामेन । तदा च स पूर्वभवं स्मरन्स्वस्य पतनभयात् सर्पोऽवरिम्योषध्या स्वस्थं कारयित्वा संरोहिण्यौषध्या सजीवमकरोत्। तदनन्तरमपि लिखित्वा तं पूर्वभवस्वरूपं मुनेर्निवेदयामास । तेनापि संबुद्धोऽभूत् । तदनु मुनिना तस्य धर्मे सर्पदेहेऽप्यथ निर्विष धर्मध्यानपरः सहस्रारे सहस्तमः स्वायुःक्षये । स पुनरपतिस्तत्र च समस्तमोऽप्यपिना स्वं वपुस्तं पवि च स्थिरीकृत्य तथाभूतो देवर्द्धिं दर्शयित्वा कथयामास 'युष्मत् प्रसादेनेयं मया ऋद्धिः प्राप्ता, यद् युष्मत् प्रियं तत् करोमि' सुरीर्य यत्र तेऽस्मै गतवस्तत्र त सुमोच । साधुभिरुक्तं 'कथं त्वमिहागत'स्तदा स सर्वं स्वस्वरूपं प्रोक्तवान् । स च सुरस्त कम्पुतो मर्त्यमन्यपि चारिममामास सुष्ठि ममिष्यति । यथा मनेन देवमवे मुनीनां प्रासुकोपकरणादिसुविधिः कृत स्वाम्यैर्निर्विघ्नः ११ ।

अथ संवरः धर्मो न स्वर्गपर इत्यत्र व्यतिरेकोदाहरणं दर्शयति, तथाहि—अन्यदा पवनंदयासिनी पचारेणी राजपुरे श्रीवर्द्धमानस्वामिनोऽग्रे नृत्यरूपां विधाय यावत्ती स्वस्थानम् । तदा च श्रेणिकनृपः श्रीवीरमपृच्छत् 'भगवन् ! केयं देवी ?' भगवानाह 'वाणारस्यां भद्रसेनः श्रेष्ठी नन्दा च तद्भार्या । तयोः सुता नंदश्री वैराग्यपरिता धोरकपैसे श्रीमत्पार्श्वपरमेश्वरे समवसृते तदुपमा प्रतिबुद्धा वैराग्यपरमता प्रवव्राज । सा च मोपार्थिकामचराते पूर्वंस्यातिचारेण विरत्य यथाद्वया यदि मया करणमारिप्रवाकर्मं विदधाना वारिता महत्तराभिः । स्वारम्भारम्भादिदोषदुष्पत्रधुपती पृथगुपाश्रयो स्थिता श्रीमघरेभ्यपि तदनालोच्य कालधर्मं गतानघनेन हिमवति पर्वते पद्महदे लक्ष्मीदेवता श्रमणपरिषदेवता । यथैवया संवरो च विहितस्वाम्यैर्न विवेचम् १० ।

अथात्मदोपोपसंहारे निदर्शन, तथाहि–द्वारिकापुर्यामर्हन्मित्रः श्रेष्ठी तत्प्राणप्रिया चाऽनुद्धरी। तयोश्च तनयो जिनदेवः।
सर्वाण्यपि श्रमणोपासकानि। अन्यदा जिनदेवस्य विषमतमामये समुत्पन्ने भिषग्वरैः 'रामिषं भक्षये'त्युक्ते स्वजननिर्बंधे
चिंतयामास, पातकमेवामयमूल मासास्वादने तु तदधिकतममेव भवेदिति सर्वदोपोपसंहरणकृते संयम एव श्रेयानिति विचिंत्य
तं प्रतिपन्नवाँस्तदाराधने च कर्मक्षयान्निरामयतां गतः शुद्धतमाऽध्यवसायतः केवललक्ष्मीं लब्ध्वा गतः सिद्धिम्। यथाने-
नात्मदोपोपसंहारः कृतस्तथाऽपरैर्विधेयः २१।

अथ सर्वकामविरक्ततायां दृष्टांतस्तथाहि, उज्जयिनीनगर्यां देविलासुतो नृपस्तत्पट्टदेवी चानुरक्तलोचना। अन्यदा सा
स्ववल्लभमूर्ध्नि पलितं निरीक्ष्य प्राह 'प्रिय! धर्मदूतः समायात' इति तयोक्ते वैराग्यात् पद्मरथसुतं राज्यधरं विधाय
प्रियान्वितस्तापसाश्रमे तापसः समजनि। संगतकश्च तद्भृत्योऽनुमतिका च दासी तापसीं दीक्षामादाय कालांतरे उत्-
प्रव्रजितौ देव्या च प्रव्रज्यावसरे गर्भो नाकथि। पश्चात् पुत्र्या प्रसूताया सूतिरोगतो विपन्ना देवी तनया तु कृतार्द्धसंकाशा-
भिधा जनकेन वर्द्धिता यौवनं गता। अन्यदा सा श्रातस्य स्वपितुस्तापसस्य विश्रामणा कुर्वाणासीत्। तदा च स तत्कर
स्पर्शतद्युयौवनमोहितो रागपूरपूरितांतरगतयालिंगनाय धावितोंतरोटजदारुण्यापतितश्चिंतयामास चित्ते ममेदमैहिकं फलमना-
चारस्य परलोके तु न ज्ञायते तत्कीदृशं कटुतमविपाकं भावीत्यादि चिंतयन् समुत्पन्नजातिस्मरणः प्रत्येकबुद्धः सर्वकाम-
विरक्ताख्यमध्ययन विधाय तनयां साध्वीना वितीर्य सम्यक्श्रामण्यमनुपाल्य च ययौ निर्वृतिम्, तनयापि च। यथाऽनेन
कामान् कटुतमविपाकानवधार्य सर्वकामविरक्तिः कृता तथाऽपरैरपि शिवशर्मार्थिभिः सा विधेया २२।

अथ मूलगुणप्रत्याख्यानोदाहरणं, तथाहि—साकेतपत्तने शत्रुंजयनामा क्ष्मापतिस्तत्र च जिनदेवनामा श्रमणोपासकः। स च दिग्यात्रार्थं कोटीवर्षपुरे गतस्तत्र चानार्यचिलातनृपस्य रत्नादिप्राभृतं चकार नृपेण प्रोक्तः स 'क्वैतानि प्राप्यंते' तेनोक्तं 'अस्मद्राज्ये' चिलातस्य च तत्रागमनसमीहायां भूपतिना तस्याऽभयं दापयित्वा स तत्र समानीतः। अन्यदा च श्रीवीरे समवसृते शत्रुंजयनृपे सपरिकरे सपौरजने च वंदनार्थं निर्गते सति चिलातेनोक्तः श्रावकः 'क्वैष जनो याति' तेनोक्तं स 'एष रत्नवणिक्समागतोऽस्ति, तत्रैव गच्छत्यसौ' सुतीर्थं चिलातेन समं ययौ जिनदेवः स्वामिसमीपे। स्वामिना च द्रव्यभावरत्नस्वरूपं रत्नद्वयं वर्णितम्। तत्र च भावरत्नानि ज्ञानादीनि जिनदर्शितानि। तच्च समाकर्ण्य प्रतिबुद्ध चिलातः श्रामण्यमंगीकृतवान् ११।

अथोत्तरगुणप्रत्याख्याने दृष्टांतस्तथाहि, वाराणस्यां नगर्यां मासान्मासात् भोजिनौ धर्मघोषधर्मयशसौ द्वौ यती स्थितौ। तौ चतुर्थपारणके प्रथमपौरुष्यां स्वाध्यायं द्वितीयायां पौरुष्यां तु ध्यानं विधाय पात्रमप्रत्युपेक्ष्य चलितौ मार्गे चोष्णा भिहतौ तृषाक्रांतौ गंगायां नद्यां सचित्तं मनसापि जलपानीयं पातुमनिच्छंतौ। तदा च तद्गुणावर्जिता गंगादेवता गोकुलानि विकुर्वित्वा तयोर्दध्यादिविहरणनिमंत्रणामकार्षीत्। तदा च तावुपयुज्य तं देवतापिंडमवगम्य न गृहीतवंतौ, परन्तु देवतया दुर्दिनं विकुर्वितं, तदनु तौ ग्रामे गत्वा पारणकं कृते। एवं ताभ्यां पिंडविशुद्धिरूपोत्तरगुणप्रत्याख्यानपालनं न क्वापि त्यक्तं संकटेऽपि, तथान्यैरपि तदनुसरणं च विधेयम् १२।

अथ द्रव्यभावव्युत्सर्गे निदर्शनं तथाहि, कलिंगेषु दधिवाहनराजापत्यस्य करकंडुर्नृपतिः। स च गोकुलप्रियः तेन

चैकः सलक्षणः सौरभेयः पोषितः पयोभिः । स च यौवनं गतः समभूद् युद्धेऽन्यवृषभाजेयः । अथ च स महाकायः स्थविरत्वे पड्डकैः परिघृष्यमाणस्तेन दृष्टः । दृष्ट्वा च स चिंतयामास यस्य शब्दमात्रेणापि सुतीक्ष्णशृंगा बलिष्ठा दीप्ता अपि वृषभा भग्नाः प्राक्, स एव सांप्रतं गतदर्पो गलन्नेत्रश्लथदशनरदच्छदः पङ्करूपरिघर्षणं क्षमते । तद्धिगस्तु संसारासारतां यत्रेदृशी विषमदशा तादृग्विधशक्तियुक्तस्यापि समायातेत्यादि चिंतयन् प्रत्येकबुद्धो विजहार वसुंधरावलये गृहीतव्रतः । अथ द्विमुखसंबंधस्तथाहि—पाञ्चालेषु द्विमुखनामा नृपः । स चान्यदाऽनेकपताकापरिमंडितजननिवहपूजितं महेन्द्रध्वजमपश्यत् । अथ च तमेव कियद्दिनातिक्रमे क्षमायाममेध्योपरि निपतितं गच्छदागच्छज्जनेनोपानत्पदादिभिश्च घृष्यमाणं निरीक्ष्य प्रतिबुद्धः प्रत्येकबुद्धः समभूत् । अथ नमिकथा । मिथिलायां युगबाहुमदनरेखासूनुर्नमिनामा नृपस्तस्य चान्यदा वैद्यैरसाध्यः षण्मासावधिमहादाहज्वरः समभूत् । तस्य किंचिदुपशांतिकृते विलेपनार्थं देव्यश्चंदनघर्षणं कुर्वंति । तदा च वलयध्वनिना भवनमापूर्यते नृपो भणति मम कर्णाविर्दतस्तदनु देवीभिः सर्वाणि वलयान्यपनीय मांगल्यकृते एकैकं वलयं स्थापितम् । तदा चैकत्वान्नोत्पद्यते ध्वनिः । नृपेण पृष्टं 'किं न श्रूयते वलयरवः' परिवारेणोक्तं 'सैकमातेषाम् ।' एतदाकर्ण्य नृपश्चिंतयामास बहूनां दुःखं न त्वेकस्य तद् यद्ययं रोगः शाम्यति तदा प्रव्रज्यां स्वीकरोमि । तदा च कार्त्तिकी-पूर्णिमा वर्तते । स चैवं चिंतयित्वा प्रसुप्तः प्रभातप्रायायां यामिन्यामात्मानं मेरूपरि श्वेतकुञ्जराभिरूढं पश्यति स्म । अथ च तूर्यरवेण प्रतिबुद्धो निरामयो हृष्ट-तुष्टश्चिंतयामास स उत्तमतमः स्वप्नो मया दृष्टो । पुनश्चिंतयामास एवंविधगुणः पर्वतः क्वापि मया दृष्टपूर्वोऽस्ति तस्य चैवं चिंतयतो जातिस्मृतिरुत्पेदे । यत् पूर्वं मनुजजन्मनि श्रामण्यमनुपाल्य पुष्पोत्तरविमाने

••

'मोक्षमार्गप्रयत्नेषु निर्ग्रंथेषु ब्रह्मचारिण्य-
घटसे तदा किं परनिंदा करोषि निजहित कर्तुकामः' एव तेनोक्ते करकंडूः प्राह 'भासिअव्वा
हितार्थं वारयतं दोषवादीति वक्तु न युक्तम् । यदार्षे रूसउ वा परो मा वा, विसं वा परिअत्तऊ ।
हिआ भासा, सपक्खगुणकारिआ ॥ १ ॥ ज्वलति दारूणि उपेक्षितानि तु न चिरेणापि ज्वलंति घट्टितानि पुनर्झटित्येव
ज्वलंति तस्मादघट्टना प्रेरणा सहनीया ।' एवंविधा करकंडूदत्ता हिता शिक्षा तैः प्रपन्ना । कालेन चत्वारोऽप्यपुनर्भवं प्राप्ताः ।
एतेषां काष्ठखडपरिहारो राज्यपरिहारश्च द्रव्यव्युत्सर्गः, क्रोधादित्यागस्तु भावव्युत्सर्गः २५ ।
अथाऽप्रमादः कार्य इत्यत्रोदाहरणं, राजगृहे जरासधनृपस्य द्वे नर्त्तक्यौ मगधसुंदरीमगधश्रीनाम्न्यौ । तयोर्मध्यान्म-
गधश्रिया दुष्टचित्तया मगधसुंदरीनाटकाह्वे रगभूमौ कर्णिकारकुसुमेषु सौवर्णिका विषभाविताः केसरमध्यः शून्यः क्षिप्ता-
स्तन्मारणाय । ताश्च दक्षतया मगधसुदरीमहत्तरिकया विज्ञाताः । तदनु 'भृंगाः कर्णिकाराणि नाश्रयंति सहकारेषु लीयंत '
इति प्रकटमापणे ग्रामीणत्व मवेत्ततस्तया मंगलगीतावसरे पठितं 'पत्ते वसतमासे, आमोअपमोयए पवत्तम्मि ।
मुत्तूणं कण्णिआरे, भमरा सेवंति चूअकुसुमाइं ॥ १ ॥' इति महत्तरिकया पठिते मगधसुंदर्या चिंतितमपूर्वा
गीतिका । ततो ज्ञात सदोषाणि कर्णिकाराणीति तानि परिहृतान्यप्रमत्ततया । एव यतिनाप्यप्रमत्तेन भवितव्यम् २६ ।
अथ क्षणे यतिसामाचार्यनुष्ठेयेत्यत्र दृष्टातयोजना तथाहि–भृगुकच्छे केनचिदाचार्येण विजयनामा विनेयः कस्मिश्चित्
प्रयोजने विशालायां प्रहितोऽभूत् । स चातरा ग्लानादिकार्यव्याक्षिप्तोऽकालजलदवर्षणेन हरितपनकपककजलसूक्ष्मप्राण्यादि-
विराधनाभिया नटपिटकग्रामे नागगृहे ज्येष्ठकल्प कृतवान् । तत्र च स्थितश्चिंतयामास । यत्र मे गुरुकुलवासस्तं च विना

स्वतत्रया न भीमवीर्यकरामा वयिहापि च विदधामीति विचिन्त्य स्थापनाचार्यं चकार, तद्गुरुम सकलपरिक्रिया अनुष्ठित वान् किं मे वदे किं ममयिस्याद्युपयोगशाम्। यथाऽनेन धर्मे धर्मे परिसामाचार्यानुपयोगः कृतस्तथान्यैर्विधेयः २७।

अथ ध्याने संवरयोगे निदर्शनं यथादि–शावर्धनपुरे मुदसिंहो नृपतिः। स च पुष्पभूतिसूरिभिः ममगोपासकम। तेषां च शिष्यः पुष्यमित्रो बहुश्रुतः। स चान्यदाऽन्यत्र ग्राम वर्तते, समीपस्थितास्तु शिष्या अगीतार्थाः। अथ च गुरुभिः सम्यग्ध्यानकर्तृकामैः पुष्यमित्रः समाहूतो बहुश्रुतित्वात् तं च द्वारे स्थाप्याप्यावरकेऽवस्थाय ध्यानं प्रारब्ध तेः। स च द्वारस्थः कस्या पुत्रा इति, नृपः समागात् पुष्यमित्रेण मम्पगुक्तेऽपि न मत्यवः कस्माचिदपि चिरे। एक कथयति ' अस्मदायेन श्रीगुरुशरीरे वासी वेतालं साधयन्ति ' ततस्तु नृपेण श्रीगुरुदेहदाहार्थं शिबिका कृता तदा च पुष्यमित्रेण पूर्वसंकेतात् स्पृष्टोऽङ्गुष्ठः श्रीगुरुस्तत्र तदा च प्रबुद्धाः प्राहुः श्रीवत्सः ' किमिति मे ध्यानव्याघातः कृतः '। तेनोक्त ' ममीतार्थैर्नृपानुविनयैरिदम् ' ततः ध्यानं श्रीगुरुभिः कृतम्, एवं तदन्यैरपि विधेयम् २८।

अथ मरणावसरेऽपि न मुनिवध्यमयोदाहरणं, रोहीतकपुरे ललिता गोष्ठी। तस्य रोहिणीगणिका मत्तो निष्पादयति। अन्यदा च तेन इदं संस्कृतम्। तत्र कटुकं सिद्धाय माधवचन्दाराचार्ये धर्मरुचेर्वितीर्णम्। तेन च क्षीण हिमाभिपातोऽप्य प्रतिक्रम्य स्वयमेव भक्षितम्। ततमप्यबलस्य तीव्रवेदनामधिमह्य स सिद्धः। यथाऽनेन मरणावसरे मोता तथाऽन्यैरपि मा महनीया २९।

अथ संगपरिज्ञायां दृष्टांतस्तथाहि–चंपायां जिनदेवनामा सार्थपतिः श्रमणोपासकः । स चोद्घोषणापूर्वं ससार्थोऽहि-च्छत्रां प्रति चचाल । मार्गे च पाटच्चरैः सार्थे लुटितेऽरण्यं प्रविष्टस्तत्र च पुरतो वह्निभीतिः पृष्टतस्तु व्याघ्रभयम् । उभयतस्तु प्रपातभयं स भीतोऽशरणं ज्ञात्वा भावलिंग प्रपद्य स्वीकृतसामायिकः प्रतिमया स्थितः श्वापदैर्भक्षितो गतो निर्वृतिम् । यथानेन संगा ज्ञपरिज्ञया ज्ञाताः प्रत्याख्यानपरिज्ञया च प्रत्याख्यातास्तथा ज्ञेयाः प्रत्याख्येयाश्च ३० ।

अथ प्रायश्चित्तकरणे उदाहरणं, श्रीधनगुप्तसूरयच्छद्मस्था अपि तथेंगिताकारादिभिश्चेतोऽध्यवसायं विज्ञाय प्रायश्चित्तं ददति, यथाऽतिचारशुद्धिरधिकतरा निर्जरा च भवेत् ३१ ।

मरणांताराधने तु मरुदेवीनिदर्शनं, यथा तया मरणांते आराधना कृता तथाऽन्यैर्विधेया ३२ । इति भाविता योग-संग्रहेषु दृष्टांताः ।

तथा त्रयस्त्रिंशदाशातना वर्जनीयास्तत्राद्यो लाभः सम्यग्दर्शनाद्यवाप्तिरूपस्तस्य शातनाः खंडना आशातनास्ताश्च श्रीगुर्वविनयसंभवा इमाः–श्रीगुरोः पुरतो गमने १ तथोभयोः पार्श्वयोर्गमने २ पृष्ठतोऽप्यासन्नगमने ३ एवं त्रिधा कायो-त्सर्गणादिरूपे ऊर्ध्वस्थाने ६ निषदने च ९ तथा गुरोः पूर्वमाचमने १० गमनालोचने च ११ निशि विकाले वा श्रीगुरु-वचनाऽप्रतिश्रवणे १२ आलाप्यस्य गुरोः पूर्वमालापने १३ अशनादेः पूर्वं शैक्षस्यालोचने १४ एवमुपदर्शने १५ निमंत्रणे १६ श्रीगुरुमनापृच्छ्य स्वेच्छयाऽन्यस्मै स्निग्धमधुराद्यादिदाने १७ श्रीगुरुणा सार्थं भोजने स्निग्धमधुराद्या स्वादने १८ श्रीगुरौ व्याहरति तद्वचनाऽप्रतिश्रवणे १९ श्रीगुरुं प्रति कर्कशोक्तौ २० आक्रन्दितस्य स्थानस्थिततयैवोल्लापवितरणे २१ श्रीगुरोः

कृतं २१ । हीनाक्षरता २२ । अधिकाक्षरता २३ । पदहीनता २४ । विनयहीनता २५ । उदात्तादिघोषहीनता २६ । सम्यगनि-
हितयोगोपचारता २७ । अल्पश्रुतार्हपात्रस्य गुरुणा बहुशास्त्रदानं २८ । कलुषितातरात्मना विनयेन दुष्टुप्रतीच्छितता २९ ।
अकालस्वाध्यायकरणम् ३० । कालस्वाध्यायाकरणम् ३१ । अस्वाध्यायिके स्वाध्यायकरणम् ३२ । स्वाध्यायिके स्वाध्याया-
करणम् ३३ । एवमेकविधासंयमादित्रयस्त्रिंशदाशातना पर्यंतानि प्रमादपदानि त्याज्यान्येव सर्वदा सर्वविरतैः ॥

इति श्रीमत्तपगच्छालङ्कारहारभट्टारकघटाकोटीरहीर–श्रीसोमजयसूरीश–शिष्यशिरोमणि–श्रीइंद्रनंदि-
सूरिराज–विनेयाणु सिद्धांतसारसकलिते श्रीमद्दर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरपर्याये
श्रीऋषभदेशनाभिधानाया तृतीयलहर्यां सर्वविरतिवर्णननामा तुर्यस्तरंगः संपूर्णः ॥

